* श्री सर्वेश्वरो जयति *

— श्री भगवन्निम्बार्क महामुनीन्द्राय नमः —

आद्याचार्य-अनन्त श्री भगवन्निम्बार्कमहामुनीन्द्रविरचित—

वेदान्तकामधेनु (दशश्लोकी) भाष्य-स्वरूपा—

निखिल शास्त्र पारावारीण श्री १०८ श्री पुरुषोत्तमाचार्य कृता—

# * वेदान्तरत्न-मञ्जूषा *

सा च—

द्वैताद्वैतमार्तण्ड-विद्यावागीश तर्कतीर्थ पं० प्रवर श्री अमोलकराम शास्त्रि-

सम्पादित-कुञ्चिकाख्य-व्याख्या-समलंकृता—

विद्याभूषण-सांख्य-साहित्यादितीर्थ-श्री व्रजवल्लभशरण वेदान्ताचार्य—

विरचितया दीपिकाप्रकाशभाषाटीकया विभूषिता—

त्यागी पंडित श्री विहारीदासमहोदयेन स्वद्रव्यतः प्रकाशिता


श्री निम्बार्काब्दाः ५०४२

वृत्तिः ५०० — विक्रमाब्दाः २००५ आषाढ़ शु० १५ गुरु पूर्णिमा

मूल्यम् ५) पञ्च रूप्यकम्

प्रथम — राधापद गोस्वामी, श्री कृष्ण प्रिंटिंग, प्रेस, वृन्दावन।

५००

श्रीसर्व्वेश्वरोजयति

* श्रीनिम्बार्क महामुनीन्द्राय नमः *

# समर्पणम्

श्रीमद्व्रजवल्लभ-ललित-लीलानिरत ! व्रजलीला स्थल प्रदर्शक !
श्री श्रीनाथजी आदि दिव्य मूर्ति प्रदायक ! निरन्तर व्रज-
चौरासी कोशप्रदक्षिणाकारक ! अहर्निशि श्रीव्रजेश्वर
प्रेम निमग्न ! विदेहवपु ! मञ्जुलमोहनकरकमलो-
द्ग्रंथितजटाजूट ! श्री केशवकाश्मीरिसे
सप्तम व्रजाधिपति यतीश्वर श्रीचतुर-
चिन्तामणि देव ! व्रजदूलह
श्रीनागाजी महाराज !

समस्त व्रज आपको आधादूत आधेपत समर्पित करता आरहा है
किन्तु आपका यह अकिञ्चन तुच्छजन सर्वविध असमर्थ
है, अतः आपही की प्रेरणा से प्रकाशित कुञ्चिकाख्य
संस्कृत टीका तथा दीपिका प्रकाश भाषाटीका
सहित यह श्रीवेदान्तरत्नमंजूषा आप ही के
करकमलों में समर्पित है, हे प्रभो अब
आपही इसमें से अपने भक्तों के
हृदय में यथोचित रत्नों का
प्रकाश फैलाकर विश्व में
शांतिप्रसार करें ।

आपके—
श्र चरणों का दीनदासानुदास
पं० बिहारीदास त्यागी

❀ श्रीनिकुञ्जविहारिणे नमः ❀

❀ श्रीभगवन्निम्बार्काचार्य महामुनीन्द्राय नमः ❀

निखिलशास्त्रपारावारीणेन—

श्री १०८ पुरुषोत्तमाचार्येण प्रणीतः

# वेदान्त-रत्नमञ्जूषाख्यो ग्रन्थः

श्री पं० अमोलकरामशास्त्रिसम्पादित

कुञ्चिकाख्यटीकासमलंकृतः

भाषानुवादसहितश्च

स च

ब्यावर नगर वास्तव्य जोशीत्युपाह्वविद्यानिधि—

भूतपूर्व प्रोफेसर श्रीरामप्रतापशास्त्रिविद्याभूषण

महोदयैः श्रीवृन्दावनस्थाग्रवालमुद्रणालये मुद्रापयित्वा प्रकाशितः

प्रथमावृत्तिः ५०

विक्रम सं० १९९८

रसिक-शिरोमणि श्री १०८ श्रीस्वामी हरिदासाचार्य सं० ४६१

मूल्यं भगवद्भक्तिः

* श्रीनिकुञ्जविहारी विजयतेतराम् *

* पूज्यपाद श्री१०८ महामुनीन्द्र भगवन्निम्बार्काचार्यचरणकमलाभ्यां नमः *

# वेदान्त रत्नमञ्जूषाख्यो ग्रन्थः

अनादिनिवृत्तिपथप्रवर्तकब्रह्मविद्योपदेशकलोकाचार्य्य श्रीसनन्दनादिप्रवर्तित श्री १०८ परमकारुणिकमहामुनीन्द्रभगवन्निम्बार्काचार्यचरणोपबृंहितवैदिकसत्सम्प्रदायानुगतनिखिलशास्त्रपारावारीण स्वाभाविकद्वैताद्वैतसिद्धान्तसमर्थनदक्ष श्रीविश्वाचार्यचरणशिष्यश्रीपुरुषोत्तमाचार्येण विरचितः

तस्य च—

भगवदवतार श्री१०८ सनन्दनादि प्रवर्तितसत्सम्प्रदायानुगत श्री१०८ निखिलरसिकचक्रचूड़ामणि श्रीस्वामिहरिदासपदाश्रिताश्रित श्री१०८ स्वामिनीशरणपादपद्मचञ्चरीकेण कुरुक्षेत्रान्तर्गतपुण्डरीनगरलब्धजनिना श्रीवृन्दावनवास्तव्येन गौड़वंशावतंसश्रीशालिग्रामोपाध्यायात्मजेन हरिप्यारिदेव्या गर्भजेन तर्कादिशास्त्रविदुषा तर्कतीर्थ तर्करत्न तर्कवागीशोपाधिविभूषितेनामोलकरामशास्त्रिणा-कुञ्चिकाख्यटीका भाषानुवादसहिता च विरचिता तया समलंकृतः

स च

व्याघ्रनगर निवासि जोशीत्युपाह्व विद्यानिधि भूतपूर्वनागपुरस्थ गवर्नमेण्ट मौरिसकालेजेति संज्ञक महाविद्यालयप्रधानसंस्कृताध्यापकैः तथा नागपुरस्थविश्वविद्यालयानेकसमित्यध्यक्षसंस्कृतपाली प्रकृतादिविभागाधिपति

श्रीभगवन्निम्बार्कसम्प्रदायाश्रिताश्रितैः—

**प्रोफेसर——श्रीरामप्रतापशास्त्रिविद्याभूषण,**

महोदयैः श्रीवृन्दावनधामस्थाग्रवालमुद्रालये मुद्रापयित्वा प्रकाशितः।

प्रथमावृत्ति
५००

विक्रम सं० १९९८
रसिक-शिरोमणि श्रीहरिदासाचार्य सम्वत् ४६१

मूल्य
भगवद्भक्तिः

# वेदान्तरत्नमञ्जूषा विषयानुक्रमणिका

श्रीवेदान्तरत्नमञ्जूषाख्यग्रन्थस्य कोष्ठेषु निरूपितार्थाः
बुद्धिसौकर्यार्थं सङ्ग्रहेणात्र प्रकाश्यन्ते ।

पदार्थरत्नसंग्रहात्मक प्रथमकोष्ठविषयाः



इति प्रथमश्लोकविषयाः ।

प्रत्यगात्मनो ज्ञानं स्वाभाविकं नित्यधर्मश्चेत्तादृशस्वरूपं
कुतो नानुभूयत इति शङ्कामपनोदनाय द्वितीयश्लोकारम्भः।

* श्रीः *

# भूमिका

को न जानात्यासेतुहिमाचलं निखिलकल्याणगुणाकरस्य भगवतः श्रीहंसावतारस्य शिष्याः त्रय्यन्तार्थप्रतिष्ठापका अनादिनिवृत्तिपथाधिरूढा अविद्याकर्मवासनारुचिप्रकृतिसम्बन्धरूपैः संसृतिचक्रावयवैरनवरतं भ्राम्यमाणानां चेतनानां संसारान्मोक्षणशक्तयन्विता वेदोक्तनिवृत्तिधर्मप्रवर्त्तका लोकाचार्याः सनन्दनादयश्चत्वार इति । तदुक्तं भगवता श्रीमद्भागवते एकादशस्कन्धे 'एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः । सर्वतोमन आकृष्य मय्यद्धावेश्यते यथा ॥" मोक्षधर्मेऽपि 'स्वयमागतविज्ञाना निवृत्तिधर्ममाश्रिताः" एके योगविदो मुख्याः लोकाचार्याः प्रकीर्तिताः । श्रीभागवते ब्रह्माप्याह—'तप्तं तपो विविधलोकसिसृक्षयामे आदौ सनात्स्वतपसःस चतुः सनोऽभूत । प्राक्कल्पसंप्लवविनष्टमिहात्मतत्वं सम्यग् जगाद मुनयो यदचक्षतात्मन् इति । श्रीमद्भगवद्गीतायामपि—"महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा मद्भावा मानसा जाता येषां लोक इमा प्रजा ॥" महर्षयो वेदतदर्थद्रष्टारः सप्त भृग्वादयस्तेभ्योऽपि पूर्वे प्रथमजाश्चत्वारो महर्षयः सनकादयः, तथा मनवः स्वायम्भुवाद्या इत्यर्थः । भक्तवृन्दवन्दितचरणारविन्दयुगलः परमकारुणिकः, श्रीदेवर्षिनारदस्तेषां पदाश्रितः । निखिलभुवनजन्मस्थितिलयलीलाप्रवर्त्तकानन्दकन्दनन्दनन्दन श्रीकृष्णावतारसामयिको निरतिशयाचिन्त्यानन्तशक्तिवैभवो निरवधिकरुणावरुणालयो-जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुरवनितलावतीर्णो भगवान्सुदर्शनावतारो द्वैताद्वैत सिद्धान्तप्रकाशकः श्रीनियमानन्दाख्य आचार्य्यः श्रीदेवर्षिनारद शिष्यतां गतः । तदुक्तं भविष्यत्पुराणे 'सुदर्शनो द्वापरान्ते कृष्णाज्ञप्तो जनिष्यति । निम्बादित्य इति ख्यातो धर्मग्लानिं हरिष्यति" इति । सच वादरायणीयसूत्रार्थप्रकाशकशारीरकमीमांसा वाक्यार्थरूपवेदांतपारिजातसौरभाख्यग्रन्थरचनाव्याजेन सर्ववेदान्तार्थं संग्रहेण संदर्भयामास ॥

तस्य गम्भीराशयत्वमाकलय्य मन्दमतीनां सर्वशास्त्रार्थं जिज्ञासूनां शिथिलप्रयत्नानां शास्त्रार्थविचारासमर्थानां मुमुक्षूणामुपकारार्थं वेदान्तरत्नभूतां शास्त्रार्थकामधेनुं दशश्लोकीमपि निर्ममे । तस्या अतिगम्भीरार्थगर्भतया तदर्थेषु बुद्ध्यवतार-

णार्थमतिप्रौढपाण्डित्येनातिविसृत्वरस्वकीर्तिकिरणधवलीकृतसर्वदिङ्मण्डलेन श्रीसनक- सम्प्रदायप्रवर्तकाचार्यश्रीनिम्बार्कमतानुयायिश्रीविश्वाचार्यचरणारुणमकरन्दभृङ्गेण श्रीपु-रुषोत्तमाचार्य्येण वेदान्तरत्नमञ्जूषाख्या दशश्लोकिटीका व्यरचि ॥

सन्ति च शतशः सहस्रशः श्रुतिसूत्रस्मृतयश्चिदचिद्ब्रह्मरूपतत्वत्रयाभिधायिन्यः। ब्रह्मसूत्रनिर्मात्रा श्रीकृष्णद्वैपायनव्यासाचार्येणोपक्रमसूत्रे जिज्ञास्यं जिज्ञासुस्तद्-ज्ञानमूलभूता त्रिगुणात्मिका मायाचेति तत्वत्रयं प्रदर्शितमन्यथा जिज्ञासानुपपत्तेः। 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्मह्येतत्। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षरमुच्यते। उत्तमः, पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।" इति ॥ तत्रापि चिद्वर्ग भिन्नो ज्ञानस्वरूपो ज्ञातृत्वकर्तृत्वादिधर्मकोऽहमर्थरूपो भगवदायत्तस्वरूपस्थिति प्रवृत्तिकोऽणुपरिमाणकः प्रतिशरीरभिन्नो वन्धमोक्षार्हश्चित्पदार्थः ॥ तस्माद्वा एतस्माद्वा मनोमयादन्योऽन्तरात्मा विज्ञानमयः ॥ यथा सैन्धवघनाऽनन्तरोऽवाह्यः कृत्स्नप्रज्ञानघन एव "अत्रायं पुरुषः स्वयं ज्योतिर्भवति" 'अविनाशी वारेयमात्मा ऽनुच्छित्तिधर्मा" "अथ यो यं वेद पुरुष एव द्रष्टा श्रोता रसयिता मन्ता वोद्धा" "जानात्येवायं पुरुषः" "ज्ञोऽतएव" 'कर्त्ता शास्त्रार्थवत्त्वात्" "एष एव साधु कर्मकारयति अणुर्ह्येष आत्मा ऽयं वा एते सिनीतः पुण्यं पापम्"। "वालाग्रशतभागस्य शतधा कल्पितस्य च ॥ भागो जीवः स विज्ञेयः सचानन्त्याय कल्पते" 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" 'उत्क्रान्तिगत्यागतीनाम्" 'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्। "तद्गुणसारत्वात्तद्व्यपेदश प्राज्ञवत्" "नित्यो नित्यानां चेतन-श्चेतनानाम्" 'अंशो नानाव्यपदेशात्" "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" 'निरञ्जनः परमं साम्यमुपैति" 'न स पुनरावर्त्तते" "अनिवृत्ति-शब्दात्" इत्यादीनि क्रमशः उक्तार्थ साधकानि श्रुतिसूत्राण्यनुसन्धेयानि ॥

अचित्पदार्थस्त्रिविधः। प्राकृताप्राकृतकालभेदात्। तत्र गुणत्रयाश्रयीभूतं द्रव्यं प्राकृतं तच्च नित्यं परिणामादि विकारि च। "गौरनाद्यन्तवती जनित्री भूतभाविनी सितासिता च रक्ता च सर्वकामदुघा विभोः" अजामेकामित्यादिश्रुतिभ्यः। अथाप्राकृतं नाम त्रिगुणप्रकृतिकालात्यन्तभिन्नमचेतनञ्च प्रकृतिमण्डलभिन्नदेशवृत्ति नित्यविभूतिविष्णुपदपरमव्योमपरमपदब्रह्मलोकाभिधेयम्।" आदित्यवर्णं तमसः परस्तात् सोऽध्यक्षः परमे व्योमन् "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः"। इति। "मत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतमिति" श्रीमुखवचनञ्चात्रानुसन्धेयम्। तत्र धाम भगवदीयानादिसङ्कल्पात्तस्य तदीयानां नित्यमुक्तानाञ्च भोग्यादिरूपेणो

नेकरूपं परिणामादिविक्रियानर्हञ्च कालातीतत्वात् । कालमुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः । अथ प्राकृताप्राकृतोभयभिन्नोऽचेतनद्रव्यविशेषः कालो- नित्यो विभुश्च ।

अथ नित्यमिह वै पुरुषः प्रकृतिकाल इत्यादिश्रुतेः । सदेव सोम्येदमग्र आसीदिति श्रुतौ सृष्टेः प्राक् अग्रशब्दवाच्यस्यकालस्य सत्यत्वश्रवणाच्च । ब्रह्मपदार्थस्तु वक्ष्यमाणजगत्कर्तृत्वादिगुणगणाश्रयपरब्रह्मनारायणवासुदेवशब्दाभिधेयः सर्वेश्वरः श्रीपतिः, श्रीकृष्ण एव चिदचिद्ब्रह्मपदार्थानां तत्तत्पठितैस्तत्तद्गुणस्वरूपादिविशेषत्व- बोधकैर्वाक्यैरितरेतरवैलक्षण्यमुपदिश्यते । "सदेव सोम्येदमग्र आसीत तत्त्वमसि" "अयमात्मा ब्रह्म" सर्वं खल्विदं ब्रह्म" "त्वं वा अहमस्मि भगवोदेवते" 'तदात्मानमेव वेदाहं ब्रह्मास्मि" इत्युभयपरवचनैश्चिदचितोर्ब्रह्मतादात्म्यमुपदिश्यते । "नित्यो नित्यानां चेतनश्चेतनानां बहूनां योविदधाति कामान् ज्ञाज्ञौ द्वावजावीशानीशौ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नभिकाचशीति" "प्रधानक्षेत्रज्ञपतिगुणेश" "अक्षरात्परतः परः सर्वस्य वशी सर्वस्येशानः" एको वशी सर्वगः कृष्ण ईड्यः" 'अन्तः प्रविष्ट, शास्ता जनानाम्" 'य आत्मनि तिष्ठन्ना- त्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम्" "एषते आत्माऽन्तर्याम्यमृतः संसार बन्ध- स्थितिमोक्षहेतु रित्यादि भेदाभिप्रायिभ्यः श्रुतिभ्यः ॥ भेदव्यपदेशाच्चान्यः । भेदव्यपदेशाच्च । अनुपपत्तेस्तु न शारीरः । कर्म कर्तृ व्यपदेशाच्च । पत्यादिशब्देभ्यः । अधिकन्तु भेदनिर्देशादित्यादि सूत्रेभ्यः । 'इन्द्रियाणि मनो वुद्धिः सत्त्वं तेजोवलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च । ससुरासुरगन्धर्वसयक्षोरगराक्षसम् । जगद्वशे वर्त्ततेदः कृष्णस्य सचराचरम् । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् । विष्णुशक्तिः परा प्रोक्ता चेतनाख्या तथा परा । ममैवांशो जीवलोके जीवभूतः सनातनः द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मे युदा- हृतः । अज्ञोजन्तुरनीशश्चस्वात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गंश्वभ्रमेव वा । दासभूताः स्वतः सर्वे ह्यात्मनः परमात्मनः नान्यथा लक्षणं येषां बन्धे मोक्षे च विद्यते । तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्र- मिवाम्भसा । कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते । स सप्तदशकेनापि राशिना युज्यते पुनः । तथान्तरात्मा मम च येचान्ये देह संज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचिदिति भेदविषयकेतिहासपुराणादिवाक्येभ्यः । प्रत्यगात्म ब्रह्मणो भेदोऽभिधीयते भेदविषयकश्रुतिस्मृतिसूत्रपुराणवाक्यानामत्यन्ताभेद

वादिमते निर्विषयत्वापत्त्या बाधः प्रसज्येत। तथात्वे चार्धनास्तिकतापत्तिर्दुर्वारा। अयं दोषोऽत्यन्तभेदवादिमतेऽपि समानः। तन्मतेऽभेद वाक्यानां बाधप्रसङ्गात् नह्येकविध वाक्यबाधं विना केवलभेदोऽभेदो वा समर्थयितुं शक्यते। द्वैताद्वैतसिद्धान्ते तु, उभयविधवाक्यानां न कथमपि विरोधः शंकनीयस्तेषां क्षेत्रक्षेत्रज्ञप्रकृतिपुरुषक्षरा-क्षरादिशब्दाभिधेयस्य जड़चेतनजातस्य ब्रह्मात्मकत्वतद्व्याप्यत्वतदधीनत्वादि हेतुभिर्ब्रह्मणो भिन्नत्वं सर्वात्मत्वसर्वव्यापकत्वस्वतन्त्रसत्वादिभिर्भिन्नत्वं तस्येति प्रतिपादनेन चरितार्थत्वात्। तथाहि। 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा यच्च किञ्च जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। अहमात्मा गुड़ाकेश सर्वभूताशयस्थितः। इन्द्रियाणि मनोबुद्धिरिति। यदासीत्तदधीन मासीद्। सर्वस्य वशी सर्वस्येशानः। आत्मा हि परमः स्वतन्त्रोऽधिगुणः। जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः। सत्वं स्वतन्त्रमुद्दिष्टं तच्च कृष्णे न चापरे। अस्वातन्त्र्या-तदन्येषामसत्वं विद्धि भारत। किमनेन जगन्नाथ सर्वंत्वद्वशगं जगदिति" यद्यदायत्त-स्थितिप्रवृत्तिकं वस्तु तत्तदभेदव्यपदेश्यमिति व्याप्तिमामनन्ति छान्दोगाः प्राणेन्द्रिय-सम्वादे" न वै वाचो न चक्षूंषि न मन इत्याचक्षते" प्रसिद्धानां प्राणायत्तत्वादेव प्राणा-भिन्नत्वमिति॥ तथा भेदव्यपदेशश्च क्षेत्रक्षेत्रज्ञपरमात्मनां स्वरूपस्वभाववैलक्षण्य प्रतिपादनेन मुख्यार्थतयैव सूपपन्नः 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद नान्ये-तोऽस्ति द्रष्टा" द्वितीयाद्वै भयं भवतीत्यादि भेदव्यपदेशनिषेधास्तु परमात्मेतरस्वतन्त्र-त्वावच्छिन्नवस्तुनिषेधेन सूपपन्नाः। एवञ्च न कस्यापि वाक्यस्य विरोधाशङ्का-गन्धोऽपि। अतएव च भेदविषयकाणामभेदविषयकाणाञ्च वाक्यानां परस्परं बाध्यबाधकभावोऽपि वक्तुं न शक्यस्तुल्यबलत्वात्। इदमेव तात्पर्यं हृदिनिधाय भगवान् श्रीसूत्रकारो व्यासाचार्य्यः परस्परविरुद्धार्थकानां भेदवाक्यानामभेदवाक्यानाञ्चा-विरोधेन समन्वयप्रकारप्रदर्शनाय चेतनाचेतनयोर्ब्रह्मणा स्वाभाविकभेदाभेदसम्बन्ध-स्यैव नैर्दोषत्वव्यवस्थापनाय घटकसूत्राणि प्रणीतवान्। 'अंशो नाना व्यपदेशादन्यथाचापिदाशकितवादित्वमधीयते एके उभयव्यपदेशात्त्वहि कुण्डलवत्' "प्रकाशाश्रयवद्वा तेजस्त्वादिति" 'बहुधा वहून् प्रविष्टः त्वमेकोऽसि बहुधा बहून् प्रविष्टः।" इत्याद्या घटकश्रुतयश्च।

तस्मादस्य शास्त्रस्य विषयो ब्रह्मशब्दाभिधेयः सर्वज्ञः स्वाभा[illegible]चिन्त्यानन्त यावदात्मवृत्तिगुणशक्त्याद्याश्रयो भगवान्वासुदेवः श्रीपुरुषोत्तमः। विषयविषयिभाव लक्षणः सम्बन्धस्तत्रोक्तलक्षणसम्पन्नो मुमुक्षुरधिकारी भगवद्भावापत्तिलक्षणो मोक्षोऽत्र प्रयोजनमिति।

पं० श्रीमदमोलकराम शास्त्री

# ※ वेदान्तरत्नमञ्जूषा ※

श्री १०८ महर्षि सनकसम्प्रदायप्रवर्त्तकाद्याचार्य्यभगवत्सुदर्शनचक्रावतारमहा-मुनीन्द्रश्रीनिम्बार्क्कपादपद्माश्रिताश्रितभगवत्पुरुषोत्तमाचार्य्यप्रणीता ।

मू०—योब्रह्मेशसुरर्षिवन्दितपदो वेदान्तवेद्योहरि-
स्तं वन्दे मनसा गिरा च शिरसा श्रीश्रीनिवासं गुरुम् ।
कण्ठे यस्य चकास्ति कौस्तुभमणिर्वेदान्ततत्त्वात्मको
भक्तिः श्रीर्हृदये शरण्यमगतेः कारुण्यसिन्धुम्मुदा ॥ १ ॥

श्रीपं० अमोलकरामशास्त्रिकृता वेदान्तरत्नमञ्जूषा टीका भावदीपिका ।
[ श्री ६ महन्त पं० कल्याणदासपादपद्माश्रित श्रीराधिकादासकृत
दीपिकाप्रकाशनामक भाषाऽनुवाद सहिता ]

शारदेन्दीवरश्यामं सर्व्वप्राणिसुखाकरम् । अहं वन्दे प्रभुं देवं निम्बार्क्कं देशिकं विभुम् ॥ १ ॥

रक्ताम्भोरुहदर्पभञ्जनमहासौन्दर्य्यनेत्रद्वयं
मुक्ताहारविलम्बिहेममुकुटं रत्नोज्ज्वलत्कुण्डलम् ।
वर्षामेघसमाननीलवपुषं ग्रैवेयहारान्वितं
वन्दे कुञ्जविहारिणम्प्रतिदिनं राधानिवासालयम् ॥ २ ॥
आनन्दामृतवर्षिमेघसुखदम्माधुर्य्यरागास्पदं
श्रीवृन्दावनवासलभ्यरतिदं वैराग्यसिन्धूद्भवम् ।
श्रीराधाचरणारतालिसुखदं नित्यं नवीनं सदा
वन्दे श्रीहरिदासपादनलिनं सन्तप्ततापच्छिदम् ॥ ३ ॥

## भाषाऽनुवाद ।

शरदृतु में उत्पन्न नीलकमलों के तुल्य श्यामकान्ति से सुशोभित, प्राणिमात्र के सुखदाता—ईश्वर-स्वरूप, और गुणों से देदीप्यमान, सर्व्वव्यापक, सनकसम्प्रदायके प्रवर्त्तक आद्याचार्य्य श्रीनिम्बार्कभगवानको मैं प्रणाम करता हूं॥१॥

रक्तकमलगर्वापहारी महासौन्दर्ययुक्त नेत्रों से सुशोभित, शिर पर

मुक्ताहारजटित स्वर्णमुकुट धारण किये हुये, कानों में रत्नखचित कुण्डलद्वय से शोभायमान वर्षाकालीन मेघ के समान नीलविग्रह, हारविभूषितकण्ठ तथा श्रीराधिकाजी के प्राणजीवन श्रीकुञ्जविहारीजी को प्रतिदिन ( वारंवार) प्रणाम करता हूं ॥२॥

आनन्दरूप अमृतवर्षी लोकोत्तर मेघ के समान सुखदायक, श्रीवृन्दावनवाससे अभिव्यक्त श्रीहरिचरणारविन्द की प्रीति को बढ़ानेवाले, श्रीराधाचरणारविन्दसेवापरायण सहचरीवृन्दके सुखदायक, माधुर्यभाव के एकस्थान, सांसारिकतापनाशक नित्यनवीन रसिकचक्रचूड़ामणि श्रीस्वामी हरिदासजीके चरणकमलों को मैं वारंवार वन्दन करता हूं ॥३॥

## भावदीपिका ।

प्रारीप्सितस्य ग्रन्थस्याविघ्नपूर्व्वकसमाप्त्यर्थं स्मृतिशिष्टाचारसिद्धं भगवदाचार्य्यवन्दनरूपं मङ्गलमाचरति—यो ब्रह्मेति । एतस्य श्लोकस्य व्याख्या द्विविधा परमेश्वरविषयिकाऽऽचार्यविषयिका चेति, तत्र परमेश्वरपरत्वेनादौ व्याक्रियते । यो लोकवेदप्रसिद्धोहरिरस्ति तं वन्द इत्यन्वयः । भगवन्तं विशिनष्टि-ब्रह्मेति । ब्रह्मा चतुर्म्मुखः, ईशः शिवः सुरर्षिः सुराणां ऋषिः श्रीनारदस्तैर्वन्दितौ पादौ यस्य स तथोक्तः । एतेन चतुर्म्मुखादिभ्यः परतमत्वं श्रीभगवतोदर्शितम्भवति । "तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम्, स कारणं कारणाधिपाधिप" इत्यादि श्रुतिभ्यः । न तावत्प्रत्यक्षप्रमाणेन ब्रह्मावगन्तुं शक्यतेऽतीन्द्रियत्वात् तथाचेन्द्रियार्थसन्निकर्षजन्यज्ञानस्य प्रत्यक्षत्वमिति निर्विवादम् । इन्द्रियार्थसन्निकर्षानर्हस्य तस्येन्द्रियार्थत्वाभावेन सुतरां तज्जन्यप्रत्यक्षविषयत्वाभावः । अनुमानस्य स्वतन्त्रप्रमाणत्वविरहेण नानुमानादिगम्यं ब्रह्म किन्तु शास्त्रै कसमधिगम्यमित्याह । वेदान्तेति विद्यते ज्ञायते तत्त्वमेभिरिति वेदाः धर्म्मब्रह्मप्रतिपादका अपौरुषेयवाक्यानि "हलश्चेति घञ्" तेषामन्तो निश्चयोऽत्रेति वेदान्ताः 'वेदान्तविज्ञानसुनिश्चितार्था इति वेदार्थनिश्चयम्प्रति वेदान्तविज्ञानस्य हेतुत्वश्रवणात् । यद्वा वेदस्यान्ताः शिरोभागाः "ऋचां मूर्द्धानं यजुषामुत्तमाङ्गं साम्नां शिरोऽथर्वणां मुण्डमुण्डम्" इति कौषीतकीश्रुतेः उपनिषदस्तैर्वेद्यम् । उपनिषत्प्रयोज्यज्ञानविषयीभूतमित्यर्थः ।

## भाषाऽनुवाद ।

निर्विघ्न ग्रन्थसमाप्ति के उद्देश्य से ग्रन्थारम्भ में स्मृति तथा शिष्टाचार से सिद्ध मङ्गल करना आवश्यक है । अतएव इस ग्रन्थ के आरम्भ में भी प्रथम श्लोक द्वारा श्रीआद्याचार्य्य की वन्दना ही मङ्गलाचरण है ।

प्रथम श्लोक की व्याख्या दो प्रकार की है । पहिली आचार्य्यविषयिणी

दूसरी परमात्मविषयिणी। पहिले ईश्वरविषयक व्याख्या की जाती है। लोक तथा शास्त्रप्रसिद्ध भगवान् श्रीहरि को मैं मन, वाणी तथा शिरद्वारा प्रणाम करता हूं। चतुर्मुख ब्रह्मा, शिव और देवर्षि श्रीनारद द्वारा वन्दित चरणारविन्द। इस विशेषण से यह सूचित किया गया कि श्रीभगवान् सर्व पूज्य हैं। तमीश्वराणां इत्यादि श्रुति से बोध होता है कि जो लोक में ईश्वर कहे जाते हैं उनके भी ईश्वर भगवान् श्रीकृष्णचन्द्र हैं और सब देवताओं के भी परम देवता हैं। वह पुरुषोत्तम भगवान् लोकसिद्ध प्रत्यक्षादि प्रमाणों से नहीं जाना जा सकता। क्योंकि वह प्राकृत इन्द्रियों का विषय नहीं है। अतः केवल वेदान्त-शास्त्र प्रमाण से जाना जाता है। "वेदान्त" शब्द का क्या अर्थ होता है इस जिज्ञासा में 'वेदान्त' शब्द का अर्थ प्रकाशित करते हैं कि धर्म्म तथा परमात्मा का यथार्थ ज्ञान जिनसे होता है वह अपौरुषेय वाक्य वेदशब्द से व्यवहृत होते हैं। उन वेदवाक्यों का अन्त अर्थात् निश्चय जिस शास्त्र द्वारा हो उसे वेदान्त (शास्त्र) कहते हैं। "वेदान्तविज्ञान सुनिश्चितार्था" इस श्रुति द्वारा निर्णीत है कि वेद के अर्थ का निश्चय वेदान्त से ही होता है। अथवा वेदों का अन्त अर्थात् शिरोभाग (उपनिषद्) उससे ही भगवत्तत्त्वका यथार्थ ज्ञान होता है। यह अर्थ ऋचां मूर्धानं इ० श्रुति से सिद्ध है। इस अर्थ को प्रमाणित करने के लिये कुछ श्रुयियां उद्धृत की जाती हैं। "तन्त्वौपनिषदम्" इ० श्रुतियाँ ऐसा प्रतिपादन करती हैं कि भगवान् श्रीकृष्णचन्द्र केवलउपनिषदों से जाने जा सकते हैं। 'वेदान्तवेद्य' इस विषेशण से "शास्त्रयोनित्वात् ब्र०सू० १।१।३।" का अर्थ प्रदर्शित किया। उपर्युक्त सूत्रार्थ यह है कि (श्रीपरमात्मा) प्रत्यक्ष तथा अनुमानादि प्रमाणों से वेद्य (जानने योग्य) नहीं है केवल शास्त्रप्रमाण से ही वेद्य है। यहां पर वेद शब्द से वेद के अविरुद्ध अर्थबोधक पुराण और स्मृतिका भी ग्रहण करना उचित है क्योंकि पुराण भी वेदार्थ का ही प्रतिपादन करते हैं। जो वेद के अर्थका बोधक है वह भी उसके अन्तर्गत समझा जाता है। यह सब विषय छान्दोग्योपनिषद् में श्रीभगवत्सनत्कुमार तथा देवर्षि श्री नारद जी के सम्वाद में स्पष्टतया वर्णित है। "सहोवाच ऋग्वेदं भगवोऽध्येमि" इति।

चारों वेद, महाभारत, पञ्चरात्र तथा मूल रामायण—ये सर्व ग्रन्थ शास्त्र शब्द से व्यवहृत होते हैं। इनसे व्यतिरिक्त शुष्क तर्कों से परिपूर्ण ग्रन्थों का शास्त्र शब्द से व्यवहार नहीं होता। यह सब वार्ता "ऋग्यजुः सामाऽथर्वा च" इस स्मृति से सिद्ध है।

टीका—यद्यपि हरिशब्दस्य नामाधर्माविच्छिन्ने शक्तिरभिधाने न व्युत्पादिता तथाऽपि वेदान्तवेद्यत्वादिविशेषणसाहचर्य्यात् हरिशब्दस्य श्रीपुरुषोत्तमः श्रीकृष्णपदार्थः, तस्य सर्वपापहरणशीलत्वात् सर्व्वजनमनोहारित्वाच्च। मनसेति। मनसा भगवद्गुणचिन्तनं, गिरा नामसहितनमस्कारोच्चारणं तद्गुणस्तु

तिश्च, शिरसा अभिवादनम् । "सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रताः। नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते" गी० अ० ९ । १४ । "श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् । अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्" । श्रीमद्भा० स्कं० ७ । ५ । २३ । इति स्मृतिभ्यः । हरिशब्दस्यानेकार्थत्वानुरोधेन तं विशिनष्टि । श्रीश्रीनिवासमिति । श्रिया शोभया युक्तः श्री श्रियः रुक्मिण्या निवास इति मध्यमपदलोपिसमासः । विश्वहितोपदेष्टाऽपि स एवेत्याह—गुरुमिति । ब्रह्मादि स्थावरान्तस्य हितोपदेष्टा सर्व्वसुहृत्त्वात् "सर्व्वस्य शरणं सुहृदि" ति श्रुतेः । "निवासः शरणं सुहृदि" ति भगवद्वचनाच्च यद्वाऽन्धकारनाशकमित्यर्थः । "गुशब्दस्त्वन्धकाराख्योरुशब्दस्तन्निरोधकः । अन्धकार विरोधित्वाद्गुरुरित्यभिधीयते" इति निरुक्तेश्च । वेदान्तप्रतिपाद्यं यत्तत्त्वं ब्रह्म-तदेवात्मा अन्तर्य्यामितया यस्यानन्तय्र्यसंज्ञकजीवविशेषस्य स ब्रह्मतत्त्वात्मक इत्यर्थः । कौस्तुभमणिर्यस्य भगवतः श्रीपुरुषोत्तमस्य कण्ठे चकास्ति—प्रकाशते यस्य श्रीहरेर्हृदये श्रीः प्रेमाधिष्ठात्री श्रीवृषभानुजा भक्तिः स्वरूपशक्तिश्च चकास्ति । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" । "ह्लादिनी सन्धिनी सम्वित् त्वय्येका सर्वसंस्थितौ । ह्लादतापकरी मिश्रा त्वयि नो गुण वर्जिते" । इति श्रुतिस्मृतिभ्याम् । "कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः । तत्प्रभाव्यापिनी साक्षाच्छ्रीवत्समुरसा विभुः" । श्रीमद्भा० स्कं० १२ । ११ । १० । इति श्रीसूतोक्तेः । पुनः किम्भूतं हरिम् । यस्य कुत्रापि गतिर्नास्ति एवम्भूतस्यागतेर्जीवस्य शरण्यं रक्षकम् ।

परदोषक्षपणस्वभावः कारुण्यं तस्य सिन्धुं सागरम् । कारुण्य शब्द उपलक्षणार्थः । सौन्दर्य्यमाधुर्य्यमार्द्दवसौशील्यवात्सल्यबलवीर्य्यैश्वर्य्यानन्ताचिन्त्यासङ्ख्येयकल्याणगुणसागरमित्यर्थः ।

## भाषाऽनुवाद ।

कोई शंका करे कि हरिशब्दके अनेक अर्थ होते हैं। फिर यहां पर हरिशब्दसे श्रीभगवान् का ही ग्रहण क्यों किया जाता है । इस शङ्का का उत्तर इस प्रकार है—वेदान्तवेद्यत्वादि विशेषणों के साहचर्य ( साथमें होने ) से यहां पर हरिशब्द का अर्थ श्रीपुरुषोत्तम भगवान् ही ग्रहण करना चाहिये। क्योंकि वह अपने आश्रित जनों के पापों को नष्ट करते हैं और अपने दर्शकों का मन हरण कर लेते हैं। साधक को उचित है कि मनसे श्रीभगवद्गुणों का सर्वदा चिन्तन करे । वाणी द्वारा श्रीकृष्ण गुणगान एवं नामोच्चारण करता रहे [illegible] शिरसे श्रीभगवान के चरणकमलों में प्रणाम करे । प्रमाण में श्रीमद्भगवद्गीता का श्लोक उद्धृत किया जाता है—" ( वे महात्मा ) मेरे गुणों और विशिष्टलीलाद्योतक नामों का स्मरण कर हर्ष से पुलकित तथा गद्गदकण्ठ होकर माधव मुकुन्द मधुसूदन वासुदेव श्रीकृष्णादि नाम तथा स्तोत्रादिकों का सर्वदा कीर्त्तन करते

हुए, मुझको प्रसन्न करने के लिये मेरी पूजा वन्दना आदि में तत्पर अर्थात् भजनमें विक्षेप को नहीं सहन करते भाव यह कि विशेषकारी अपने सम्बन्धियों की भी उपेक्षा करते हुये अत्यन्त प्रेमसे साष्टाङ्ग दण्डवत् प्रणाम करते हुये क्षण-मात्र भी मेरे वियोग को सहन करने में असमर्थ होकर मेरी उपासना अर्थात् सेवा में ही अपना जीवन उत्सर्ग कर देते हैं।" श्रीमद्भागवत का प्रमाण भी उद्धृत करते हैं। "श्री श्यामसुन्दर के गुणानुवाद, नामकीर्त्तन तथा नाम-माहात्म्यादि का श्रवण, श्रीभगवन्नामादि का उच्चारण-कीर्त्तन, श्रीकृष्ण के मुरलीमनोहरादि स्वरूपों का चिन्तन नाम स्मरण इसी प्रकार श्रीपुरुषोत्तम-भगवान्के चरणकमलों का संवाहन-पादसेवन, श्रीगोपालमूर्त्ति का पूजन-अर्चन, श्रीराधावल्लभ के सामने साष्टाङ्ग दण्डवत् प्रणाम-वन्दन, मैं प्राणवल्लभ का अकिञ्चन दास हूं तथा वे मेरे स्वामी हैं-इस प्रकारकी दासत्वभावना-दास्य, श्रीभगवान् से मित्रत्वभावना करना-सख्य, सम्बन्धियोंसहित श्रीगोपीनाथ के चरणारविन्द में अपने को समर्पण कर देना—आत्मनिवेदन।" (यही नवधा-भक्ति के लक्षण हैं।)

हरिशब्द के अनेक अर्थ होते हैं अतएव 'श्रीश्रीनिवास' इस विशेषण का उपादान किया है यहाँ पर प्रथम श्री शब्द शोभार्थक है द्वितीय श्री शब्द ऐश्वर्याधिष्ठात्री लक्ष्मी श्रीरुक्मिणी का बोधक है वह हरि प्राणिमात्र के हित के उपदेश प्रदान करने वाला है इस कारण से सबों का गुरु है जिस हरि के कंठ प्रदेशमें कौस्तुभमणि चमक रही है वेदान्ततत्त्वात्मक यह कौस्तुभमणि का विशेषण है वेदान्त शास्त्रसे बोधिततत्त्व अर्थात् ब्रह्म है वह आत्मा (अन्तर्यामी) अनन्तर्य संज्ञक जीव विशेषका। अर्थात् कौस्तुभमणि भी नित्यमुक्त आनन्तय नाम का जीव है। यह वार्ता श्रीमद्भागवत स्कन्ध १२ अ०। ११। श्लोक १० में स्पष्ट है जिस भगवान के हृदय-अन्तःकरण में श्री शब्द वाच्य प्रेमाधिष्ठात्री श्रीभानुजा और भक्ति (स्वरूपशक्ति)विराजमान है "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल क्रिया च" इस श्रुति से उक्त अर्थ प्रमाणित होता है। वह भगवान् अकिञ्चनजनों के रक्षक हैं और कारुण्य तथा वात्सल्यादि गुणों के सागर हैं अब आचार्यविषयिणी व्याख्या इस प्रकार है। श्रीपुरुषोत्तमाचार्यजी अपने परमगुरु श्रीश्रीनिवासाचार्य जी को प्रणाम करते हैं इसीसे यह सूचन किया [illegible] मुमुक्षुजनों को आचार्य चरणही उपाय और उपेय रूपसे आश्रयण करना उचित है।

आचार्य्यपक्षे व्याख्यानमुच्यते। श्रीपुरुषोत्तमाचार्य्यः सकल लोकस्य हितं चिकीर्षुं भगवत्पाञ्चजन्यावतारं निरतिशयवात्सल्यकारुण्यादिगुणसागरं निजाश्रितजनसंरक्षणलब्धदीक्षं ब्रह्मरुद्रेन्द्रादिकिरीटेडितपादपीठ वेदान्तैकवेद्य परब्रह्मादिशब्दाभिधेयश्रीपुरुषोत्तमाज्ञयाऽवनितलावतीर्णं जगदुद्दिधीर्षुं निजपरमगुरुं श्रीश्रीनिवासाचार्य्याभिधं प्रणमति—यो ब्रह्मेशइति। तं श्रीश्रीनिवासमाचार्य्यमहं वन्द इत्यन्वयो वक्तव्यः। अहमित्युपलक्षणं श्रेयोऽर्थिभिर्मुमुक्षुभिराचार्यचरणावेवोपायत्वेनोपेयत्वेन वरणीयावित्यर्थः। नचात्र श्रीशब्दस्य द्विधा निवेशप्रयुक्तपौनरुक्त्यमितिवाच्यम्। तेषां नाम्नः श्रीघटितत्वात्। तस्यैव भगवद्भावं विधत्ते-हरिरिति आचार्य्यावताररूपो भगवान् हरिरित्यर्थः आचार्य्यस्यापि भगवच्छक्त्युपबृंहिताचिन्त्यशक्तित्वेन तत्त्वाभिधानस्याविरुद्धत्वात्। "यस्य देवे पराभक्तिर्यथादेवे तथा गुरौ। तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः। आचार्य्यदेवोभवेत्यादिश्रुतेः"। यस्य श्रीनिवासाचार्य्यस्य कण्ठे वेदान्ते यत्तत्वा वाच्यतया भगवान् वासुदेवः सएवात्मास्वरूपो यस्य ग्रन्थस्य स वेदान्ततत्त्वात्मकः वादरायणीयसूत्रस्य भाष्यरूपवेदान्तकौस्तुभग्रन्थः स मणिरिव चकास्ति द्योतते यस्य श्रीगुरोः हृदये भक्तिः पराध्रुवास्मृतिरूपा चकास्ति मुदा हर्षेण अयमाद्याचार्याणामसाधारणो धर्म्मो यत् श्रीकृष्णाङ्घ्रियुग्मे भक्तिमत्वं तदुक्तं क्रमदीपिकायां चतुर्थपटले "विप्रं प्रध्वस्तकामप्रभृतिरिपुघटानिर्मलाङ्गं गरिष्ठां भक्तिं कृष्णाङ्घ्रिपङ्केरुहयुगलरजोरागिणीमुद्वहन्तम्। वक्तारं वेदशास्त्रागमविमलपथां सम्मतंसत्सु दान्तं, विद्यायाः संविवित्सुः प्रणततनुमना देशिकं संश्रयेत" इति। गुरुं विशिनष्टि—अगतेः सर्वोपायशून्यस्य पुंसः शरण्यं शरणं रक्षितृत्वं तत्र साधु शरण्यस्तं। परदोषक्षपणस्वभावस्य कारुण्यस्य सिन्धुं सागरम्। अत्र शार्दूलविक्रीडितं वृत्तम्। प्रथमश्लोकेन शास्त्रप्रवृत्तिप्रयोजकोऽनुबन्धचतुष्टयः प्रदर्शितः, तथाहि सर्ववेदान्तवेद्योजगज्जन्मादिकर्तृत्वाश्रयो ब्रह्मरुद्रेन्द्रवन्दितचरणः सर्वशरण्यः मुक्तोपसृप्योहेयप्रत्यनीकानन्तकल्याण गुणगणोभिन्नाभिन्नत्वाश्रयः परब्रह्माख्यो भगवान् श्रीकृष्णोऽस्य शास्त्रस्य विषयः। 'मुमुक्षुर्भूत्वात्मन्येवात्मानं पश्येदितिश्रुतेः' भगवद्भावापत्तिकामोमुमुक्षुरस्य शास्त्रस्याधिकारी। शास्त्रविषययोः प्रतिपाद्यप्रतिपादकभा[illegible]। भगवद्भावापत्तिः प्रयोजनमिति। तदुक्तं "प्रारम्भे सर्वशास्त्राणामनुबन्धचतुष्टयम् विद्वद्भिः प्रोच्यते सर्वैरन्यथा स्यादसम्बद्धता" इति प्रथमश्लोकार्थः।

## कुञ्जिका का भाषानुवाद ।

प्रथम श्लोक की व्याख्या आचार्य पक्ष में दिखलाते हैं, श्रीश्रीनिवासाचार्यों को मैं बन्दना करता हूं। मुमुक्षुजनों को आचार्य्यचरण ही उपाय और उपेयरूप से आश्रय करने चाहिए। श्री श्रीनिवास यहां पर श्री शब्द को दो बार उच्चारण से पौनरुक्त्य दोष की सम्भावना है। इस शङ्का का निवारण इस प्रकार है कि आचार्य्य चरणों का नाम श्री घटित है अर्थात् श्रीनिवास है। प्रथम श्री शब्द का शोभा अर्थ है उन्हीं की भगवद्रूपता स्फुट करने के लिये हरि कहा, भगवान् ही आचार्य रूप से प्रादुर्भाव होते हैं। आचार्य में भी भगवतप्रदत्त अचिन्त्य-शक्ति विराजमान है, जिस श्री श्रीनिवासाचार्य्य महाराज के कंठ में वेदान्ततत्वात्मक । वेदव्यास-प्रणीत सूत्रों का भाष्यरूप वेदान्त कौस्तुभ ग्रन्थ, मणि के समान देदीप्यमान है और जिन्हों के हृदय अर्थात् मन में अनवच्छिन्न तैलधारावत् भगवान् का स्वरूप और गुण विषयक स्मृति सन्तानरूपा पराभक्ति प्रकाशित हो रही है। श्रीकृष्ण के चरण कमलों में भक्ति होना भी आचार्य का असाधारण धर्म है यह वार्त्ता क्रमदीपिका के चतुर्थ पटल श्लोक सं०२ में स्पष्ट है। जिसको मंत्र ग्रहण करने की इच्छा हो उसे इस प्रकार का गुरू करना चाहिये कि ब्राह्मण हो, जिसके चित्त में काम, क्रोध और लोभ, मोह, मद मत्सरता न हो और भगवान् श्रीकृष्णचन्द्रजी के कमलयुग में रागयुक्त प्रेम-लक्षण भक्ति युक्त हो, वेदशास्त्र और आगम ( तन्त्रशास्त्र ) इन्हीं के सिद्धान्तों का ज्ञाता हो। सज्जनों से सन्मानित और जिसने अपनी इन्द्रिय और मन वश में करे हो और तन-मन से नम्र हो, सर्व उपाय रहित जनों का रक्षक हो, ये गुरु के लक्षण हैं, अपने आश्रित-जन के दोषों को दूर करने का नाम कारुण्य है उसके आप सागर हैं। इस प्रथम श्लोक का छन्द शार्दूल विक्रीडित है विषय प्रयोजन और सम्बन्ध अधिकारी इन चारों का नाम अनुबन्ध चतुष्टय है यह शास्त्र के आरम्भ में हुआ करते हैं, यहां पर वेदान्त वेद्य भगवान् श्रीकृष्णचन्द्र इस शास्त्र का विषय है। भगवद्भावापत्ति प्रयोजन है विषय-शास्त्र का प्रतिपाद्य प्रतिपादक सम्बन्ध है। अर्थात् शास्त्र ही से भगवान् जाने जाते हैं, भगवत साम्यापत्ति रूप-मुक्ति का चाहने वाला इस वेदान्त-शास्त्र का अधिकारी है। यहां तक प्रथम श्लोक की व्याख्या है।

## कुञ्जिका !

सम्प्रति ग्रन्थव्याख्योपक्रमः तत्र स्वप्रणीतग्रन्थस्य प्रयोजनं वदन्नाचार्य्यावतारादि प्रयोजनमुपक्षिपति—इह खल्वित्यादिना।

## वेदान्त रत्न मञ्जूषा ।

इह सकल ब्रह्मरुद्रादिकिरीटकोटिवन्दितपादपीठेनानन्ताचिन्त्य-स्वाभाविकस्वरूपशक्तिवैभवेन ज्ञानबलैश्वर्य्यवीर्य्यकारुण्यवात्सल्यदया-

तितिक्षाद्यनन्तकल्याणगुणार्णवेन जगज्जन्मादिहेतुना सर्वश्रुतिशिरोरत्न-वेदान्तवेद्यचरणेन रमानिवासेन भगवता श्रीवासुदेवेन विष्णुनाऽस्म-त्स्थापितवेदमार्गसंरक्षणाय नियुक्तो १

## कुञ्चिका

इहेति शास्त्रे वेदे लोके चेत्यर्थः । सकलैः प्राणिमात्रैः, ब्रह्मा-चतुर्मुखः, रुद्रः शिवस्तावादिर्येषामिन्द्रादिदेवानां तेषां किरीटानां कोटिभिरग्र-भागैर्वन्दितः स्तुतः पादयोः पीठः सिंहासनो यस्य स तेन, एतेन चतुर्मुखादिभ्यः परतमत्वं भगवतो दर्शितं भवति। "तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम् । यं सर्वे नमन्ति मुमुक्षवो ब्रह्मवादिनश्च, तमेकं गोविन्दं सच्चिदानन्दविग्रहम् । वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या तोषयामीत्यादि श्रुतिभ्यः । तथा वैष्णवेऽपि "एते वयं वृत्ररिपुस्तथाऽयं नासत्यदस्रौ वरुणस्तथैव च । इमे च रुद्रा वसवः ससूर्याः समीरणाग्निः प्रमुखास्तथाऽन्ये । सुराः समस्ताः सुरनाथ कार्य्यमेभिर्मया यच्च तदीश सर्व्वम् । आज्ञापयाज्ञां प्रतिपालय तस्तथैव तिष्ठाम सदास्तदोषाः" इति । तस्य ब्रह्म-शिवादिवन्द्यत्वे हेतुमाह अनन्तेति । अनन्ताः परिच्छेदशून्या, अचिन्त्या इयत्ता-वच्छेदेन चिन्तयितुमनर्हाः स्वाभाविक्यः स्वरूपवद् यावदात्मभाविन्योऽनादिसिद्धाऽघटघटनापटीयस्यः शक्तयः, वैभवा यस्य स तेन "न तत्समश्चाभ्यधिकश्च दृश्यते, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे" ति श्रुतेः । 'ज्ञानं,' सर्व्वं देशकालवस्तुविषयकप्रत्यक्षानुभवरूपम् ! 'बलं' विश्वधार-णादिशक्तिः । 'ऐश्वर्य्यं' नियमनशक्तिः । 'वीर्य्यम्' परैरनभिभूयमानत्वे सति पराभिभवनसामर्थ्यम् । 'कारुण्यम्' परदोषक्षपणस्वभावः । 'वात्सल्यम्' भृत्यदोषाननुसन्धानम् । 'दया' निर्हेतुक परदुःखदुखित्वे सति तन्निराचिकीर्षा । १

## कुञ्चिका का भाषानुवाद ।

अब प्रस्तुत ग्रन्थकी व्याख्याका प्रारम्भ किया जाता है । अपने बनाये हुये ग्रन्थ का प्रयोजन बतलाते हुये श्रीमदाचार्य्य के अवतारादि का प्रयोजन कहते हैं । जिन लोकवेदप्रसिद्ध श्रीभगवान् श्यामसुन्दरके चरणारविन्दमें प्राणि-मात्र तथा चतुरानन ब्रह्मा, महादेव, इन्द्रादि देवता अपने मुकटकोटि को नवा कर वन्दना करते हैं । इस वाक्यद्वारा ब्रह्मादिकों से श्रीश्यामसुन्दर का श्रेष्ठत्व दिखलाया है । प्रमाण में निम्नाङ्कित श्रुतियों के अवतरण देखिये—" ईश्वरों के परम महेश्वर को, देवताओं के परमदेव को । " सब मुमुक्षु और ब्रह्मवादी जिनको नमस्कार करते हैं, श्रीवृन्दावन के कल्पवृक्ष के नीचे नित्य स्थित सच्चिदानन्द स्वरूप उन एक गोविन्द को ही ४९ मरुद्गण सहित निरन्तर परम स्तुति से सन्तुष्ट करता हूं " ।

मूल श्रुति में 'सततं' शब्द से श्रीभगवान् का वृन्दावन में नित्य निवास सूचित किया। अतएव आपकी लीला नित्य है तथा विष्णु पुराण में भी कथा है कि श्रीहरिके दिव्य विश्व ( विराट् ) रूप को देख कर श्रीब्रह्माजी ने उन ( श्रीकृष्ण ) की स्तुति की। " हमारे तथा इन्द्रादि देवोंके करने योग्य जो कार्य हो उसके लिये हे सुरनाथ ! हमको आज्ञा दीजिये। उस आज्ञा का पालन करते हुये हम सब देवता सदा दोषरहित होकर स्थित रहें "। भाव यह है कि ब्रह्मा और शङ्कर आदि देवताओं के गति ( प्राप्य ) श्रीपुरुषोत्तम भगवान् ही हैं। उन ( श्रीकृष्ण ) का ब्रह्मशिवादि द्वारा भी पूज्य होने का कारण बतलाते हैं—अनन्त (अपरिमित) तथा अचिन्त्य-विचार में न आने योग्य, स्वाभाविक अनादि सिद्ध अघटनघटनापटीयसी शक्ति वैभवयुक्त "उन ( श्रीकृष्ण ) के समान और उनसे अधिक कोई दिखलाई नहीं देता" इत्यादि श्रुति प्रमाण हैं।

## वेदान्त रत्न मञ्जूषा।

निरतिशयात्मप्रिय आत्मशक्त्यु पबृंहितानन्तशक्तिः स्वहस्ताधारको निजायुधः कोटिसूर्य्यसमप्रकाशो भगवान् सुदर्शनोऽवनितलावतीर्ण-स्तैलङ्गद्विजवरात्मना तस्मिन्नेवदेशे नियमानन्दाभिधो भगवदीयां सनातनीं कलौ नष्टां वेदान्तसन्तति प्रवर्त्तयिष्यन् शारीरिकमीमांसा वाक्यार्थरूप वेदान्त पारिजात सौरभाख्यादिग्रन्थरचनाव्याजेन

## कुञ्चिका।

" तितिक्षा " सहनशीलता आदिना सौन्दर्य्य सौहार्द सौशील्य सर्वशरण्य सौम्य स्थिरत्वादयोग्राह्याः। भगवतः कल्याण धर्मानाह 'जगजन्मेति' जन्मआदिर्यस्य स्थितिभङ्गस्येति जन्मादि जगत जन्मादि तस्यहेतुः तेन सकल विश्वस्य जन्माद्यभिन्ननिमित्तोपादानकारणेनेत्यर्थः। एतेन ब्रह्मलक्षणमुक्तम् "यतो वाइमानि भूतानि जयन्ते, 'जन्माद्यस्ययत' इतिश्रुति सूत्राभ्याम्" इदमुप-लक्षणम्. शास्त्रयोनित्व, मोक्षप्रदत्व, सर्व कर्मफलप्रदत्व, विश्वाधारत्व, सर्व-व्यापकत्व, सर्वनियन्तृत्व. निरतिशयसूक्ष्मत्व. निरतिशयमहत्व, सर्वानतिक्रम-णायत्वादयोऽसंख्याता धर्माग्राह्या तच्चाग्रेस्फुटी भवष्यति। तत्रमानमाह-'सर्वेति' सर्वासा श्रुतीनां शिरसि रत्नानि वेदान्ताः परतत्वप्रधाना मंत्रब्राह्मणभागा ह्युपनिषद ताभिर्वेद्यौ चरणौ यस्य स तेन। श्रुतीत्युक्तयाऽपौरुषेयत्वान्निर्दोषत्वं सूचितम्। शिरःपदेनानन्यपरत्वं विवक्षितम्। सातिशयसुखसाधनभूत दुःखात्मक प्रवृतिनिवृतिरूपं प्रयोजनं पूर्व काण्डे प्रतिपादितम् ब्रह्मवासुदेवस्तु स्वयं निरतिशयानन्द रूपतया परमपुरुषार्थभूत उपरितनभागे प्रतिपादितः। एतेन समन्वयाधिकरणार्थः सूचितः रमा रुक्मिण्याख्या तस्या निवासो यत्र स तेन "र[illegible]वेऽभवत्सीता रुक्मणी कृष्णजन्मनि" इति पराशरोक्तेः। "भगवत" 'षड्गुण सम्पन्नत्वेन'तदुक्त श्रीपराशरेण "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना"। वसुदेवस्यापत्यं पुमान्वासुदेवः श्रिया युक्त सतथोक्तस्तेन। वेवेष्टि सर्वं मितिविष्णुः सर्वव्यापकस्तेव। अवतार

प्रयोजनमाह "आत्मेति. आत्मना स्थापितो यो वेद मार्गः सम्प्रदायः सम्यग् प्रदीयते गुरुणा शिष्याय इति तदर्थं। तस्य रक्षणाय नियुक्तो नितरां योजितः प्रेरित इति यावत्। भवदीयाज्ञास्वावतारहेतु रित्यर्थः।

## कुञ्चिका का भाषानुवाद ।

'ज्ञान'—सब देश, काल और वस्तु का प्रत्यक्ष अनुभव। 'बल'-सम्पूर्ण जगत् को धारण आदि करने की शक्ति। ऐश्वर्य-सब को नियम में रखने की शक्ति। 'वीर्य'--स्वयं दूसरों से पराजित न होकर दूसरों को जीत लेना। 'कारुण्य' परदोषादर्शन। 'वात्सल्य' अपने सेवक के दोषों का अनुसंधानराहित्य। दया पराये दुःख से दुःखित होकर निःस्वार्थभाव से उस दुःख का निराकरण करने की इच्छा। 'तितिक्षा'--सब कुछ सहन कर लेने का स्वभाव। आदि पद से सौन्दर्य, माधुर्य, सौहार्द, सुशीलता, सर्वरक्षितृत्व, सौम्यत्व तथा स्थिरता आदि गुण ग्रहण करना चाहिये।

अब श्रीभगवान् के कल्याण गुणों का वर्णन करते हैं। सम्पूर्ण जगत् की उत्पत्ति स्थिति और नाश के अभिन्ननिमित्तोपादान कारण रूप। इससे ब्रह्म का लक्षण कहा गया "जिससे यह सब भूत--प्राणी उत्पन्न होते हैं, जिस (ब्रह्म) से जगत की उत्पत्ति आदि होती है" इत्यादि श्रुति सूत्रों से। शास्त्रयोनित्व मोक्षदातृत्व, सर्वकर्मफलप्रदत्व आदि असंख्य कल्याणगुणों का यह उपलक्षण है। इन गुणों का स्पष्टीकरण आगे किया जायगा।

सब श्रुतियों के शिरोमणि रूप परतत्त्व प्रधान मन्त्र ब्राह्मणभाग उपनिषदों से जिनके युगल चरणारविन्द जानने योग्य हैं। "श्रुति" इस उक्ति से अपौरुषेयत्व होने के कारण निर्दोषता सूचित की गई।

परमपुरुषार्थ भूत सातिशय सुखका साधन भूत दुःख रूपप्रवृत्ति और निवृत्तिरूप प्रयोजन पूर्वकाण्ड में प्रतिपादित ( निरूपण ) किया गया। ( श्रीवसुदेव ) निरतिशय आनन्द रूप परमपुरुषार्थ उपरितनभाग में प्रतिपादन कियागया है। इससे ब्रह्मसूत्रान्तर्गत समन्वयाधिकरण का अर्थ प्रदर्शित किया। रमा अर्थात् श्रीरुक्मिणी के निवास स्थान "श्रीरामावतार में सीता तथा श्रीकृष्णावतार में श्रीरुक्मिणीजी हुई" यह पराशर महर्षि ने कहा है। भगवान्—छःगुणयुक्त, जैसे कि छःहोंगुण पराशरजी ने कहे हैं—"सम्पूर्ण ऐश्वर्य, धर्म, यश, श्री, ज्ञान और वैराग्य, इन छ की 'भग' संज्ञा है। श्रीमान् वसुदेवनन्दन सर्वव्यापक

## वेदान्त रत्न मञ्जूषा ।

स्यव

सर्वं वेदान्तार्थं संग्रहेण संदर्भया मास। तत्र च विधिप्राप्तोपनयनादि संस्कृताधीतषडङ्ग श्रुति जिज्ञासित धर्ममीमांसा निरस्त कर्मफलादि विषय सन्देहकतत्फलनिर्विण्ण भगवद्दिदृक्षा लम्पट।

## कुञ्चिका ।

निरतिशया साम्यरहिता स्वस्यप्रिया आत्मनः स्वस्य भगवतः या शक्तिस्तया उपबृंहितावर्द्धिता अनन्ता परिच्छेदशून्याःशक्तयो यस्मिन्सः। स्वहस्ते-धारयतीति स्वहस्ताधारकः। "निजायुधः" निजस्य स्वस्यायुधः शस्त्रविशेषः। कोटिसूर्य्यतुल्यप्रकाशः "भगवान्" षड्गुण सम्पन्नः सुदर्शन इति श्रीसुदर्शन-चक्रावतारः। तैलंगो देशविशेषः तस्मिन् येद्विजा महीसुरास्तेषां वरःश्रेष्ठ आत्मा-स्वरूपं यस्य स तेन एषा तृतीया धान्येन धनवानितिवद्भेदे,अन्वयश्चास्य श्रीसुदर्शन पदार्थे। निरुक्तद्विजवरात्माभिन्न श्रीसुदर्शन इतिबोधः। "नियमानन्दा भिधः" इति। तदर्थस्तु श्रीदेवाचार्य पादैर्वृत्तः "नियमेन यदानन्दो जगद्भासयतेऽखिलं। तमहं नियमानन्दं कृष्णं वन्दे जगद्गुरुम् ॥" तथाचोक्तं भविष्यपुराणे "सुदर्शन द्वापरान्ते कृष्णाज्ञप्तो जनिष्यति। निम्बादित्य इतिख्यातो धर्मग्लानिं हरिष्यति॥ श्रीसूतउवाच-शृणुष्व चरितं तस्य निम्बार्कस्य महात्मनः। यमाह भगवान्विष्णुः कुरु कार्यं ममाज्ञया ॥ मेरोश्चदक्षिणेपार्श्वे नर्मदायास्तटे शुभे । देशे तैलङ्गके रम्ये देवर्षिवरसेविते ॥ तत्रावतीर्य सद्धर्मान्नारदाद्वेदशंनात्। लब्धा भूमौ वर्त्तयस्व नष्टप्रायान्ममाज्ञया॥ माथुरे नैमिषारण्ये द्वारावत्यां ममाश्रमे। सुदर्शनाश्रमादौ च स्थितिः कार्य्या त्वयाऽनघ ॥ ओमित्यादेशमादाय भगवाञ्च्छ्री सुदर्शनः। भक्ता-भीष्टप्रदः साक्षादवतार्य्य महीतले ॥ देशे तैलंगके पुण्ये द्विजवर्य्यो महामना। सुदर्शनाश्रमे पुण्ये भृगुवंशसमुद्भवः॥ नाम्नाऽरुण इति ख्यातो वेदवेदाङ्गपारगः। इति।" तत्र प्रयोजनमाह "भगवदीयामिति" भगवाञ्च्छ्रीहंसः तत्सम्बन्धिनां तत्प्रर्त्तितामिति यावत्। सनातनीं नित्यां ननु संप्रदायस्या नादित्वात्प्रयोजना सिद्धिरिति चेत्तत्राह "कलौनष्टा" मिति आगामि कलौ संप्रदायस्योच्छेदो मा भवतु तदर्थमयं यत्न इति प्रयोजनसिद्धिरित्यर्थः। तां प्रवर्त्तयिष्यन् 'शारीरकेति'

## कुञ्चिका का भाषानुवाद ।

श्रीविष्णु के द्वारा आत्मस्थापित वेदमार्ग अर्थात् वैदिक संप्रदाय ( जो गुरू द्वारा शिष्यको सम्यक् से दिया जाता है. उसको सम्प्रदाय कहते हैं ) उसकी रक्षा के लिये नियोजित या प्रेरित-अर्थात् श्रीभगवान् की आज्ञा श्रीभग-वन्निम्बार्कमहामुनीन्द्र के अवतार का कारण है। निरतिशयनाम साम्यता से रहित अत्यन्त प्रिय अपनी ( श्रीकृष्ण ) की शक्तिसे वर्द्धित अनन्तशक्तियुक्त स्वहस्ताधारक ( जिनको श्रीश्यामसुन्दर अपने करकमलमें धारण करते हैं ) और श्रीकृष्ण के शस्त्र अर्थात् श्रीसुदर्शनचक्र, करोड़ों सूर्य के समान प्रकाशमान, भगवान्-ऐश्वर्यादि छः गुणसम्पन्न श्रीसुदर्शनचक्रके अवतार आद्याचार्य्य ने तैलङ्गदेशीय ब्राह्मणों में श्रेष्ठ श्रीअरुणऋषि के यहां अवतार ग्रहण किया और आपका नियमानन्द नाम रखा गया। इस नामका भावार्थ श्रीदेवाचार्य्यपाद के कथनानुसार इस प्रकार है—

" नियमेन यदानन्दो जगद्भासयतेऽखिलम् ।
तमहं नियमानन्दं कृष्णं वन्दे जगद्गुरुम् ॥"

तथा भविष्यपुराण में भी कहा है—" श्रीकृष्ण भगवान् की आज्ञासे द्वापरयुग के अन्तमें श्रीसुदर्शन ( चक्र ) जन्म ग्रहण करेंगे और 'निम्बादित्य' नाम से प्रसिद्ध होकर धर्म की शिथिलता को दूर करेंगे।"

"श्रीसूतजी बोले—उन महात्मा श्रीनिम्बार्क भगवान् के चरित्र को सुनो, जिनसे श्रीविष्णुभगवान् ने कहा कि मेरी आज्ञा से कार्य करो। मेरु ( पर्वत ? ) के दक्षिण भाग और नर्मदानदी के सुन्दर किनारे पर रमणीक तैलङ्गदेश में जहां श्रेष्ठ ऋषिगण निवास करते हैं, वहां अवतार लेकर देवर्षि श्रीनारदजी से सद्धर्मों को प्राप्त करके, मेरी आज्ञा से उन लुप्त प्राय सद्धर्मों का भूतल पर प्रचार करो। श्री मथुरामण्डल अथवा व्रजभूमि, नैमिषारण्य श्रीद्वारकाधाम—मेरे आश्रम में और सुदर्शनाश्रम आदि स्थानों में तुमको निवास करना चाहिये। श्रीसुदर्शन भगवान् ने श्रीविष्णुभगवान् के इसी आदेश को 'ओ३म्' अर्थात् हां कह कर ग्रहण किया और भक्तों के इच्छित फल देनेवाले उन श्रीसुदर्शनभगवान् ने भृगुवंशसम्भूत महामना वेदवेदाङ्गपारगामी द्विज श्रेष्ठ श्रीअरुणऋषि के यहां पवित्र तैलङ्गदेश के सुदर्शनाश्रम में इस पृथिवी तल पर अवतार ग्रहण किया"।

## वेदान्तरत्नमञ्जूषा।

गुरुभक्ति सम्पन्न मुमुक्ष्वधिकारि कत्वेनानन्ताचिन्त्या परिमितस्वरूप गुण शक्ति वैभव परब्रह्म भूत श्रीवासुदेव विषयक—

## कुञ्चिका।

शरीरमेवशरीरकं तत्रभवः शारीरको विश्वान्तरात्मा भगवान् तस्य-मीमांसा विचारशास्त्रं वादरायणीयसूत्रम् तेषां वाक्यार्थरूपो यो वेदान्त पारिजातसौरभाख्यादिग्रन्थस्तस्य व्याजेन सर्ववेदान्ता नामुपनिषदां योऽर्थस्तस्य संग्रहः संक्षेपेण स्वरूपकथनं तेन सन्दर्भयामास व्याचकार वेदान्त पारिजात सौरभाख्यं ग्रन्थं संदर्भयित्वा तत्र सर्व वेदान्त शास्त्राधिकरणं वाक्यार्थमुखेन संग्रहीतवानिति भावः। शास्त्राधिकारस्य योग्यतामाह-तस्येति। शास्त्रस्येत्यर्थः। विधिना प्राप्तः उपनयनादिसंस्कारस्तेन संस्कृतः अतएवा धीतापडङ्गा श्रुतिर्वेदो येन सः। अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्। श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि। युक्तश्छन्दास्यधीयीत मासान् विप्रोर्द्धपञ्चमानिति-वचनेभ्यः॥

" अङ्गानिच छन्दः पादौ शब्दशास्त्रञ्चव वक्त्रं कल्पो वाणी ज्योतिष-श्चक्षुषीच। शिक्षाघ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गा न्याहुरेतानि षट्चेति" सामान्यवेदाध्ययनस्य संशयनिवर्त्तकत्वाभात् तत्र संशयनिवृत्तौ हेतुविशेषं दर्शयन्नाह "जिज्ञासितेति"

## कुञ्चिका का भाषानुवाद ।

अब श्रीनिम्बार्काचार्य्य के अवतार का प्रयोजन दिखलाते हैं, श्रीहंस-भगवान् से प्रवर्त्तित अनादि वैदिक सम्प्रदाय का आगामी कलियुग में उच्छेद न हो,अतएव उसको प्रवर्त्त करने के लिये शरीर में अन्तर्यामी रूपसे रहने वाले विश्व के अन्तरात्मा भगवान् सर्वेश्वर के स्वरूप और गुणादिकों का विचार करने वाले वेदान्त सूत्रों का वाक्यार्थ रूप "वेदान्तपारिजात सौरभ" नामक ग्रन्थ के बहाने से सम्पूर्ण उपनिषदों के अर्थ को संक्षेप से वर्णन किया। अर्थात् वेदान्तपारिजात सौरभ नामक ग्रन्थ को बनाकर उसमें सम्पूर्ण वेदान्तशास्त्र के अधिकरणों का वाक्यार्थ रूपसे संग्रह किया। अब उस शास्त्र के अध्ययन करनेवाले की योग्यता का विचार करते हैं। वेदविहित रीति से अष्टमवर्ष में उपनयनादि संस्कारों से युक्त ब्राह्मण ६ अंगो ( छन्द १ व्याकरण २ कल्प ३ ज्योतिष ४ शिक्षा ५ निरुक्त६ ) के सहित वेद को अध्ययन करनेवाला ही वेदान्त का अधिकारी है। साधारण-रीतिसे वेदाध्ययन मनुष्य के सन्देह को नहीं हटा सकता, क्योंकि वेद में अनेक तरह के वाक्य ऐसे हैं जिनमें साधारण-तया परस्पर में विरोध नजर आता है। इसलिये सन्देह की निवृत्ति में विशेष हेतु दिखलाते हैं। जिसने धर्माधर्म को विचार करनेवाले शास्त्रों को जान लिया है और उस ज्ञानसे नानाप्रकार के कर्म, और उनके फलादिकों का सन्देह जिसका छूट गया है। उसको सम्पूर्ण कर्म्मों के फलों से विराग हो जाता है। वेद में सामान्य रीतिसे कर्मों के फल दो भागों में विभक्त हैं, कहीं पर कर्मों का फल नित्य बतलाया गया है और कहीं पर अनित्य बतलाया गया है। अतएव उन दोनों प्रकार के फलों को देखकर वेदपाठी को सन्देह हो जाता है कि कर्मों का फल नित्य है अथवा अनित्य है। फिर कर्मों की मीमांसा के विचार से जब उसे निश्चय हो जाता है कि कर्मों का फल अनित्य है. तब उसके भोगवासना विषयक सन्देह भी छूट जाते हैं। तभी उसको ऐहलौकिक और पारलौकिक सभी पदार्थों से विराग हो जाता है। कर्म विचार ही, सन्देह को नाश करने वाला है। नाना लोकों में अनेक तरह के विषयों का उपभोग-रूप दुर्वासना के नाश होने का फल दिखाते हैं। विरक्त पुरुष ही भगवान के——

## कुञ्चिका

जिज्ञासिता धर्म्ममीमांसा तया निरस्तः विनष्टः कर्म्मफलादिविषय सन्देहो यस्य स अतएव कर्म्मफले निर्विण्णः निर्वेदं प्राप्तः। एतेन संशयहानेः फलमुक्तंभवति। वेदेसामान्यतः कर्म्मफलानां नित्यानित्योभयप्रकारतां दृष्ट्वा कर्म्मफलं नित्यमनित्यं स्वेतिजातो यः संशयस्तस्य च कर्म्ममीमांसाविचारेण कर्म्मफलानामनित्यत्व निश्चयात तेन निरस्तो भोगवासनाविषयकसन्देहः अतएव निर्वेदो घटत एव तस्यैव संशयनाशफलकत्वादित्याशयः। दुर्वासनो—

निवृत्तः फलं दर्शयति भगवद्दर्शनेच्छायां लम्पट आशक्तः । तत्रकारणमाह-गुरुरिति गुरौ या भक्तिःसेवा तयासम्पन्न मुमुक्षु रधिकारियस्य वेदान्तपारिजात सौरभाख्यग्रन्थस्य स तथोक्त तस्यभाव तत्वं तेनेत्यर्थः अन्वयश्चास्य तस्येति प्राक्तनेन समं बोध्यः एवमग्रेऽपि ।

## कुञ्चिका का भाषानुवाद ।

दर्शन करने की इच्छा में आसक्त हो जाता है । उसमें कारण बतलाते हैं, श्रीगुरुदेवमे तत्कालोचित सेवा से सम्पन्न मुमुक्षु ही वेदान्तपारिजात सौरभ नामक ग्रन्थ का अधिकारी है ।

परिच्छेद से रहित और भगवान् का स्वरूप गुण और वैभव इतना ही है, इसे इयत्ता कहते हैं । उस इयत्ता से शून्य स्वरूप गुण वैभव वाले परब्रह्म श्रीवासुदेव ही उसके विषय हैं । और भगवान् के समान धर्म्मों का आविर्भाव होने को ही भगवद्भावापत्ति मोक्ष कहते हैं, उसको प्राप्त करना उक्त ग्रन्थ का प्रयोजन है । इतने ग्रन्थ से वेदान्तपारिजात सौरभ के अनुबन्ध चतुष्टय बतलाये, अर्थात् अचिन्त्य इत्यादि पदों से इसका विषय बतलाया । पूर्वोक्त स्वरूपवाले श्रीवासुदेव ही वेदान्तशास्त्र के विषय हैं । भगवद्भाव को प्राप्त करना ही वेदान्तशास्त्र का प्रयोजन है । प्रतिपाद्य प्रतिपादक भाव सम्बन्ध अर्थात् सिद्ध है । विधिप्राप्त इत्यादि ग्रन्थ से अधिकारी का निर्णय किया गया है ।

## वेदान्त रत्न मञ्जूषा

" कत्वेन श्रीभगवद्भावापत्तिलक्षण मोक्षप्रयोजनकत्वेनाऽचिन्त्या-ऽपारोतिगम्भीराशयत्वमाकलय्य मन्दमतीनां सर्वशास्त्रार्थ जिज्ञासूनां शिथिल प्रयत्नानां शास्त्रार्थविचारासमर्थानां मुमुक्षूणा मुपकारार्थं वेदान्तरत्नभूतां शास्त्रार्थकामधेनुं दशश्लोकीमपि निर्ममे " ।

## कुञ्चिका ।

अनन्ताः परिच्छेद शून्याः, अचिन्त्या इयत्तावच्छेदेनचिन्तयितुमनर्हा अपरिमिताः स्वरूपगुणशक्तिवैभवायस्य स परब्रह्मभूतः श्री वासुदेवो विषयो यस्य स तस्य भाव स्तत्वं तेन ।

## कुञ्चिका ।

श्रीभगवति यो भावः साधर्म्यं तदापतिलक्षणं यो मोक्षः स प्रयोजनं यस्य स तथोक्तेन। एते नानुबन्धचतुष्टयमुक्तं भवति, अचिन्त्येत्यादिनाऽस्य विषयो व्याख्यातः एकस्वरूपस्य श्रीवासुदेवस्यैव वेदान्तशास्त्रविषयत्वात् । तद्भावेति प्रयोजनोक्तिः । प्रतिपाद्यप्रतिपादकसम्बन्धोऽर्थसिद्धः, विधिप्राप्तेत्यादिना मुमुक्षु रूपाधिकारिणस्स्वरूपमुक्तं भवति । "अर्थि समर्थो विद्वानधिकारीति" शास्त्रोक्त लक्षणस्यात्रव्याप्तिदर्शनात् । जिज्ञासितेत्यादिना नित्यानित्यविद्धत्वमुक्तं, भगवद्भावापत्तिरूपमोक्षार्थवत्वादिति विवेकः ।

## कुञ्चिका का भाषानुवाद ।

पूर्व मीमांसा के छटे अध्याय के प्रथम पाद में महर्षि जैमिनि ने अधिकारिका लक्षण निरूपण किया कि अर्थि ( प्रयोजन वाला ) समर्थ कार्य करने की शक्ति और विद्वान , उस विषय का ज्ञाता हो उसे अधिकारी कहा जाता है ।

## कुञ्चिका ।

नन्वेवं तर्हि मोक्षरूपप्रयोजनस्य पूर्वाचार्यप्रणीतशास्त्रसिद्धत्वान्नवीनग्रन्थ रचनारूपस्य प्रयासस्य निष्प्रयोजनत्वेन वैयर्थ्या दित्याशङ्कय प्रयोजनविशेषं दर्शयन्नाह– अचिंन्त्येति । तस्य वेदान्त पारिजात सौरभाख्यग्रन्थस्याचिन्त्यापाराति गम्भिराशयत्वमाकलय्य दशश्लोकीमपि निर्मम इत्यन्वयः ।

अर्थ तो दुरवगाहत्वं ;शब्दतश्चातिविस्तारत्वाद परास्त्व मित्यर्थः । मन्दमतीनाम्—अल्पबुद्धीनाम् । मन्दबुद्धित्वेऽप्युञ्चार्थित्वं दर्शयति–सर्वेति । ननु मन्दमतित्वेऽप्यायासश्रमेण कालविशेषे द्विद्धत्येव पुरुषार्थ इत्याशङ्कयाह– शिथिलप्रयत्ना नामिति । प्रयत्नशैथिल्यादवगाहनानर्ह त्वमिति भावः । मन्दमतित्वशिथिलप्रयत्न त्वयोः सतोः सर्व वेदान्तार्थ विषयकज्ञानेच्छू नामुपकारः, सर्व शास्त्रार्थ ज्ञानप्राप्तिरेवास्य प्रयोजनमित्यर्थः । ग्रन्थसंज्ञां दर्शयति—शास्त्रार्थ कामधेनुमिति । वेदान्त शास्त्रार्थस्य कामधेनुतुल्यां दशश्लोकीं दशनां श्लोकानां समाहारः दशश्लोकी तां यथा कामधेनोः सकलार्थपूरकत्वं तथा दशश्लोक्याऽपि निखिलवेदान्तार्थप्रदर्शकत्व मित्यर्थः ।

## कुञ्चिका का भाषानुवाद।

वेदान्त शास्त्र का केवल मुक्ति मात्र प्रयोजन है उसका लाभ तो पूर्व आचार्य प्रणीत ग्रन्थों के अध्ययन और मनन से ही हो सकता है फिर इस नवीन ग्रंथ बनाने का क्या कोई विशेष प्रयोजन है इस शंका को निवारण करते हैं–अचिन्त्य इत्यादि से। पूज्यपाद आद्याचार्य्य श्रीनिम्बार्क भगवान का निर्माण किया हुआ ब्रह्मसूत्रों की व्याख्या वेदान्त पारिजात सौरभ ग्रंथ है वह अत्यन्त बड़ा है और उसका अर्थ भी अत्यन्त कठिन है अतएव अल्प बुद्धि वाले मनुष्यों को उससे बोध होना असम्भव है इसीसे आपने दशश्लोकी का निर्माण किया। मन्द बुद्धि जन भी अत्यन्त परिश्रम सहन शील हो कर कुछ काल में फल का लाभ उठा सकता है। इस शंका को दूर करने के लिये कहते हैं—शिथिल प्रयत्नानामित्यादि। जो मनुष्य अल्प बुद्धि और शिथिल साधन वाले हैं और सब वेदान्त का अर्थ जानना भी चाहते हैं उनोंके उपकारार्थ इस ग्रंथ का निर्माण किया। भाव यह है कि लघुमति जन को विशेष परिश्रम के बिना निखिल वेदान्त का अर्थ समझ में आजाना ही इस ग्रन्थ के निर्माण का प्रयोजन है। सम्प्रति इस ग्रंथ का नाम बतलाते हैं— शास्त्रार्थ कामधेनु मिति। जैसे कामधेनु सकल अर्थों को पूरण करती है वैसे यह ग्रंथ भी सब वेदान्त के अर्थ को पूरण करने वाला है।

## वेदान्त रत्न मञ्जूषा।

तथा च तत्रै वोक्तं स्वयमेव। अथाधीतषडङ्गवेदेन कर्म फलविषयकक्षयाक्षयत्वोभयप्रकारकवाक्यजन्यसंशयाविष्टेन ततएव जिज्ञासतधर्ममीमांसाशास्त्रेण तन्निश्चिततत्प्रकारतत्फलविषयकज्ञानवता कर्म ब्रह्मज्ञानफलसान्तत्वानन्तत्व सातिशयत्वनिरतिशयत्वविषयकव्यवसायजातनिर्वेदेन भगवत्प्रसादेप्सुना तद्दर्शनेच्छा लम्पटेनाचार्य्यैकदेवेन गुरुभक्त्यैकहार्द्देन मुमुक्षुणा, अनन्ताचिन्त्य स्वाभाविक गुणशक्त्यादिभिर्बृहत्तमो यो रमाकान्तः पुरुषोत्तमः ब्रह्मशब्दाभिधेयस्त द्वियथिका जिज्ञासा सततं सम्पादनीयेति वाक्येन।

## कुञ्चिका।

उक्तार्थ माद्याचार्य्यवचसा द्रढयति–तथाचेति। तत्र वेदान्तपारिजातसौरभाख्यग्रन्थे ब्रह्मजिज्ञासायाः प्राग् यद्वृतमपेक्षितं भवति तं प्रतिपादयन् बादरायणीयादिमसूत्रनिविष्टाथशब्दार्थमानन्तर्य्यं व्याचष्टे—अथाधीतेति। अत्राथशब्द उपनयनसंस्कारानन्तर्यार्थकः "अष्टवर्षं ब्राह्मणमुपनयीततमध्यापयेदिति" श्रुतेः। अधीत षडङ्गो वेदो येन स तेनेति विग्रहः। विद्यते ज्ञायते अनेनेति वेदः, मन्त्रब्राह्मणात्मकशब्दराशिः। अतएवापस्तम्बो यज्ञपरिभाषामाह–मन्त्र ब्राह्मणयोर्वेदनामधेयमिति। वेदाङ्गानि समस्तानि कृष्णपक्षेषु सम्पठेत्। निष्कारणः षडङ्गो वेदोध्येयः,

वेदमध्यापयेद् द्विजः सकल्पं सहरस्यञ्चेत्यादिवचनेभ्यः । कर्मफलस्य क्षयिष्णुत्व प्रतिपत्तिश्च साङ्गवेदाध्ययनादेव भवितुमर्हतीत्यतः प्रागेवाधीतषडङ्गवेदेने त्यधिकारिणो विशेषणं निर्दिष्टम् । सम्प्रति संशयस्य हेतुं निर्वक्ति-कर्मफलेति । कर्मणां नित्यनैमित्तिक काम्यरूपाणां फलं विषयो यस्मिन् क्षयाक्षयत्वोभयप्रकारो यस्मिन् एवम्भूतो वाक्यज न्यो यः संशयः तेनाविष्टस्तेने त्यर्थः । कर्मफलविशेष्यकक्षयत्वाक्षयत्व प्रकारकसंशयः सच कर्मफलंक्षयी नवेत्याकारः ।

वेदाध्ययनसमये कर्मफलस्य क्षयाक्षयत्वविधायकानि वाक्यानि "तद्यथेह कर्मचितोलोकः क्षीयते" अक्षय्यंहवै चातुर्मास्ययाजिनः सुकृतं भवती त्यादीनि पठितानि, अध्ययनस्य साङ्गत्वादङ्गानामर्थज्ञानहेतुत्वादेव तदर्थावगमेन कर्मफलस्य क्षयाक्षयत्वप्रतिपत्या संशयः । ननुज्ञात वेदार्थश्चेत्कथं न निश्चिनुयादि त्याशङ्क्याह—आविष्ट इति । संशयजन्यदुःखाकुलः स्वविचारेण निर्णेतुमक्षमो नह्यध्ययनमात्रादेव वेदस्य तात्पर्य्यमवगन्तुं शक्यमपितुषड्लिङ्गोपेतवाक्यादेव तदुक्तमुपक्रमोपसंहारवभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्तीच लिङ्गं तात्पर्यनिर्णय इति भावः । संशयाविष्टेनेत्युक्त्या जिज्ञासां प्रति सन्देहस्य हेतुत्वमभिहितम् । अतएवाश्रे तत इति पदोपन्यासः । अथातो धर्मजिज्ञासे त्यादिद्वादशाध्यायात्मिकायाःपूर्वमीमांसायाआरम्भप्रयोजकमाहतत इति । संशयादेवेत्यर्थः । जिज्ञासितं धर्ममीमांसा शास्त्रं येन स तेनेति विग्रहः । धर्म मीमांसयायन्निश्चितं तं दर्शयति--तन्निश्चितमिति । कर्म भागस्य वेदोपक्रम वदधीतक्रमेणैव निरूपणं प्राप्तमिति कर्म विचारस्य पूर्वभावित्वादेवाह—कर्मतत्प्रकारकेति ।

## कुञ्चिका ।

तेन मीमांसा शास्त्रेण निश्चित मुपक्रमादिभिनिर्णीतं तत्प्रकारः कर्मणोऽनुष्ठान प्रकारः हस्तक्रियादिस्तत्फलं कर्मफलं स्वर्गादिकम् , एतौ विषयौ यस्य तथा भूतं यज्ज्ञानं तद्वतेत्यर्थः । एतेन विशेषणचतुष्टयेनानन्तर्यात्मकाथशब्दार्थो निरूपितः । इदानीं जिज्ञासासूत्रस्थमतश्शब्दार्थं व्याचष्टे—कर्म ब्रह्मज्ञानफलमिति । कर्मच ब्रह्मज्ञानञ्चेति कर्मब्रह्मज्ञाने तयोः फलमित्यर्थः । सान्तत्वञ्चानन्तत्वञ्च सातिशयत्वञ्च निरतिशयत्वञ्चेति विग्रहः,एतद्विषयको यो व्यवसायो निश्चयस्तेन जातो निर्वेदोयस्य स तेन कर्मफलानां सान्तत्वं नाम ध्वंसप्रतियोगित्वमनित्यफलकत्वमिति यावत् । "तद्यथेह कर्मचितः लोकः क्षीयते" "प्लवाह्येते" "अन्तवदेवास्य तद्भवति" अन्तवत्तुफलं तेषामित्यादि श्रुतिस्मृतिभ्यः । कर्मफलस्य सातिशयत्वञ्च ज्ञानफलादत्यन्त न्यूनम् । "नसपुनरावर्त्तते" "निरञ्जनः परमं साम्युमुपेति" तमेवविदित्वातिमृत्युमेति वचनेभ्यः । ब्रह्मज्ञानस्य निरतिशयानन्तफलत्वनिश्चयाद्धेतोर्जातनिर्वेद वैराग्यं तद्वानित्यर्थः । निर्हेतुकएवात्रनिर्वेदो विवक्षितः । तद्दर्शनसाधनं निर्दशयन् विशिनष्टि—भगवदिति । भगवतः प्रसादमनुग्रहमिप्सतीति भगवत्प्रसादेप्सुस्तेनेत्यर्थः । अत्रापि कारणमभिधत्ते--गुरुरिति । गुरु भक्तावेकंहार्दं तात्पर्य्यं यस्य तेन गुरुभक्ति

पूर्ण हृदयेनेति यावत्। तत्रापि कारणमाह—तद्दर्शनेति। यतो भगवद्दर्शनेच्छालम्पटोऽतएवाचार्य्यैकदेव इति हेतुहेतुमद्भावः। आचार्य एवेको मुख्योऽद्वितीयो वा देव उपास्यो भगवत्स्वरूपादिद्योतको वा यस्य स तेन। एतेन देवानां भक्तिर्भगवत्प्रसादहेतु रितिपक्षो निरस्तः। "योवैस्वांदेवतां यजति परस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवती" त्यादिश्रुतेः। ब्रह्मजिज्ञासा कर्तव्या केनेति जिज्ञासायामाह—मुमुक्षुणेति। भगवद्भावापत्तिरूपमुक्तिविषयकेच्छावतेत्यर्थः। मुमुक्षुर्भूत्वात्मानं पश्येदितिश्रु त्यनुसारि मुमुक्षुपदं तृतीयान्त मध्याहृतमित्यर्थः। अथातश्शब्दार्थं निरूप्य सम्प्रति, औपनिषदाभिमतं ब्रह्मपदं व्याचष्टे—अनन्तेति। अनन्ताः. अचिन्त्याः स्वाभाविकाः स्वरूपवद्यावदात्मवृत्तयः स्वरूपगुणाः स्वरूपभूताः गुणाः सौन्दर्य्य माधुर्य्यमार्दवप्रभृतयः शक्तयः, अघटघटनापटीयस्यः सामर्थ्य विशेषाः। आदिपदेन कल्याणधर्मा जगज्जन्मादिकारणत्वशास्त्रयोनित्वादयो ग्राह्याः। एतैर्बृहत्तमः स्वरूपपेण गुणैशक्त्याद्यादिभिश्चनिरतिशय बृहत्ववस्तुपुरुषोत्तमादन्यदपि सम्भाव्येत तदाप्याह—रामाकान्तःश्रीराधापतिः श्रीकृष्णएव ब्रह्मशब्दाभिधेयस्तद्विषयकज्ञान विषयिणीच्छा सततमन-वरतं सम्पादनीयेत्यर्थः। एतेनाथातो ब्रह्मजिज्ञासेति सूत्रार्थो दर्शितः।

## भाषानुवाद।

वेदान्त रत्न मञ्जूषा में विधि प्राप्तोपनयनादि इन वाक्यों के द्वारा जो अर्थ प्रकाशित किया उसको पूज्यपाद श्रीनिम्बार्क भगवान जी का बनाया हुआ वेदान्त पारिजात सौरभाख्य ग्रन्थ के वाक्यों से प्रमाणित करते हैं--तथा चोक्तमिति।

"अथातो ब्रह्म जिज्ञासा" इस सूत्र में तीन पद हैं। अथ, अतः, ब्रह्म-जिज्ञासा। पहिले पद का अर्थ बतलाते हैं--अधीत षडङ्गवेदेनेत्यादिना। उपनयन संस्कार के पश्चात् अङ्ग सहित अध्ययन किये हैं वेद जिसने मन्त्र और ब्राह्मणभाग का नाम वेद है १ छन्द, २ व्याकरण, ३ कल्प, ४ ज्योतिष, ५ शिक्षा. ६ निरुक्त यह छै: वेद के अङ्ग हैं वेदों का अध्ययन काल में कर्म फल को क्षय ( नाश ) और अक्षय ( नित्य ) बतलाने वाले वाक्यों को भी पड़ा वह वाक्य "यथेहकर्म चितो लोकः क्षीयते" अक्षय्यंहवै चातुर्मास्याजिनः फल मित्यादि इन वाक्यों को अर्थ ज्ञान से यह संशय होता है कि कर्मो का फल नाशवान् है या नित्य है उस संशय को दूर करने के लिये पूर्व मीमांसा का अध्ययन किया उसके अध्ययन करने से यह निश्चित हुआ कि कर्मों का अनुष्ठान प्रकार हस्तक्रियादि और कर्मों का फल स्वर्गादि प्राप्ति यहां पर्य्यन्त आदिमसूत्रनिविष्ट अथ शब्दार्थ बतलाया। अब अत शब्द का अर्थ प्रतिपादन करते हैं कि कर्मो का फल अनित्य और ज्ञान का फल मोक्ष से अत्यन्त न्यून है। ज्ञान का फल नित्य और अनन्त है अर्थात् वे हद्द है। और निरतिशय है "सबों से उत्कृष्ट" इस प्रकार निश्चय होने से उसे संसार से वैराग्य हुआ वैराग्य सम्पन्न वह अधिकारी भगवदनुग्रह की इच्छा करने लगा

इसका कारण बतलाते हैं—गुरुभक्त्यैकहार्देनेति, श्रीगुरु भक्ति से परिपूर्ण हृदय वाला अतएव आनन्दकन्द श्रीकृष्णचन्द्र के दर्शन की इच्छा में अत्यन्त आसक्त हुआ इसी से आचार्य ही है एक प्रधान, देव उपास्य जिसके एम्भूत मुमुक्षु ने ब्रह्म जिज्ञासा करनी अत्यावश्यक है सम्प्रति ब्रह्म शब्द का अर्थ निरूपण करते हैं– अनन्ताचिन्त्येति। अनन्त अचिन्त्य स्वाभाविक गुण और शक्तियों से बृहत्तम का नाम ब्रह्म है तद्विषयक जिज्ञासा अनवरत करनी चाहिये।

## वेदान्त रत्न मञ्जूषा।

तथाच शास्त्रं 'स्वाध्यायोऽध्येतव्यः" यजुरा २। १५। "सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" मु० १। १२। यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्रपुण्यचितो लोकः क्षीयते। छा० ८। १६। परीक्ष्य लोकान् कर्मजितान् ब्राह्मणो निर्वेद मायात् नास्त्यकृतः कृतेन" मु० १। १२। जुष्टं पश्यत्यन्यमीशं मु० ३। २। "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशंपुरुषं ब्रह्मयोनिम्" मु०३। ३ "यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः" श्वै० ३। २०। 'तमक्रतु पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः" मु० १। २। १५। "यमेवैष वृणुते तेन लभ्यः" मु० २। ३ "सर्वे वेदा यत्पदमामनन्ति" तन्त्वौपनिषदं पुरुषं पृच्छामि" बृ० ३। ९। २६। "नामानि सर्वाणि यमाविशन्ति" ज० १। १। ३। "शास्त्रयोनित्वात्" वेदैश्च सर्वै रहमेव वेद्यो" मु० ३।१।३ "निरञ्जनः परमं साम्यमुपैति" "तन्महिमानमेति" मु० ३। १। २। "वीतशोकः" "बहवो ज्ञानतपसा पूता मद्भावमागताः" १। १। ४ "ममसाधर्म्यमागताः" "तन्निष्ठस्य मोक्षोपदेशात्" १। १। ७। "तन्तुसमन्वयात्" १। १। ४ 'नमामः सर्ववत्रसां प्रतिष्ठा यत्र शाश्वतीत्यादि। भाषितं चेदं वाक्यं शङ्खावतारैःश्रीनिवासाचार्यचरणैः।

## कुञ्चिका।

प्रतिज्ञातार्थस्य प्रमाणं दर्शयन् प्रागभितस्य साङ्गवेदाध्ययनस्य प्रमाणं निरूपयति— स्वाध्यायेति। अनेन स्वाध्यायपदवोध्यवेदस्याध्ययनं विधीयत इत्यर्थः। योनिर्वेदमायात् स तद्विज्ञानार्थं गुरुमेवाभिगच्छेदित्याह–सेति। एव कारेण नियमविधित्वमवगम्यते, समित्याणिः नरिक्तपाणिः। रिक्तपाणि तुनोपेयाद्राजानं दैवतं गुरुमिति स्मर्यते। श्रोत्रियम्—श्रुतवेदान्तम्। ब्रह्मनिष्ठम—ब्रह्मसाक्षात्कारवन्तम्। कर्म फलस्य क्षयित्वबोधकवाक्यान्याह यथेति। इह अस्मिन् लोकेधर्माधर्मकर्म निमितो लोक्यत इतिलोकः फलं भुवनम्वा यथा क्षीयते तथा लोकान्तरे पुण्यनिर्मितः लोकः स्वर्गादिर्नश्यतीत्यर्थः। गुरूपसत्तिं प्रमाणेन द्रढयति—परीक्ष्येति। कर्मचितान् कर्म सम्पादितान्, परीक्ष्य, मीमासान्यायैर्निरूप्य ब्राह्मणःअकृतः, नित्यः परमपुरुषः

कृतेन कर्मणा नास्ति न सम्पद्यत इति योनिर्वेदमायात् स तद्विज्ञानार्थं गुरुमेवाभिगच्छेदितिप्राक्तनस्यात्रान्वयः। एतेन कर्मणां फलस्यनित्यत्वं ब्रह्मज्ञानस्य निरतिशयफलकत्वं सूचितम्। यदा पश्यः ब्रह्मदर्शी स्वस्मादन्यं सर्वनियन्तृत्वसर्वव्यापकत्वस्वतन्त्रसत्वसर्वाधारत्वादिना विलक्षणं जुष्टं, भक्तियोगेन प्रीतं परमात्मानं ब्रह्मयोनिं चतुर्मुखस्य कारणं रुक्मवर्णं स्वर्णवर्णवद्देदीप्यमानं मङ्गलविग्रहयुक्तं जगदीशितारं तत्कर्त्तारम्। "भगवानितिशब्दोऽयं तथापुरुषइत्यपि। निरुपाधिचवर्त्तते वासुदेवे सनातने,इति"स्मृतिवचनेन पुरुषशब्दनिर्दिष्टं वासुदेवं पश्यति तदा पुण्यपापे निरस्य प्रकृति संसर्गशून्यःस अपहतमाप्मत्वदिगुणयोगेन ब्रह्मणः परमं साम्यं साधर्म्यमुपैतीत्यर्थः। आचार्य्यैकदेवत्वं यत् प्रागुक्तं तं प्रमाणमुखेन द्रढ़यति—यद्येति। तभक्रतुरिति। तं तादृशं परमात्मानमक्रतुः काम्यकर्मादिरहितः धातुर्धारकस्य भगवतः प्रसादात्, अनुग्रहात् आत्मनो महिमानं महत्वसम्पादकं स्वसार्वज्ञ्यादिगुणाविर्भावहेतुकं यदा पश्यति तदा वीतशोको भवतीत्यर्थः। भगवत्प्रसादेप्सुनेति यदुक्तं तं प्रमाणयितुं वाक्यं दर्शयति—यमेवेषइति। एष परमात्मा यं साधकं प्रार्थयते तेन लभ्यः प्रार्थनीयपुंसा लभ्यः। तस्यैष आत्मा वृणुते तनूं स्वामिति तस्य शेषभागः। तस्योपासकस्यैषआत्मा परमात्मास्वरूपं प्रकाशयति स्वात्मानं प्रयच्छतीत्यर्थः। सर्वेवेदा इति। पद्यते गम्यते इतिव्युत्पत्त्या पदशब्दः प्राप्य स्वरूपवाची स्वस्वरूपं सर्वे वेदाः साक्षात्परम्परया वाप्रतिपादयन्तीत्यर्थः। तं सर्वशास्त्रप्रसिद्धमुपनिषदैकसमधिगम्यं पुरुषं परमात्मानं वासुदेवं पृच्छामीत्यर्थः। जिज्ञास्ये ब्रह्मणि मानमाह—शास्त्रयोनित्वादिति शास्त्रं वेदलक्षणमेवयोनिः कारणं ज्ञापकं प्रमाणं यस्मिं तच्छास्त्रयोनि स्तस्यभावस्तत्वं तस्मादित्यर्थः शास्त्रैकप्रमाणकत्वेसति तदन्यप्रमाणागोचर त्वादिति यावत्। श्रीमुखवचनेनाप्युक्तार्थं द्रढ़यति– वैदैश्चेति।

## कुञ्चिका का भाषानुवाद।

पूर्व प्रदर्शित अर्थ को प्रमाणों के द्वारा सिद्ध करते हुए पहिले अङ्ग सहित वेद का अध्ययन करना इसमें प्रमाण प्रदर्शन करते हैं स्वाध्यायेति। स्वाध्याय नाम वेद का अध्ययन उसको यह श्रुति कहती है।

जिस पुरुष की प्रापञ्चिक पदार्थों में से आसक्ति दूर होगई वह पुरुष कुछ भेट लेकर वेदान्त शास्त्र के पारंगत सब शङ्काओं का दूर करने वाला और जिसे भगवान का साक्षत्कार होता हो ऐसे श्रीगुरु के समीप ब्रह्मविद्या प्राप्ति के लिये अवश्य जाना चाहिये। इस वार्ता को तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् यह श्रुति बतलाती है। जो श्रुति कर्म फल को अनित्य उपदेश करती है उन्हींका प्रदर्शन करते हैं– यथेह कर्मचितइति। स्वकृत पुण्य तथा अपुण्य से उपार्जन किया यह लोक नष्ट होजाता है वैसे ही पुण्य से सम्पादित स्वर्गादि लोक भी नाशवान् है।

## कुञ्चिका

न च वेदैरिति बहुबचनादेव सर्वशब्दार्थसिद्धत्वात्सर्वपदस्य वैयर्थ्यं शङ्कनीयम् , बहुवचनस्य त्रिसङ्ख्यकेऽपि पदार्थसमाप्तिदर्शनात् । तथात्वे सति वेदत्रययुक्तकर्ममींमांसकसिद्धान्तेऽतिप्रसङ्गात्तद्व्यावृत्तये सर्वैरितिपदसन्निवेशस्य सार्थक्यमेव । अहमिति स्वाभिन्नोक्तिः, एवेति साधारणोक्तिः, आभ्यां मत्तोऽन्यो न कश्चिदपि वेदविषयोऽस्तीति व्यञ्जितम् ,वेदैरेव वेद्यो नान्यैःप्रमाणैरित्यन्वयेऽपि न कश्चिद्दोषः।भगवद्भावापत्तिरूपं मोक्षं प्रमाणेन द्रढयति-निरञ्जन इति । निर्गतमञ्जनं प्रकृतिसम्बन्धो यस्मात् स निरञ्जनः प्रकृतिसंसर्गशून्यः प्रत्यगात्मा अपहतपाप्मत्वसर्वज्ञत्वादिगुणवत्तया भगवतः परमं साम्यं प्राप्नोतीत्यर्थः।वीतशोकःशोकरहितः सन् तन्महिमानमुपैतीति उक्तार्थं भगवद्वचसापि द्रढयति—बहव इति । अत्र बहुवचननिर्देशात् प्रत्यगात्मनां नानात्वं दर्शितं,तेनैकजीववादोऽपाकृतो भवति तन्निष्ठेति तस्मिन् सदादिशब्दाभिधेये,ईक्षितरि निष्ठा निदिध्यासनापरपर्य्यायलक्षणा यस्य विदुषः स तन्निष्ठस्तस्य मोक्षोपदेशात् । तथाहि-तत्त्वमसीति मुमुक्षोः कारणात्मकत्वानुसन्धानमुपदिश्य"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति ब्रह्मभावापत्तिलक्षणो मोक्ष उपदिश्यत इति सूत्रार्थः । सर्वज्ञे स्वाभाविक्यचिन्त्यानन्तशक्तौ शास्त्रयोनौ ब्रह्मणि पुरुषोत्तमे अस्पृष्टमायागुणमाहात्म्ये भगवति श्रीकृष्णे वेदान्तस्य तद्वाचकतया समन्वयः समन्वितश्च । वेदान्ते वाच्यतया भगवान् वासुदेवः,इति तस्मात् स एव जिज्ञासाविषय इत्यर्थः ।

## वेदान्त-रत्नमञ्जूषा

नमामःसर्ववचसां प्रतिष्ठा यत्र शाश्वती"इत्यादिभाषितं चेदं वाक्यं शङ्खावतारैः श्री श्रीनिवासाचार्यचरणैः, उक्तञ्च विश्वाचार्य्यचरणैः-"शङ्खावतारः पुरुषोत्तमस्य यस्य ध्वनिः शास्त्रमचिन्त्यशक्तिः ॥ यत्स्पर्शमात्राद् ध्रुव आत्मकामस्तं श्रीनिवासं शरणं प्रपद्ये , इति ।

## कुञ्चिका

यत्र = यस्मिन् भगवति सर्ववचसां प्रतिष्ठा = प्रतिपाद्यता, तं नमामीत्यन्वयः यः सर्ववेद्यः स एव नतिविषयः, स च भगवान् श्रीकृष्ण एवेत्युक्तम् । ननु वचसांस्वस्वार्थेषु प्रतिष्ठा प्रमाणसिद्धत्वात् कथमेकत्र श्रीभगवति ब्रह्मण्येव सर्वप्रतिष्ठाऽभ्यु-

पगम्यते,इत्याशङ्क्य समाधत्ते। शाश्वतीति। अयमर्थः।पदानां स्वार्थे प्रमाणत्वेऽपि सर्वस्यापि पदार्थस्य तत्कार्यत्वात् तत्रैवाव्यभिचारिणी प्रतिष्ठा। अन्यत्र चार्थानां व्यभिचारवत्तया तद्वाचकतयापि व्यभिचारग्रस्तत्वादिति भावः। तथाच श्रुतिःनामानि सर्वाणि यमाविशन्ति,इति। एतच्च देवताधिकरणे स्पष्टम्॥आद्याचार्यो भगवान् सम्प्रदायप्रवर्तको नियमानन्दाख्यो निम्बार्कापरनामा, तेन स्वप्रणीतवेदान्तपारिजातसौरभाख्यग्रन्थे शारीरकमीमांसावाक्यार्थलक्षणे पठितानां सूत्रस्थानीयानां 'अथात' इत्यादिवाक्यानां श्री श्रीनिवासाचार्य्यचरणैर्वाक्यार्थभाष्यकृद्भिरर्थो व्याख्यात इति स एवात्र प्रतिपादित इत्याह—भाषितमिति।

## कुञ्चिका

उपोद्घातसङ्गतिं प्रदर्श्य श्री श्रीनिवासाचार्य्यप्रसङ्गात्तेषां नतिलक्षणं मङ्गलं श्रीविश्वाचार्य्यप्रणीतेन श्लोकेनाचरति, शङ्खावतार इति। तं श्रीनिवासाचार्य्यं शरणं प्रपद्ये,साधनत्वेन फलरूपत्वेन चाश्रयामीत्यर्थः।तत्स्वरूपमाह–पुरुषोत्तमस्येति। क्षराक्षरपदार्थाभ्यामुत्तमस्य श्रीकृष्णस्य शङ्खावतारः, यस्य ध्वनिरचिन्त्यशक्तिरिति तथाभूतायां शक्तौ हेतुमाह–शास्त्रेति। शास्त्ररूपत्वाद् ध्वनेरचिन्त्यशक्तित्वमित्यर्थः। उक्तार्थे प्रमाणं वदन्नचिन्त्यशक्तित्वं व्यनक्ति – तत्स्पर्शमात्रादिति। श्रीध्रुवः औत्तानपादिः यथा–पूर्वं स्पर्शमात्रेणैव ध्रुवाय शक्तिं समचारयत् तत्तयैव ममापि तच्चरणाश्रयणादेव शास्त्रप्रवृत्तिशक्तियोगः, तत्तस्माच्छ्रेयस्कामैस्तच्चरणारविन्दमेव सकलपुरुषार्थसिद्धये निरन्तरमाश्रयणीयं,तस्यैव मुमुक्षुगतित्वादितिभावः।

## भाषानुवाद

यहां तक इस ग्रन्थ के निर्माण का हेतु बतलाया। अब उस प्रसङ्ग से श्री श्रीनिवासाचार्यजी का स्मरण हुआ। अतएव उनकी श्रीविश्वाचार्य निर्मित श्लोक के द्वारा वन्दना करते हैं, कि मेरे साधन ( उपाय ) फल ( प्राप्य ) भी श्रीगुरुदेव श्री श्रीनिवासाचार्य्य हैं। अतः उनके चरणारविन्दों का मैं आश्रयण लेता हूँ, उनका स्वरूप वर्णन करते हैं, कि श्री श्रीनिवासाचार्य्यजी पुरुषोत्तम श्रीकृष्णचन्द्रजी के करमें स्थित शङ्ख के अवतार हैं। जिनकी कि ध्वनि शास्त्ररूप होने से अचिन्त्य शक्ति है। क्योंकि जिस भगवान के करस्थशङ्ख के स्पर्श मात्र से उत्तानपाद के पुत्र परमभागवत श्रीध्रुव महाराज की सम्पूर्ण कामना सिद्ध हुई।

## प्रथम कोष्ट

तस्यामिताक्षरैः कोष्ठचतुष्टयात्मिका वेदान्तरत्न-मञ्जूषाख्यामित व्याख्या यथामति विधीयते। तत्र प्रथमे पदार्थरत्नसंग्रहः। द्वितीये सम्प्रदाय-निर्णयपूर्वकतत्प्राप्तवाक्यार्थरत्नसंग्रहः। तृतीये साधनकदम्बरत्नसंग्रहः। चतुर्थे पूर्वोक्तशास्त्रार्थस्मरणपूर्वकफलरत्नसंग्रह इति विवेकः।

## कुञ्चिका

एवं चिकीर्षितस्य ग्रन्थस्य निर्विघ्नसमाप्त्यर्थं मङ्गलं कृत्वा, सम्प्रति अस्य ग्रन्थस्य निर्माणप्रयोजनं निरूप्य शास्त्रार्थकामधेनुं दशश्लोकीं व्याख्यातुमुप-क्रमते = तस्या इति। दशश्लोक्याइत्यर्थः। कोष्ठेति। कोष्ठचतुष्टयमात्मा स्वरूपं यस्याःसा तथोक्ता ग्रन्थसंज्ञां दर्शयति वेदान्त इति। वेदानाम् अन्तः शिरोभागः, उप-निषद्सएवरत्नं परमपुरुषार्थसाधकत्वात्तत्तुल्यं वा तस्य मञ्जूषा ( पेटिका ) आख्या नामधेयं यस्याः सा तथोक्ता। तस्याः सौलभ्यगुणमाह— मितव्याख्येति। वेदान्तरत्न-मञ्जूषायाः कोष्ठचतुष्टयमस्ति यस्मिन् यस्मिन् कोष्ठे यद्यद्रत्नं निहितं तेषां नाम निर्वक्ति-तत्रेति। कोष्ठचतुष्टयात्मकवेदान्तरत्नमञ्जूषायामित्यर्थः।

## भाषानुवाद

ग्रन्थ के प्रारम्भ में मङ्गलाचरण करना आवश्यक है। क्योंकि यह शिष्ट-परम्परा से प्राप्त है, मङ्गलबोधक शब्द प्रयोग करने का विघ्ननाश पूर्वक ग्रन्थ की समाप्ति भी प्रयोजन है। अतएव ग्रन्थ के प्रारम्भ में मङ्गल किया, और इस नूतन ग्रन्थ निर्माण का प्रयोजन बतलाया। सम्प्रति वैदिक अनादि सत्सम्प्रदायप्रचारक भगवान् पूज्यपाद निखिल वेद और सर्वदर्शन प्रभृति शास्त्रों के पारङ्गत श्री १०८ निम्बार्काचार्य्यनिर्मित शास्त्रार्थकामधेनु दशश्लोकी ग्रन्थ की वेदान्तरत्नमञ्जूषा नामक व्याख्या का आरम्भ करते हैं—तस्या इति। यह ग्रन्थ अमूल्य रत्नों का एक भण्डार है इस वेदान्तरत्नमञ्जूषा के चार कोष्ठ हैं। प्रथम कोष्ठ में पदार्थ रत्न का संग्रह है, द्वितीय कोष्ट में सम्प्रदायनिर्णय और सम्प्रदाय के आचार्य्य द्वारा प्राप्त वाक्यार्थ रत्न आदि का संग्रह है, तृतीय कोष्ठ में साधनकदम्बरत्न का संग्रह है चतुर्थकोष्ठ में पूर्व प्रदर्शित वार्त्ताओं का स्मरण पूर्वक फलरत्न का संग्रह है।

## कुञ्चिका

सन्ति चात्र प्रत्यगात्मस्वरूपे वादिनां विप्रतिपत्तयः,तद्यथा भूतचतुष्टयमात्मानं मन्यन्ते लौकायतिकाः। तस्य घटपटादावतिव्याप्तत्वेन दुष्टत्वाद्देह एवात्मेति-चार्वाकाः। देहे मृते चैतन्यादर्शनाद्देहातिरिक्तस्तत्परिमाणकश्चेतन इति दिगम्बराः।

## भाषानुवाद

जीवके स्वरूपनिर्णय विवादास्पद हैं। लोकायतिक पृथ्वी और जल तेज, वायु इन चार ही को भूत शब्द से व्यवहार करता है। वह इन चारों भूतों ही को आत्मा मानता है। यह उसका कथन सर्वथा असङ्गत है, क्योंकि जब तुम भूत जड़ वस्तु को आत्मा कहते हो तब तो घट और पटादि जड़ वस्तुओं को भी आत्मा कहना चाहिए। चार्वाक का यह सिद्धान्त है कि जब पृथिवी और जल, तेज वायु यह चारों भूत देहाकार से परिणत होते हैं तब उस परिणाम विशेष से मदशक्तिवत् भूतों में एक चैतन्यशक्ति उत्पन्न होती है। उस समय चैतन्यविशिष्ट देह की जीवसंज्ञा होती है। चैतन्य विशिष्ट देह में चैतन्य अंश ज्ञानरूप है, देह अंश जड़ रूप है, इसके मतमें जड़ और बोध उभयरूप जीव है। देह नाना प्रकार है,इसी से जीव भी नाना प्रकार है।देह के सङ्ग उत्पत्ति और विनाश मानने से जीवात्मा भी अनित्य है। मरण समय में देह भस्म रूप हो जाता है। जीव परलोक में गमन नहीं करता न उसका पुनर्जन्म ही होता है यह चार्वाक का मत है। देहात्म-वादी चार्वाक का मत सर्वथा असङ्गत है,क्योंकि जब देह को ही आत्मा मानते हो तब मृतक शरीर को भी आत्मा क्यों नहीं मानते, मृतक शरीर में चैतन्य का व्यभिचार होने से शरीर को चैतन्य बतलाना असङ्गत है। किञ्च प्रत्येक भूत में चैतन्यता नहीं है भूत चतुष्टय से परिणत देहाकार आत्मा में चैतन्यता किस कारण से उत्पन्न हुई, इस शङ्का का समाधान वादी नहीं कर सक्ता है, मदशक्तिवत् यह दृष्टान्त प्रदर्शन भी असङ्गत है, क्योंकि मदके प्रत्येक अवयवों में मादकशक्ति विद्यमान है। उन सब अवयवों को एकत्रित होने से सुरा में मदशक्ति अधिक हो जाती है। जब पृथिवी, जल, तेज, वायु इन चारों भूतों में चैतन्यताकी गन्धमात्र भी नहीं है तब इन चार भूतों से उत्पन्न हुए देह में चैतन्यता कहना असङ्गत है चार्वाक एक प्रत्यक्ष प्रमाण को ही यथार्थ ज्ञान का साधन मानता है, यह भी उसका कथन विचार सह नही है क्योंकि अनुमान प्रमाण के बिना प्राणी मात्र का व्यवहार लुप्त प्राय होजायेगा। —क्रमशः

जैसे अतीत वर्त्तमान कालिक विषयों में मनुष्यों की प्रवृत्ति होती है तद्वत् अनागत विषयों में भी लोकों की प्रवृत्ति दृष्टिगोचर होती है, इसीसे साबित होता है कि अनुमान भी प्रमाण है। चार्वाक भी अनुमानप्रमाणसिद्ध प्रमेय को मानता है जैसे परपुरुषों की चेष्टा देख कर उनके अभिप्रायों को अनुमान द्वारा जानता है ; अनुमान प्रमाण नहीं है उसका यह कथन अत्यन्त उपहासास्पद है। यहाँतक चार्वाक मत का प्रदर्शन और उसका खण्डन है। अब जैन मत का समीक्षण करते हैं।

जैनों के मत में देह से अतिरिक्त जीवात्मा है। उसका परिमाण देह के समान है, जिस तरह देह बढ़ता और घटता है वैसे ही जीवात्मा भी वृद्धि और ह्रासता को प्राप्त होता है उन के मत में जीवात्मा में उपचय (वृद्धि) अपचय (ह्रास) रूप विकार होने से आत्मा कूटस्थ नित्य नहीं है किन्तु परिणामिनित्य है यह जैन मत है। दिगम्बर भी इन्हीं का नाम है ; यह मत भी दूषित है कारण कि हस्ति शरीर के तुल्य जिस जीवात्मा का परिमाण है जब उस जीवात्माने हस्ति शरीर का परित्याग किया पश्चात् उस ही जीवात्मा ने अपने कर्मवश से मशक शरीर प्राप्त किया उस अणु परिमाणक मशक शरीर में हस्ति देह के परिमाण-वाला वह जीवात्मा किस प्रकार से समा गया ; इसीसे निश्चित होता है कि देह के समान जीवात्मा का परिमाण कदापि नहीं हो सकता है। किञ्च अन्तिम देह नाश के पश्चात् मोक्ष होता है उस काल में जीवात्मा सूक्ष्म देह तथा स्थूल देह को धारण नहीं करता है, अतएव जीव के परिमाण का सङ्कोच विकास मानने की आवश्यकता नहीं है, इससे जीव का जो परिमाण और स्वरूप है वह नित्य है, इस प्रकार जैनमतवादी मानता है तब वृद्धावस्था में भी जीवात्मा का परिमाण नित्य और नियत मानना चाहिए, जब इस प्रकार का आपका मन्तव्य है तब तुम्हारी की हुई "जीवात्मा का शरीर के तुल्य परिमाण है" इस प्रतिज्ञा का भङ्ग होता है।

## कुञ्चिका

तदयुक्तम्। मातङ्गशरीरं व्याप्य स्थितस्यात्मनो मशकशरीरप्रवेशवैकल्य प्रसङ्गात्। मशकशरीरान्मातङ्गशरीरं प्रविशतः तद्व्यापनसमर्थपरिमाणा

भावेन तत्र तस्य सर्वाङ्गीणसुखानुभवप्रसङ्गाच्च। सङ्कोचविकासवत्त्वमात्मनो-ऽभ्युपगम्यमाने त्वात्मनो विकारः तत्प्रयुक्तानित्यत्वञ्चापद्येत। तस्मान्मोक्षदशाया मात्मनो यदन्त्यं परिमाणं तस्य तथैवावस्थानं जैनैरपि वक्तव्यं, तदनन्तरं देहाभा-वेन तदुचितपरिमाणाप्रसक्तेः। अतो मोक्षदशावस्थितात्मस्वरूपवत् तत्परिमाण-स्यापि नित्यत्वाविशेषात् तदेवात्मनः स्वाभाविकपरिमाणमङ्गीकर्त्तुं युक्तं न तु सङ्कोचविकासवत्त्वमिति। इन्द्रियैर्विना रूपादिविषयकज्ञानासिद्धेरिन्द्रियाण्येवात्मतत्व-मित्येके तदनुयायिनः। सुषुप्तौ तेषां देहवल्लयदर्शनाद् "य एवाहं रूपमद्राक्षं स एवाहं शृणोमि जिघ्रामी त्यादिप्रत्यभिज्ञावाधाद् रूपाद्यनुभवस्य यौगपद्योपपत्तेस्तत्क्रमभ-ङ्गाच्चेत्यादिहेतुभिर्नेन्द्रियाणामात्मत्वम्, किन्तु चक्षुरादिनियामकं शरीराश्रयं मन एवात्मेतिकेचित्। तदपि न। मनसः करणत्वेनात्मत्वायोगात् वाह्यकरणवत्। न हि छिदाकरणानां कुठारादीनां चेतनकर्त्तारमन्तरा कार्यजनकत्वं दृष्टचरं, तद्वत् प्रकृतेपि द्रष्टव्यम्।

## भाषानुवाद

चक्षु कर्ण नासादिक इन्द्रियों के द्वारा रूप आदि विषयों का ज्ञान होता है; अतएव इन्द्रियों को ही आत्मा कहना चाहिए; इस प्रकार चार्वाकमतावलम्बी कहते हैं। यह इन्द्रियात्मवादियों का मत भी दूषित है क्योंकि सुषुप्ति काल में सब इन्द्रियों का लय हो जाता है और जिस आत्माने रूप देखा वही आत्मा शब्द को भी सुनता है वही गन्ध का भी ग्राहक है इस प्रकार का ज्ञान नहीं होना चाहिए। नेत्र रूप को ही देख सकता है श्रोत्र द्वारा शब्द का श्रवण प्रत्यक्ष होता है इन्द्रियों के विषय नियत हैं। इन्द्रियआत्मवादि के मत में द्रष्टा और श्रोता घ्राता मन्ता इन्द्रियों से व्यतिरिक्त आत्मा ही है। किञ्च जिस व्यक्ति ने नेत्रों से घट देखा पश्चात् उस व्यक्तिके नेत्र नष्ट हो गये फिर वह मनुष्य कहता है कि जो मैंने घट नेत्र से पूर्व देखा था उसका अब स्पर्श करता हूँ इस प्रकार की प्रत्यभिज्ञा उसे न होनी चाहिए, कारण कि नेत्र से अनुभूत विषय को त्वगिन्द्रिय किस प्रकार से स्मरण कर सकती है। उक्त प्रत्यभिज्ञा से यह निश्चित होता है कि एकही विषय का द्रष्टा और स्मरण कर्ता आत्मा इन्द्रियों से पृथक् है।

जड़वस्तु चेतन के बिना स्वतन्त्र कार्य्य नहीं करसक्ती है जैसे चेतन के बिना कुठार काष्ठ को छेदन नहीं कर सक्ता है इसी प्रकार इन्द्रियगण बिना चेतन के कार्य्य करने में समर्थ नहीं है इस बात को सभी मनुष्य जानते हैं कि जबतक ड्राईवर कल को नहीं मरोड़ता है तबतक रेलगाड़ी क्या चल सक्ती है ? कदापि नहीं। अतएव इन्द्रियों को विषयों में चालक चैतन्य स्वरूप आत्मा अवश्य मानना होगा। नास्तिक मतावलम्बी इन्द्रियों को अपने अपने विषय में प्रवर्तक मनको मानते हैं। उसको ही आत्मा बतलाते हैं यह भी उनका कथन असङ्गत है क्योंकि मन इन्द्रिय ज्ञान का कारण है वह कर्त्ता नहीं हो सक्ता है मनका भी प्रेरक आत्मा उससे भिन्न है। अब बौद्ध का मत प्रदर्शन करते हैं।

## कुञ्चिका

क्षणिकविज्ञानव्यतिरिक्तवस्त्वन्तराभावात् क्षणिकविज्ञानमेव चेतनमात्मेति योगाचाराः। ज्ञानाकारानुमेयः क्षणिकवाह्यार्थ एव तत्त्वमिति सौत्रान्तिकाः। क्षणिक वाह्यार्थ एवात्मेति वैभाषिकाः। पक्षत्रयेऽपि स एवायमित्यादिप्रत्यभिज्ञाऽसम्भवात्। सुषुप्तौ तेषामभावदर्शनाच्चासम्भवः। नच प्रत्यभिज्ञाया दीपज्वाला इव सन्ततिविज्ञा-नोदयसादृश्यात्तदुपपत्तिरिति वाच्यम्। सुषुप्तौ विज्ञानवत्तत्प्रवाहस्याप्यसम्भवात्। तत्र प्रवाहस्य भावाभ्युपगमे विषयावभासप्रसक्तेः, निरन्तरनिरालम्बज्ञानासम्भवात् तस्माच्छून्यमेवात्मतत्त्वमिति माध्यमिकाः। तदपि न, सर्वस्यापि लौकिकस्य वैदिकस्यच व्यवहारस्योच्छेदापत्तेः। आचक्षते च कणभक्षाक्षचरणमतानुयायिनस्तार्किकाः। देहेन्द्रियादिविलक्षणो ज्ञानेच्छादिचतुर्दशगुणाश्रयो विभुपरिमाणको द्रव्यविशेष-आत्मेति। एतेषां वादिनां मतं दूषयितुं प्रत्यगात्मस्वरूपनिरूपणं प्रतिजानीते-तत्रेति।

## भाषानुवाद

यहाँतक जड़ आत्मवादियों का मत खण्डन किया अब चैतन्य आत्म स्वरूप मानने वाले वादीयों का खण्डन प्रकार दिखलाया जाता है श्रीबुद्धदेव के (१ माध्यमिक २ योगाचार ३ सौत्रान्तिक ४ विभाषिक ) ये चार शिष्य थे क्षणिक विज्ञानात्मवादी योगाचार१। ज्ञानाकारानुमेयक्षणिकवाह्यार्थवादी सौत्रान्तिक २। क्षणिकवाह्यार्थ प्रत्यक्षवादी वैभाषिक३। सर्वशून्यत्ववादी माध्यमिक है ४। इन के मतमें स एवायं इस प्रत्यभिज्ञा की अनुपपत्ति है क्योंकि बौद्धमतवादियों के मतमें प्रतिक्षण में विज्ञान उत्पन्न होता है और नष्ट हो जाता है। जिस प्रकार पूर्व दीप ज्वाला के सदृश यह दीप ज्वाला है यह प्रत्यभिज्ञा होती है उसी तरह

से पूर्व विज्ञान के सदृश यह विज्ञान है इस अभिप्राय से सएवायं यह प्रत्यभिज्ञा उत्पन्न हो सक्ती है। यदि ऐसा कहो तो यह कथन युक्त नहीं है क्योंकि सुषुप्ति काल में जैसे विज्ञान नष्ट हो जाता है उसी प्रकार से विज्ञान की धारा भी नष्ट हो जाती है यदि सुषुप्ति में भी विज्ञान का प्रवाह रहता है ऐसा कहा जाय तो वह भी युक्त नहीं है क्योंकि सुषुप्ति में भी विषयों का प्रकाश होना चाहिए। निरावलम्ब ज्ञान नहीं होता है यहाँतक विज्ञानवाद का खण्डन है। सर्व शून्यवाद मानने से लौकिक और वैदिक व्यवहार लुप्त हो जायेगा इनका मत खण्डन महर्षि श्रीभगवत् अवतार व्यासजी ने ब्रह्मसूत्रों में किया है ग्रन्थ विस्तार के भय से यहाँ पर नहीं लिखा है। देह और इन्द्रियों से व्यतिरिक्त ज्ञान और इच्छादिक गुणों का आश्रय विभुपरिमाणक द्रव्य स्वरूप आत्मा को न्याय और वैशेषिक मतावलम्बी मानते हैं। इन सब वादियों का मतखण्डन पूर्वक श्रुति स्मृति सूत्रमूलक आत्म स्वरूप निरूपण करने की प्रतिज्ञा करते हैं। तत्रेति।

## वेदान्तरत्नमञ्जुषा

तत्र निरूपणीयपदार्थेषु तावत् त्वंपदार्थं निरूपयति-

## वेदान्तकामधेनुः

ज्ञानस्वरूपञ्च हरेरधीनं, शरीरसंयोगवियोगयोग्यम् ;
अणुं हि जीवं प्रतिदेहभिन्नं, ज्ञातृत्ववन्तं यदनन्तमाहुः ॥ १ ॥

## भाषानुवाद

तत्रेति श्री१०८मदाचार्य्यचरण भगवान् श्रीनियमानन्द निर्मित वेदान्त कामधेनु दशश्लोकी में निरूपणीय जो पदार्थ हैं उनमें से प्रथम त्वं पदार्थ का स्वरूप निरूपण करते हैं ज्ञानस्वरूप मिति। संसार में पदार्थ दो विभागों में विभक्त हैं। एक जड़ दूसरा चैतन्य है जिसमें ज्ञान इच्छा और कृति प्रकाशित नहीं होती है वह वस्तु जड़ कहलाती है। जिस वस्तु में ज्ञान, इच्छा कृत्यादि प्रकाशित होते हैं उसको चैतन्य कहते हैं। भाव यह है कि इस कार्य्य के करने से मेरा उत्कर्ष होगा, और निन्दित काम करने से मेरी निन्दा होगी जिसको इस प्रकार का कर्तव्य और अकर्तव्य का विवेक है वह चैतन्य कहा जाता है, जीवात्मा चैतन्य स्वरूप है, और सर्वदा भगवान के परतन्त्र है. जीव का देह के साथ संयोग तथा वियोग होता है इसका अणुपरिमाण है और प्रति शरीर में जीवात्मा भिन्न भिन्न है. और ज्ञाता तथा कर्त्ता भोक्ता है, और जीवात्मा अनन्त हैं। उनकी गणना नहीं कर सकते हैं। इस प्रकार जीवात्मा का लक्षण वेदान्तवाक्य और पूर्वाचार्य महर्षियों ने कहा है।

ज्ञानेति।चेतनं स्वयञ्ज्योतिस्वरूपम् स्वयंज्योतिष्ट्वं नाम करणव्यापारायत्त प्रकाशशून्यत्त्वं तेषामपि प्रकाशकत्त्वात् स्वयंज्योतिष्ट्वस्वरूपत्वसिद्धिः। अनेन तार्किकादिपक्षोऽपि व्यावर्त्यते।

### कुञ्चिका

तत्र = वेदान्ता कामधेनौ। ज्ञानस्वरूप इति। ज्ञनं चैतन्यं स्वरूपमस्येति तथा स तमितिविग्रहः। चेतनशब्दं व्याचष्टे –स्वयमिति। स्वयंज्योतिष्ट्वशब्दं विवृणोति— स्वयमिति। तेषाम् = करणानाम्। अनेन = स्वयंज्योतिष्ट्वनिर्वचनेन। तार्किकास्त्वित्थं मन्यन्ते सुषुप्तौ मूर्च्छायाञ्च विषयाभावाज्ज्ञानास्याभावइत्यर्थ ज्ञानयोर्व्याप्य व्यापकभावस्तथा च नात्मस्वभावश्चैतन्यम्, आत्मानुवृतावपि चैतन्यस्याभावादतइन्द्रियसंयोगसत्त्वे ज्ञनसत्वं तदभावे तदभावइति, आत्मनमनः संयोगजमागन्तुकमस्यचैतन्यं धर्मो न स्वाभाविकोनात इन्द्रियाणां वैयर्थ्यम्। यदि जीवानां स्वाभाविकी ज्ञानशक्तिर्नस्यात्तर्हि, इन्द्रियादि सन्निकर्षेऽपि न जान्नीरन्नाकाशवन्नचैवं तस्माज्जडाएव-जीवाइति। तन्न यतो यदागन्तुकज्ञानं जडस्वभावं तत्कदाचित्परोक्ष कदाचित्सन्दिग्धं कदाचिद्विपर्य्यस्तं यथाघटादि;न चैवमात्मा. तथाहि अनुमिमानोऽप्यपरोक्षः स्मरन्नप्यनुभविकः। सन्दिहानोऽप्यसंदिग्धः विपर्य्यस्यन्नप्यविपरीतः, सर्वस्यात्मा तथा च जीवानां स्वाभाविकं चैतन्यभ्युपगन्तव्वम्। नच तत्स्वाभावस्य चैतन्यस्याभावः। तस्यनित्यत्वात्।

### भाषानुवाद

जीवात्मा चेतन है अर्थात् स्वयं प्रकाशस्वरूप है स्वयं प्रकाश उसे कहते हैं जो दूसरे के प्रकाश से प्रकाशित न हो जीवात्मा को नेत्र आदि इन्द्रियाँ प्रकाशित नहीं कर सकती हैं। क्योंकि इन्द्रियगणों का आत्मा प्रकाशक है। अतएव जीवात्मा स्वयं ज्योतिस्वरूप है।

इस कथन से महर्षि कणाद और गौतम मतानुयायी का मत खण्डन किया वह जीव का स्वरूप इस प्रकार बतलाते हैं कि-आत्मा का स्वाभाविक धर्म चैतन्य नहीं है किन्तु आत्मा का मन के संग संयोग होने पर आत्मा में ज्ञान की उत्पत्ति होती है आत्ममनोयोग के विरह से आत्मा में ज्ञान कदापि उत्पन्न नही होता है। इस अन्वय और व्यतिरेक से सिद्ध होता है कि आत्म मनः संयोगजन्य आगन्तुक आत्मा का चैतन्य धर्म है स्वाभाविक नहीं है यथा सुषुप्ति और मूर्छा समय में आत्म-मनोयोग के अभाव से आत्मा में ज्ञान नहीं उत्पन्न होता है यह उन का

कथन-श्रुति, और स्मृतिसूत्रसे विरुद्धहोने से नही माना जाता है किन्तु श्रुति आदि प्रमाणद्वारा आत्माका स्वाभाविक चैतन्य धर्म है वह कदापि लुप्त नहीं होसक्ता है इस वार्ता को श्रुति और स्मृति सूत्रद्वारा प्रमाणित करने के लिये श्रुति दिखलाते हैं यथा सैन्धवघन इति। यह श्रुति जीवात्मा को ज्ञान स्वरूप बतलाती है इसअर्थ को दृष्टान्त द्वारा समर्थन करते हैं कि

**वेदान्तरत्नमञ्जूषा**

**तथाच श्रूयते। यथा सैन्धवघनोऽनन्तरोऽवाह्यः कृत्स्नो रसघन एव. एवं वारेऽयमात्माऽनंतरोऽवाह्यः कृत्स्नः प्रज्ञानघन एव बृ० ४।५।१३ ॥ "अत्रायं पुरुषः स्वयं ज्योतिर्भवतीति" बृ० ४।३।६॥ चकारो देहादिजड़वर्गवैलक्षण्यसमुच्चायको वाह्यपक्ष, निरसनपरः। देहेन्द्रियमनोवुद्धिप्राणवैलक्षण्यम्।**

**कुञ्चिका**

नित्य चैतन्य वादिन्यश्श्रुतयः प्रत्यगात्मनश्चैतन्यस्वरूपत्वे प्रमाणभूताः सन्ति ता उदाह्रियन्ते यथेति। तत्रापि मूर्त्तौघनः। पा० सू० ३।३।७७॥ इति मूर्त्तिशब्दवाच्यकाठिन्यर्थे हन्तेरप् घनश्चादेशो भवति तथापि सैन्धवघन इत्यत्र काठिन्यधर्मशब्देन तद्विशिष्ट धर्मि लक्ष्यते तथाच सैन्धवघनशब्देन सिन्धुदेशोद्भवलवण काठिन्यविशिष्टपिण्ड उच्यते। अनन्तरः = अन्तरावयवव्यतिरिक्तः। अवाह्यः = वाह्यावयवव्यतिरिक्तः। सर्वोपि रसघनो भवति। अत्रान्तरो वाह्यश्च रसघन इत्युक्ते मध्यमाऽवयवानां रसघनत्व न स्यात। अतस्तत्संग्रहायानन्तरोऽवाह्य इति व्यतिरेकेणोक्तम्—

दृष्टान्तदार्ष्टान्तयोः कृत्स्नशब्द एकदेशजडत्वशङ्का निरासार्थः। प्रज्ञानघनः = प्रकृष्टसुखात्मकज्ञानैकरूपः। अत्रात्मनोज्ञानस्वरूपत्वमुक्तम्। प्रत्यगात्मनः स्वयं प्रकाशत्वद्योतनाय वाक्यमुदाहरति—अत्रायमिति। अत्रास्यां स्वप्नावस्थायामयमात्मा स्वयं ज्योतिर्भवति। ज्ञानस्वरूपत्वात्स्वयं प्रकाशोभवति। स्वाप्नहस्त्यादिभानन्तु धर्मभूतज्ञानेनैवेत्यन्यत्। श्लोकोक्तचकारपदं व्याचष्टे चकार इति। वाह्येति। वाह्यानां वेदस्मृतिवाह्यानां नास्तिकादीनाँ प्रागुपदर्शिताः पक्षास्तेषां निरसनपर इत्यर्थः। तथाच प्रयोगाः भूतचतुष्टयं नात्मा कार्यत्वाद्घटादिवत्। देहो नात्मा भौतिकत्वाद्घटवत्। इन्द्रियाण्यात्मा न भवन्ति करणत्वाद्वास्यादिवत्। मन आत्मा न भवति करणत्वात्। वुद्धिरात्मा न भवति। अन्तःकरणत्वान्मनोवद् जन्यत्वाद् देवादिवच्च। प्राण आत्मा न भवति वायुत्वात् व्यजनवायुवदित्वादयः।

## भाषानुवाद

जैसे लवण के ढेले में अन्तरङ्ग और वहिरङ्ग प्रदेश व्यवहार नहीं होता है, क्योंकि वह लवणपिण्ड सम्पूर्ण रस स्वरूप है। तद्वत् यह जीवात्मा अन्तरङ्ग और वहिरङ्ग प्रदेश से रहित है, वह सुखात्मक और ज्ञान स्वरूप है, उसमें अणु मात्र भी जड़ांश का लेश नहीं है यह अर्थ सैन्धवघन इस श्रुति से सिद्ध होता है। "अत्रायं पुरुषः स्वयं ज्योतिर्भवति" इस श्रुति से जाना जाता है कि आत्मा स्वयं प्रकाश है अतएव वह आत्मा अन्य प्रकाश से प्रकाशित कदापि नहीं हो सक्ता है, ज्ञानस्वरूपञ्च इस श्लोक में जो चकार शब्द का प्रयोग किया है उसका अर्थ स्पष्ट करते हैं कि देह और इन्द्रिय मन, बुद्धि और प्राण इनसे आत्मा पृथक् है, इस अर्थ का समुच्चायक च कार है। इससे श्रुति तथा स्मृतिओं को प्रमाण नहीं मानने वाले नास्तिक चार्वादिकों का मत खण्डन होता है, इनका खण्डन पूर्व प्रदर्शित प्रकार से जान लेना चाहिए। देह और इन्द्रिय आदि जड़वर्ग से आत्मा विलक्षण है, इस वार्त्ता को श्रुति द्वारा प्रमाणित करते हैं। तस्माद्वेति।

## वेदान्तरत्नमञ्जूषा

तस्माद्वा एतस्मान्मनोमयादन्योऽन्तरात्मा विज्ञानमयोऽन्तरात्मा विज्ञानमयः तै० ३।२।४ इतिश्रुतेः। परिच्छिन्नवाह्यानां पक्षे मायावादेऽतिप्रसङ्गं वारयति—ज्ञातृत्ववन्तमिति। ज्ञानाश्रयत्वम्। "योऽयं वेद जिघ्राणीति स आत्मा कतमः" छा० उ० ।८।१२।४। इत्युपक्रम्य "पुरुष एव द्रष्टा श्रोता रसयिता घ्राता मन्ता वोद्धा कर्त्ता विज्ञानात्मा पुरुषः"। उ० प्र०।४।६। विज्ञातारम्, अरे केन विजानीयात्। वृ०।४।५। "जानात्येवायं पुरुषः" न पश्यो मृत्युं पश्यति न रोगं नोतदुःखतां उ० छा०।७।२६।२। सोत्तम-पुरुषो-नोयजनं स्मरन्निदं शरीरम्"। उ० छा०।८।१२।३। "एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्याऽस्तं गच्छन्ति" प्र० उ० ६।५। "यद्वै पश्यन्न पश्यति"।

## कुञ्चिका

देहेन्द्रियमनोभ्योऽतिरिक्तं ज्ञानस्वरूपञ्च प्रत्यगात्मानं श्रुतिमुखेनाह—तस्मा-

द्वेति । मनोमय इति । अत्र प्राचुर्य्यार्थे मयट् मनोबुद्ध्यहङ्काद्ध्रचित्ताख्यान्तःकरण-वृत्तिषु मनोवृत्तेः प्राचुर्य्यादित्यर्थः । अत्र विज्ञानमयो जीवात्मा न बुद्धिमात्रम् । मयट्प्रत्ययेन व्यतिरेकप्रतीतेः । अत्र प्राणादिभ्य आत्मनो विलक्षणत्वं ज्ञान-स्वरूपञ्चोक्तं भवति । ज्ञानस्वरूपनित्यशुद्धबुद्धमुक्तं सतामात्रैकाद्वितीयसजातीया-दिभेदशून्यं सर्वविशेषनिर्मुक्तं ब्रह्मैव जीवात्मत्वेनाभ्युपगच्छतां प्रच्छन्नबाह्यानां मायावादिनां पक्षेऽतिप्रसक्तिं निराकुर्वन्नाह । प्रच्छन्नेति । योऽयं वेद इति । अत्रा-त्मनोऽवघ्रातृत्वोक्त्या ज्ञातृत्वं सिद्ध्यति, अवघ्राणस्य ज्ञानविशेषत्वात्, तेन चात्मनो ज्ञानगुणकत्वं सिद्ध्यति । ज्ञानाश्रयत्वस्वयंप्रकाशत्वयोः सह प्रतिपादक-वाक्यमाह—कतम इति । शङ्कास्पदेषु क इत्यर्थः । ज्ञातृत्वद्रष्ट्रत्वकर्तृत्वज्ञानत्वा-देरात्मनि सहोक्तिं दर्शयति—पुरुष एवेति । अत्र द्रष्टा स्प्रष्टेत्यादिनिर्देशादात्मनो ज्ञानगुणकत्वं सिद्ध्यति । विज्ञानात्मेत्यनेन ज्ञानस्वरूपत्वञ्च सिद्ध्यति । एतेनात्मनो ज्ञातृत्वमेव न ज्ञानस्वरूपत्वमिति वदन्तस्तार्किकास्तथात्मनो ज्ञानस्वरूपत्वमेव न ज्ञातृत्वमिति वदन्तो मायावादिनश्च निरस्ता भवन्ति । ज्ञातव्यस्य निष्कृष्टात्मस्वरूपस्य ज्ञातृत्वमाह—विज्ञातारमिति । फलितमनेन प्रत्यगात्मनः स्वाभाविकं ज्ञातृत्वम् । नहि प्रत्यगात्मनः संसृतिदशायामेव ज्ञातृत्वमपितु मुक्तावपीत्याह—जानात्येवा-यमिति । अवधारणासङ्कोचान्मुक्तावपि ज्ञातृत्वसिद्धिः ।

## भाषानुवाद

एतस्मादिति । इस श्रुति द्वारा यह सिद्ध हुआ कि जीवात्मा प्राण और मनसे पृथक् है । और ज्ञान स्वरूप है । पूज्यपाद श्रीशङ्कराचार्य्यजी का सिद्धान्त यह है कि परमार्थ भूत सत्य स्वरूप एकही आत्मा है उसको ब्रह्म कहते हैं, वह ज्ञान स्वरूप है । जीवात्मा का ज्ञान स्वरूप मात्र लक्षण करने पर मायावादियों के मत साधारण लक्षण हो जायेगा, इस शङ्का को निवारण करने के लिये ज्ञातृत्ववन्तं इस विशेषण का प्रदान किया इसका यह अर्थ है कि आत्मा ज्ञान का आधार है इस वार्ता को श्रुति द्वारा प्रमाणित करते हैं योऽयं वेद इति ।

---

## कुञ्चिका

मुक्तौ ज्ञाननिषेधश्रुतीनां विषयविभागंदर्शयति—न पश्य इति । पश्यो-ऽत्र तदेकं पश्यतीति समानप्रकरणाद् ब्रह्मदर्शी जीवः । विद्यया ब्रह्मप्राप्तेः प्रति-बन्धनिवृतिपूर्वकत्वमाह—न मृत्युं पश्यतीति । मृत्युः = प्रमादः । मोहो वा । मृत्यु-प्रमुखनिवृत्तिरित्यर्थः । पाप्मनां निश्शेषक्षये मृत्यूपलक्षितं सर्वमनिष्टं न भवति लोकानुशरणञ्च च्छम् । तदेकदर्शनमिहोपायः फलं वा न प्रेत्य संज्ञास्तीति विद्या प्रकर-णस्थवाक्येन मुक्तस्य ज्ञानलोपशङ्कांनिवर्तयन् मृत्युतत्कार्य्य निवृत्तिञ्चव्यनक्ति-न पश्य इत्यादिना । मुक्तस्य तदातन परदुःखप्राक्तन स्वदर्शनेन तयोः स्वाश्रितत्ववर्तमा-नत्वाभावान्न तं प्रति प्रतिकूलत्वम् । एवं हि बन्धदशायामपि दृष्टं तत्र तु परदुःख दुखित्वं गतानुशोचनञ्च कर्मोपाधिकमेव न रोगन्नोत दुखितां सर्वं ह पश्यतीत्या-दिना विशेषेण दृश्यमानेष्वपि स्वप्रातिकूल्यदर्शनान्नास्तीति हि स्थाप्यत इति भावः ।

स उत्तमः पुरुष इत्यत्र वाक्यशेषान्मुक्तस्य जक्षणादि बुद्धि पूर्व व्यापार-त्व सिद्धिः । मुक्तस्य संस्कार जन्यधी निषेधात् स्वतः सिद्धसाक्षात्कारत्वं व्यञ्जयति—नोपजनमिति । संस्कारोपाधिकत्वात्तदानीं निवर्त्तते तत एव न स्मृतिः स्वर्ग नरकादि गतस्तु प्रतिकूलमनुकूलञ्च प्रागुक्तं स्मरेन्न तथा मुक्त इति भावः । य पुरुषप्राप्तस्य मुक्तस्य ज्ञातृत्वे ऽनुवर्तमान एव देहेन्द्रियविलयं दर्शयति । एवमिति । षोडशकला = भूतेन्द्रियाणि मनश्च ।

औपाधिकसमुदायैकदशत्वात् कलात्वोक्तिः । पुरुषः = अत्र परमात्मा । तत्प्राप्तिदशायामिन्द्रियादयो न जीवं बध्नातीत्यर्थः । आत्मनो ज्ञातृत्वं धर्मभूतज्ञानस्य नित्यत्वञ्च वनतीं श्रुतिमाह— नहि द्रष्टुरिति ।

## भाषानुवाद

मुक्तिसमयमें भी ज्ञान जीवात्मा में रहता है इसको श्रुति द्वारा निश्चित करते हैं—"न पश्यो मृत्युं पश्यति" पश्य नाम ब्रह्मद्रष्टा जीवः मृत्यु नाम प्रमाद या मोह और दुःख को नहीं देखता है । पश्य शब्द से यह सिद्ध होता है कि मुक्ति काल में ब्रह्म साक्षात्कार मुक्त को होता है अतएव मुक्ति में भी जीव को ज्ञान होता है ।

वह जीव जानता है, और गन्ध को ग्रहण करता है। इस श्रुति में जिघ्राणि इस शब्द से यह सिद्ध होता है कि अवघ्राण नाम गन्ध विशेष का ज्ञान उसका आश्रय जीव है। इससे यह साबित हुआ कि ज्ञान गुण आत्मा में है। आत्मा द्रष्टा और ज्ञाता श्रोता मन्ताबोद्धा है इसको भी श्रुति से सिद्ध करते हैं। "पुरुषएवेति" आत्मा का स्वरूप प्रकृति से परे होने के कारण तर्क से अगोचर है अतएव अनुमान आदि प्रमाण द्वारा नहीं जाना जाता केवल श्रुति और स्मृति सूत्र से ही जीव का स्वरूप निश्चित होता है। उपदर्शित श्रुति आत्मा को ज्ञाता और कर्त्ता बतलाती है और "विज्ञानात्मा इति" श्रुति द्वारा आत्मा ज्ञानस्वरूप सिद्ध होता है। उपदर्शित श्रुतियों से यह निर्धारित हुआ कि आत्मा ज्ञानस्वरूप है और ज्ञान का आश्रय भी है। अतएव केवल ज्ञानाश्रय आत्मा है और ज्ञानस्वरूप नहीं है इस प्रकार कथन करने वाले नैयायिक और केवल ज्ञानस्वरूप आत्मा है ऐसे माननेवाले भगवत्पाद श्रीशंकराचार्य मतानुयायी का खण्डन होचुका है। आत्मा को स्वाभाविक ज्ञातृत्व बतलाने वाली श्रुति का प्रदर्शन करते हैं। "विज्ञातारमिति" आत्मा संसार दशा में ही ज्ञान का आश्रय है। और मुक्ति समय में उसे ज्ञान नहीं होता है इस शंका को निवारण करने के लिये श्रुत्यन्तर का प्रदर्शन किया जाता है "जानात्येवायमिति" इस श्रुतिनिविष्टएवकार से सिद्ध होता है कि आत्मा जानता ही है अतएव मुक्ति काल में भी आत्मा में ज्ञानश्रयता सिद्ध होती है जिस काल में ब्रह्म का साक्षात्कार मुक्त को होता है कारण उसको स्वतःसिद्ध ही सर्व वस्तुओं का प्रत्यक्ष होता है। अतएव ज्ञान मुक्ति में भी जीव को होता है। मुक्त पुरुष को प्राकृतन संस्कार जन्य ज्ञान नहीं होता है। अतएव वह पहिले अनुभूत स्वर्ग और नरक के सुख और दुख को स्मरण नहीं करता है।

## वेदान्तरत्न—मञ्जूषा

नहि द्रष्टुर्दृष्टेर्विपरिलेपो विद्यतेऽविनाशित्वात् न हि घ्रातुर्घ्रातेर्न हि रसयितूरसयितेर्न हि वक्तुर्वक्तेर्न हि श्रोतुः श्रुतेर्न हि मन्तुर्मतेर्न हि स्पष्टुः स्पृष्टेर्नहि विज्ञातु विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्। अविनाशीवाऽरेय मात्मा अनुच्छित्तिधर्मेत्यादि श्रुतिभ्यः।

## कुञ्चिका

आत्मनो ज्ञातृत्वं धर्मभूतज्ञानस्य नित्यत्वञ्च वदन्तीं श्रुतिमाह—नहीति। द्रष्टुः = दर्शनाश्रयप्रत्यगात्मनः। दृष्टेः = धर्मभूतज्ञानस्य। विपरिलोपः = नाशः। न विद्यते = न भवति। तत्र हेतुमाह—अविनाशित्वादिति। नित्यत्वादित्यर्थः। एवमग्रेऽपि घ्रातृसम्बन्धिज्ञानं नित्यम्। ज्ञातृसम्बन्धिज्ञानं नित्यं कुतः। अविनाशित्वादात्मनो विशिष्टस्य नित्यत्वेन विशेषणीभूतज्ञानस्यापि नित्यत्वात्। यद्वा धर्मिनित्यत्वेन तत्स्वाभाविकधर्मस्यापि नित्यत्वादित्यर्थः। उक्ताभिः श्रुतिभिः ज्ञानाश्रयत्वद्रष्ट्रत्वश्रोतृत्वमन्तृत्वादिधर्मवतः प्रत्यगात्मनो धर्मभूतज्ञानं स्फुटमेव दर्शितं भवति। धर्मिण आत्मनस्तद्धर्मणाञ्च नित्यत्वं श्रुतिमुखेन समर्थयति = अविनाशीति। नित्य इत्यर्थः अनुच्छित्तिधर्माणां द्रष्ट्रत्वज्ञातृत्वादीनां नाशो न भवतीत्यर्थः। एतेनात्मनो ज्ञातृत्वमेव न ज्ञानस्वरूपत्वमिति वदन्तस्तार्किकास्तथात्मनो ज्ञानस्वरूपत्वमेव न ज्ञातृत्वमिति वदन्तो मायावादिनश्च निरस्ता भवन्ति। ज्ञातृत्वादयोऽन्तःकरणधर्मा इत्यप्यपाकृतम्। यथा येन दृश्यत्वादिविरुद्धधर्मेण देहस्य द्रष्ट्रत्वानुपपत्तिस्तथाऽन्तःकरणस्यापि द्रव्यत्वाद् द्रष्ट्रत्वानुपपत्तिः। ज्ञातृत्वादिकं प्रति चेतनत्वादिकमेव प्रयोजकमन्यथा देहस्यापि ज्ञातृत्वापत्तेस्ततश्च चार्वाकं प्रति देहात्मभेदस्त्वयापि नोपपादयितुं शक्यते। नच शरीरे देहत्वेनैव ज्ञातृत्वाभावं साधयामः। देहत्वेन तत्र ज्ञातृत्वाभावोऽनुमीयत इति वाच्यम्। देहत्वाभाववतिपटादौ ज्ञातृत्वादर्शनात्। अतो ज्ञातृत्वाभावं प्रत्यचित्त्वमेव प्रयोजकं वाच्यं तथासति, अचित्त्वादिभिर्देहस्येवान्तःकरणस्य ज्ञातृत्वं द्रष्ट्रत्वं नोपपद्यत इति भावः।

## भाषानुवाद

मुक्तपुरुष भगवान को प्राप्त होकर उसके प्राकृत देह और इन्द्रिय लुप्त होजाते हैं। आत्मा का ज्ञातृत्व और उसका धर्म भूत ज्ञान नित्य है यह वार्त्ता न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते। इस श्रुतिसे सिद्ध होता है कि द्रष्टाकी दर्शनशक्ति का लोप नहीं होता है क्यों कि दर्शन शक्ति अविनाशी अर्थात् नित्य है। घ्राता की घ्राणशक्ति, रसयिता की रसनशक्ति, श्रोत्र की श्रवणशक्ति, मन्ता की मननशक्ति, स्पर्शज्ञानाश्रय की स्पर्शन शक्ति, विज्ञाता की विज्ञानशक्ति का लोप

नहीं होना है क्यों कि वह सब शक्ति नित्य है। अरे मैत्रेयि यह आत्मा अविनाशी नित्य है इसके धर्मों का उच्छेद नहीं होता है उपदर्शित श्रुति प्रमाण होने से ज्ञाता ' अर्थात् ' ज्ञानाश्रय जीव है।

## वेदान्त रत्न मंजूषा

ज्ञोऽत एव ब्र० सू० २ । ३ । १८ कर्ताशास्त्रार्थवत्वात् ब्र० सू० २।३।३२ इति न्यायात्। एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विद इति गीयमानाच्च। कर्तृत्वादीनामप्युपलक्षणम्। ननु स्वयंज्योती रूपस्य ज्ञानस्यात्मनो ज्ञानाश्रयत्वं विरुद्धम्। ज्ञानत्वाविशेषात् नहि जले जलं भिन्नमवतिष्ठते ज्योतिषि ज्योतिर्वा। अतो बुद्धिवृत्तिप्रतिविम्बितस्य चेतनस्वरूपस्य ज्ञानत्वोपचार इति चेन्न।

## कुञ्चिका

आत्मनो नित्यत्वे ज्ञानस्य स्वाभाविकधर्मत्वे च प्राक्श्रुतिवाक्यमुपन्यस्य सूत्रमुदाहरति—ज्ञोऽत एवे ति। अत एव = उदाहृतश्रुतिभ्यो जीवात्मा एव ज्ञ ज्ञान-गुणकत्वेसति ज्ञानाश्रय इति सूत्रार्थः। स्यादेतद्यदि तत्राभिप्रेतं धर्मज्ञानं सिद्ध्येत् नतु तदस्ति ज्ञानयोरत्यन्तसजातीयतयाऽऽधाराधेयभावोऽसम्भावोजले निक्षिप्त-जलवदति शङ्कते नन्विति। न दृश्यतेऽभेदे कुत्राप्यधाराधेय भावः किन्तु विभन्न वस्तुनोरिति न ज्ञानस्वरूपस्यात्मनो ज्ञानाश्रयत्वमित्यर्थः। विरुद्धमिति। ज्ञानस्वरूपत्व मात्मनो निरुच्य पुनः ज्ञातृत्वमभिधत्ते स्वमिन् स्ववृत्तित्वाभावेन विरोध इत्यर्थः। ज्ञानयोरभेदं दृष्टान्तेन परबुद्ध्यारुढं करोति-नहीति। बुद्धिवृत्तौ चेतनः प्रतिविम्बति प्रतिविम्बश्च विषयविषयिणोरसम्बन्धविशेषस्ततश्च बुद्धिधर्माणां ज्ञातृत्वादीनां चैतन्य उपचारुदहं जानामीति व्यवहार उपपद्यत इत्याह—अत इति। ज्ञानस्वरूप-स्यात्मनो ज्ञानाश्रयत्वाभावादेवेत्यर्थः। जीवस्य ज्ञानस्वरूपत्वे कथं तस्य ज्ञानगुण-कत्वं नहि स्वरूपमेव स्वस्य गुणो भवतीतिशङ्कितुराशयः। विषमोयं दृष्टान्तः। जलयोर्द्रव्यत्वेनात्यन्तसजात्यान्न प्रत्यक्षेण तत्र भेदोपलभ्यते तत्रापि सावयवद्रव्य-त्वेन भेदोऽनुमीयते, इत्याशयेनोक्तशङ्कामपाकरोति—नेति। धर्म धर्मिणोरत्यन्तसा-जात्यं यदि तयोरभेदं प्रति हेतुः स्यात्तदा धर्मधर्मिणोभेदः स्यान्नत्वेत्वं किन्तु धर्म धर्मिणोरत्यन्तसाजात्येन तयोर्भेदो न गृह्यत इत्यर्थः ज्ञानयोरपि धर्म धर्मिभावमभ्यु-पेत्याधाराधेयभावो उपपद्यत इत्याह्—तयोरिति। ज्ञनयोरित्यर्थः। यद्यपि ज्ञानत्वेन ज्ञानयोर्विशेषो नास्ति तथापि धर्मताधर्मितयोर्भेदात्। धर्म धर्मिणोर्वैलक्षण्येनाधा-राधेयभावः सम्भवतीत्यर्थः।

नहि धर्मिधर्मयोरत्यन्तसाजात्यमत्यन्तभेदनियामकमपितु भेदाग्रह-मात्रमेव तयोर्ज्ञानत्वाविशेषेऽपि धर्मित्वधर्मत्वावच्छेदेन विजातीयत्वाद्दृष्टान्तासिद्धेः। द्युमणितत्प्रभयोस्तैजसत्वसाम्येऽपि द्युमणिप्रभात्वावच्छिन्नतया धर्म-धर्मिभावस्य दृष्टचरत्वान्नानुपपत्तिः। वस्तुतस्तु जले ज्योतिषि चात्यन्तसाजात्येन भेदाग्रहेपि भेदस्य सत्त्वमेव सावयवद्रव्यत्वेनानुमानात् अन्यथा घटादौ पार्थिवावयवानामप्यभेदः कुतो नाशङ्कनीयः तथात्रप्रयोगः

## कुञ्चिका

धर्मित्वावच्छिन्नं स्वरूपभूतज्ञानं धर्मत्वावच्छिन्नंज्ञानं तस्य गुणभूत-मितिविवेकः। उक्तार्थं द्रष्टान्ते न परबुद्ध्यारूढं करोति द्युमणीति। द्युमणिः सूर्यः सच स्वयंतेजस्वरूपोऽपि तेजोरूपायाः प्रभाया आश्रयो भवति तस्य प्रभा-विशिष्टरूपेणावस्थितत्वात् तयोर्द्युमणित्वेन प्रभात्वेन धर्मधर्मिभावस्य सर्व-जनसिद्धत्वात् अप्रत्यक्षस्यात्मनो यथाज्ञानस्वरूपत्वं श्रुतिप्रमाणेन स्वीक्रियते तथा तेनैव प्रमाणेन तस्य ज्ञानाश्रयत्वमभ्युपेयम् स्वरूपभूतज्ञानात् पार्थक्येन धर्म-भूतज्ञानस्य स्वीकारान्न तत्र विरोधावकाश इत्यर्थः यद्यपि धर्मितावच्छेदकादि-भेदेन ज्ञानतदाधारयोर्धर्मधर्मिभावस्तथापि नीरे निक्षिप्तस्य नीरस्य यथा परस्पर-मभेदो जायते तद्वत् ज्ञानतदाधारयोरपि मिथोरभेदस्स्यादित्यत आह - वस्तुत-स्त्विति। धर्मधर्मिणोरत्यन्तसाजात्यान् भेदो निवर्त्तत इति नायं नियमः किन्तु भेदो निगृह्यते तदग्रहेऽपि धर्मिधर्मयोर्भेदस्तदवस्थ इत्यर्थः नीरे निक्षिप्तस्य नीरस्य सावयवद्रव्यत्वेन तत्र भेदोऽनुमीयत इत्याह - सावयवेति। विपक्षे बाधक-तर्कमुपन्यस्यति - अन्यथेति। पदार्थयोरत्यन्तसाजात्यस्याभेदनियामकत्व इति तदर्थः पार्थिवत्वेन घटतदवयवानां कम्बुग्रीवादिमत्वानां सजातीयानां परस्परमभेदः स्यात्। अनुमानं दर्शयति-तथाचेति।

## भाषानुवाद

ज्ञान स्वरुप आत्मा ज्ञानका आधार नही हो सक्ता है। ज्ञान द्वय का भेद नही होता हैं इस वार्ता को जल के द्रष्टान्त से पूर्व पक्षी ने कहा था उस का वह

दृष्टान्त असम्भव है। क्यों कि धर्मधर्मि की अत्यन्त सजातीयता भेदाभाव में नियामक नही है किन्तु भेद का ज्ञान नहीं होता है इस में नियामक है। जल में जो जल मिला दिया गया है उन दोनों जलों की अत्यन्त सजातीयता होने से उन दोनों व्यक्तियों का भेद ज्ञान नहीं होता है किन्तु उनों का भेद है। प्रकृत में यह निश्चय है कि जो आत्मा ज्ञान स्वरूप धर्मी है उसका धर्म ज्ञान है धर्मिता और धर्मता भेदक हो ने से धर्म और धर्मि की विजातीयता है। जैसे सूर्य और उस की प्रभा का तेजस्त्वधर्म से तुल्यता है तो भी उन दोनो का सूर्य त्व और प्रभात्व भेद से भेद प्रत्यक्ष सिद्ध है। वास्तवमें तो यह वार्ता है कि तेज मे तेज और जल में जल को मिला देने पर उन दोनों व्यक्तियों का अत्यन्तसजातीयता होने से भेद प्रत्यक्ष नही होता है परन्तु उन दोंनो का भेद है वह भेद सावयवद्रव्यत्वहेतु द्वारा निश्चित होता है जैसे घट के द्यणुक का प्रत्यक्ष नही होता है तो भी उन दोनों का भेद है जिन जिन पदार्थों की अत्यन्त सजातीयता होती है इनों का अभेद होंजाता है इस प्रकार नियम माना जाय तो घट में जो पृथ्वी के अवयव है उनो का भी अभेद क्यों नहीं हो सक्ता है। इस से साबित हो चुका कि अवयवी पदार्थ अवयवों से भिन्न होता है। यहाँ पर यह अनुमान है कि जल में निक्षिप्त जल भिन्न रहता है कारण वह सावयवद्रव्य है। और जो पूर्व पक्षी ने कहा था कि बुद्धि वृत्ति में चेतन प्रतिविंव को ज्ञान कहा जाता है इस शङ्का का निबारण इस प्रकार है कि सूर्य के प्रतिविम्व से देशवृत्तितम और शीत की निवृत्ति कदापि नही हो सक्ती है तैसें प्रतिविम्व भूतचेतन से ज्ञान का कार्य अज्ञान निवृत्ति भी नहीं हो सक्ती है।

## मञ्जूषा।

जले निक्षिप्तजलं भिन्नत्वेनावस्थातुमर्हति,सावयवद्रव्यत्वात् पार्थिवरजांसि-निक्षिप्तपार्थिवरजोवत्। तिलराशौ निक्षिप्ततिलवच्च। किञ्च नहिबुद्धिवृत्तिप्रतिविम्बिते चेतने ज्ञानत्वोपचाराभ्युपगमे ज्ञानजन्यव्यवहारसम्भवस्तथात्वे च सूर्यप्रतिविम्बेनापि सूर्यप्रकाश्यभूतदेशीयतमःशीतयोर्निवृत्तिःस्यात् नचदृष्टचरा युक्ता वा। किञ्चास्तां वृत्तिप्रतिविम्बितचेतनस्य ज्ञानत्वव्यवहारःप्रतिविम्ब एव तावन्नसिद्ध्यति,चो भयोश्चे तनयो बिम्बौपाध्योर्निरवयत्वान्नीरूपत्वच्च, तथा च तस्यापि प्रतिबिम्बत्वाभ्यु-पगमे रसादीनामापि शब्दादौ कालादौ वा कालादीनामपि रसादौ प्रतिबिम्बापत्तः। एतेन ब्रह्मपतिबिम्ब एव जीव इत्यादि निरस्तम्। दूषणसाम्यात। ब्रह्मभूतबिम्बसा

वेदान्त–रत्नमञ्जूषा।

स्याविद्यारूपोपाधेश्च निरवयवत्वादिसाम्यात् ननु नीरूपनिरवयवस्यापि रूपस्य गगनादेश्च प्रतिबिम्बदर्शनान्नोक्तविरोध इति चेन्न। सावयवद्रव्याश्रित-स्यैव रूपस्य सूर्यनक्षत्रादिप्रभायुक्तस्यैवाकाशस्य तथात्वदर्शनात्। उक्तानुप-पत्तेस्तादवस्थ्यमेव। वस्तुतस्तु गगनं रूप्येव। पञ्चीकृतभूतत्वात् पृथिव्यादिवत् अत एव सावयवपरिच्छिन्नत्वयोरपि तत्र भावान्न तत्प्रतिबिम्बदर्शनम्, अनुप-पत्त्युद्धारे प्रयोजकम्। एतेनैवाकाशे नीलत्वादिप्रत्ययो भ्रम इत्यपि निरस्तम् रूपादेस्तत्र सत्त्वेन भ्रमत्वोक्तेस्तुच्छत्वात्। नच॥

॥ कुञ्चिका ॥

धर्मधर्मिणोभेदसत्वप्रदर्शनाय प्रतिज्ञादिरूपन्यायावयवचतुष्टयमाह। तथाचेत्यादिना। यद्युपचारिकस्य कार्यकारित्वं स्यात्तदा बुद्धिवृत्तिप्रतिबिम्बितचेतनेना-प्यज्ञाननिवृत्तिः स्यादित्याह। किञ्चेति। ज्ञानजन्यो व्यवहारः, अज्ञाननिवृतिः, औपचारिकस्यापि कार्य्यकारित्वे आदित्यो यूपइति श्रुत्या सूर्य्यत्वेनोपचारितादपि यूपात्तमोजाड्यादिनिवृत्तिप्रसङ्गादित्याह। तथात्वेचेति।

"तथात्वे" औपचारिकस्यापि कार्यकारित्वे। निवर्त्तते चतमसां चयः शीतश्च सहस्रांशोरश्मिभिः विद्योतन्ते च यावन्तः पदार्थाः घटादयः न निवर्तते घटजला-दिवृत्तिसूर्यप्रतिबिम्बेन दिशां तमः पुंवृत्तिशीतजनितकम्पश्च अतो नास्ति औपचारि-कस्य कार्य्यंप्रतिजनकत्वं तेन सिद्धं पारमार्थिकं आत्मनो ज्ञातृत्वमितिभावः।

शक्यते तदा व्यवहर्त्तुं वृत्तिप्रतिबिम्बिते चेतने ज्ञानत्वं यदि वृत्तिश्चेतनयो-र्बिम्बप्रतिबिम्बभावः सिद्ध्येत् स च न सिद्ध्यति प्रतिबिम्बं प्रति उपाधेर्बिम्बस्य च सावयवत्वरूपवत्वस्य प्रयोजकत्वात् प्रकृते च बिम्बश्चेतनः, न रूपी नाप्यवय-ववान्। उपाधिरूपा बुद्धिः न रूपवती नाप्यवयववतीत्याह। किञ्चेति।

कालधर्मादीनां शब्दस्पर्शादौ वायुपिशाचादीनाञ्चाक्षुषाणां कालादौ प्रतिबिम्बतापत्तिरिति विपक्षे बाधकतर्कमाह। तथाभूतस्येति। नीरूपस्य निरवय-

वस्यचेत्यर्थः। यदि नीरूपस्य निरवयवस्य च प्रतिबिम्बः स्यात्तदा रसादीनां शब्दादौ प्रतिबिम्बः स्यान्नच तथा श्रूयते दृश्यते कुत्रापीत्यर्थः। चेतनप्रतिबिम्ब एव जीवस्तस्याविद्याया, अन्तःकरणस्यवोपाधेः कल्पितत्वेन तन्नाशे जीवब्रह्मणो-रैक्यं सिद्ध्यतीति मायावादिनो वदन्ति। अमुमर्थं दूषयितुमाह—एतेनेति। प्रागुप-दर्शितदोषेणेत्यर्थः निरासे हेतुमाह। दूषणेति दूषणसाम्यं विवृणोति—ब्रह्मभूतेति।

॥ भाषानुवाद ॥

जिस समय सूर्य का उदय होता है, उसी समय सूर्य अपनी रश्मियों के द्वारा दिशाओं में फैले हुए अन्धकार को दूर कर देता है और जागतिक सकल पदार्थों का प्रकाश होने लगता है और शीत की भी निवृत्ति होती है। इसी प्रकार वास्तविक ज्ञान से ही अज्ञान की निवृत्ति होती है। काल्पनिक ज्ञान से अज्ञान की निवृत्ति कदापि नहीं हो सकती है, जिस वेद की श्रुति आत्मा को ज्ञान स्वरूप कहती हैं उन्हीं वेदों की श्रुति आत्मा को ज्ञानाश्रय भी बतलाती हैं। वेद का एक भाग मानना दूसरे भाग का परित्याग करना यह सर्वथा असङ्गत है। बुद्धि वृत्ति में प्रतिबिंब चेतन अज्ञान का निवर्तक नहीं हो सकता है, यह बात्त तो रही वास्तव में तो प्रतिबिम्बवाद ही सिद्ध नहीं होता है। क्योंकि चेतन और वृत्ति यह दोनों बिम्ब और उपाधि निरवयव और नीरूप है सावयव और रूपवान वस्तुओं में ही सावयव और रूपवान वस्तु का प्रतिबिम्ब पड़ता है यथा दर्पण में मुख का प्रतिबिम्ब दिखलाई देता है। कारण दर्पण रूपवान है और सावयव हैं और मुख भी रूपवान सावयव है। यदि नीरूप और निरवयव वस्तुओं का भी प्रतिबिम्ब माना जाय तो शब्द में रस का और शब्द में काल का भी प्रतिबिंब पड़ना चाहिये वह प्रतिबिंब किसी ने नहीं देखा, न श्रवण इन्द्रिय के आजतक गोचर हुआ है इस दूषण से ब्रह्म का प्रतिबिंब जीव है यह पक्ष भी निरस्त हो चुका क्योंकि बिंबरूप चेतन और अविद्यारूप उपाधि यह दोनों निरवयवनी रूप है। जो वस्तु रूपवान और सावयव है उसका ही प्रतिबिम्ब पड़ता हैं इस नियम में व्यभिचार की शङ्का है क्योंकि नीरूप और निरवयव रूप का और तादृश आकाश का भी प्रतिबिंब दृष्टिगोचर होता है।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
ब्रह्मविन्दूपनिषत् ॥ १२ ॥

कुञ्चिका

उपाधेर्बिम्बस्य च सावयवत्वरूपवत्त्वं प्रतिविम्बतायां प्रयोजकमिति प्राग-भिहितं तत्र व्यभिचार शङ्कते—नन्विति । निरवयवनीरूपस्याकाशस्य रूपस्य च प्रतिविम्बदर्शनाद्व्यभिचारस्तथा च व्यभिचारज्ञानकारणताविघटकत्वेन नोक्त-कार्य्यकारणभावः साधीयान् । प्रकृते नीरूपस्य निरवयवस्य चैतन्यस्यापि प्रतिविम्बो रूपरहितायामविद्यायामन्तः करणस्येति, शङ्कितुराशयः । द्रव्याश्रितत्वेनैव सर्वत्र रूपमुपलभ्यते तदाश्रितस्यैव रूपस्य प्रतिविम्बः सावयवे रूपवति प्रत्यक्षगोचर एव दृश्यते न केवलस्यैवं सूर्य-चन्द्रादि प्रभामण्डलयुक्तस्यैवाकाशस्य सम्भवति न तु केवलस्याकाशस्यान्यथाऽन्धकारेऽप्याकाशस्य प्रतिविम्बापत्तिरतो न तत्र व्यभि-चारात्रकाश इत्याशयेनोक्तां शङ्कां परिहरति—नेति । तथात्वदर्शनात् = प्रतिविम्ब-त्वदर्शनात । उक्तानुपपत्तेरिति । नीरूपस्य निरवयवस्य चेतनस्य प्रतिविम्बताऽनु-पपन्नैवेत्यर्थः । नभो हिद्रव्यं सन् रूपस्पर्शविरहान्नवाह्येन्द्रियप्रत्यक्षम् । नापि मानसम् मनसोऽसहायस्य वाह्येऽप्रवृत्त स्तस्मान्नभसि नीलरूपवत्ताप्रत्ययो भ्रमो वस्तुतोरूप-शून्यस्याकाशस्य प्रतिविम्बदर्शनाद्व्यभिचारादनवस्थाएवेत्य आह—वस्तुत-स्त्विति । पञ्चीकृतस्याकाशस्य सावयवत्वरूपित्वचाक्षुषत्वादीनां सत्वेन तत्प्रतिविम्बे न व्यभिचारशङ्कोत्थानमित्यर्थः यथा नीरूपस्याकाशस्य प्रतिविम्बस्तथानीरूपस्य चेतनस्यापि प्रतिविम्बो जीव इति विपमोऽयं दृष्टान्तः ।

पञ्चीकरणप्रक्रियायां नभसि रूपादीनां सत्वात्तस्मात् प्रतिबिम्ब प्रति उपाधेर्बिम्बस्य च सावयवत्वरूपवत्वचाक्षुषत्वादीनां प्रयोजकत्वंसुस्थितमिति स्फोर-यति अत एवेति । रूपवत्वादेवेत्यर्थः । एतेन = पञ्चीकृताकाशस्य रूपवत्त्वेन । निरासे हेतुमाह । रूप देरिति । तत्र आकाशे ।

भाषानुवाद

उक्तशङ्कासमाधान इस प्रकार है कि, द्रव्य के आश्रय से ही गुण की उपलब्धि होती है । यथा घट के आश्रित रूपका ही प्रत्यक्ष होता है अतएव द्रव्याश्रित रूप का ही प्रतिविम्ब सावयव वस्तु में पड़ता है न केवल रूप का, एवं सूर्य और चन्द्र आदि प्रभाविशिष्ट आकाश का ही प्रतिबिम्ब पड़ता है केवल आकाश का प्रतिविम्ब कदापि दृष्टि गोचर नहीं होता । यदि इस वार्ता को आप नहीं मानें तो अत्यन्त अन्धकार में आकाश का प्रतिविम्ब क्यों नहीं दिखलाई देता । इस से

सिद्ध हो चुका कि केवल आकाश का प्रतिबिम्ब नहीं होसकता। सिद्धान्त पक्ष तो यह है कि बिम्ब रूप आकाश रूपवान् और सावयव है क्योंकि पञ्चीकृत द्रव्य है पृथिव्यादिवत्। पञ्चीकरण इस प्रकार होता है कि पृथिवी और जल, तेज, वायु, आकाश इन्हों की पञ्चभूत संज्ञा है, पहिले प्रत्येक भूतों के दो-दो विभाग करना चाहिये, विभक्त पाँचों भागों को पृथक् २ स्थापन करना दूसरे भाग के चार चार टुकडा करना पश्चात् जो पहिले भूतों के पाँच भाग अलग अलग रक्खे हुए थे। उनके प्रत्येक भाग में चार भूतों के एक एक टुकड़ा मिला देने से पञ्चीकरण होता है—अतएव चारों भूतों के गुण आकाश में आजाते हैं। इसी से आकाश रूपवान और सावयव है अतएव आकाश में रूपप्रत्यय को भ्रान्ति कहना सर्वथा भूल है। यहाँ पर यह प्रश्न होता है कि, एक एव भूतात्मा भूते भूतेऽव्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्। अतएवोपमा सूर्यकादिवत्। इस श्रुति और सूत्र से जीव ईश्वर का प्रतिबिंब सिद्ध होता है-क्योंकि, जलचन्द्र के दृष्टान्त से एक ही ब्रह्म अनेक तरह से दृष्टि गोचर होता है।

## वेदान्त रत्न मञ्जूषा

उपमा सूर्य्यकादिवत्, ब्र०सू० ।२।१८इति श्रुतिन्याययोर्बाध इति वाच्यम्। तयोरन्तर्यामिनिर्लेपत्वस्वतन्त्रत्वप्रतिपादनपरत्वात्। तथाहि यथा सूर्यः स्वप्रभाव्याप्त्या जले तिष्ठन् न तद्गतशैत्यादिगुणैर्लिप्यते, प्रत्युत जलमेव स्वोष्मणा च प्रकाशेन चोष्णीकृत्यावभासयति। चन्द्रश्च तथैव स्वकरनिकरव्याप्त्या जलमेव भासयँस्तच्छैत्यं वर्धयति, नतु स्वयमपि तद्गतेन द्रवत्वेन लिप्त्वाऽऽर्द्रीभावं प्राप्नोति तद्वत्परमात्मा ऽपि विश्वास्मिन् पदार्थे आत्मना एव व्याप्यावस्थितोऽपि तद्धर्मास्पृष्ट एव विश्वं प्रकाशते इति श्रुतिसूत्रयोरर्थः। अनेनैवोपमानेन ब्रह्मणः स्वातन्त्र्यप्रकाशकत्वं विश्वस्य तदायत्तप्रकाशकत्वमप्युक्तं भवति—

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च। वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च। सूर्यो यथा सर्वलोकस्य चक्षुर्नलिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः। एको वशी सर्वभूतान्तरात्मा, एकं रूपं बहुधा यः करोति तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्। इत्यादिकठवल्लीश्रुतिभ्य एकार्थत्वात्।

## कुञ्चिका

उक्तार्थस्य दृढीकरणाय काठकोपनिषद्वाक्यान्युदाहरति अग्निरिति। यथैकस्तेजोधातुस्त्रिवृत्करणकृतव्याप्तथाऽण्डान्तर्गतलोके प्रविष्टः सन्रूपं रूपं रूपेरूपे भौतिकव्यक्तिषु वीप्सायां द्विर्वचनम्। प्रतिरूपं प्रत्युप्तं रूपं यस्य स तथोक्तः। सर्वासु भौतिक व्यक्तिषु तेजोधातोर्मिलितत्वेन प्रतिसंक्रान्तरूपत्वात् प्रतिरूपमस्तीतिद्रष्टव्यम्।

तथैक एव सन् परमात्मा प्रतिवस्तुसंक्रान्तान्तर्यामिविग्रहो बहिश्च व्याप्नोतीत्यर्थः। वायुरित्यस्य व्याख्यानं पूर्ववत्।

आत्मत्वाविशेषेऽपि जीवात्मवद्दोषाः परमात्मनि न भवन्तीत्येतत्सदृष्टान्तमाह सूर्य्य इति। (रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः बृ० ५।५।२) आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् (ऐ० अ० १ खं० २) इति श्रुत्युनुसारेण यथासूर्य्यश्चक्षुरधिष्ठातृतया तदन्तर्गतोऽपि वहिर्निर्गतैश्चक्षुमलादिभिर्न स्पृशते तथा परमात्मा सर्वभूतेष्वात्मतया वर्त्तमानोऽपि तद्गतैर्दोषैर्न स्पृशते तस्य स्वाभाविकापहतपाप्मत्वादिगुणयुक्ततया स्वेतरसमस्तवाह्यत्वात् विलक्षणत्वादित्यर्थः।

एकः समाभ्यधिकरहितः। वश इच्छा साऽस्यास्तीति वशी जगद्वशे वर्त्तत इत्युक्तरीत्या वशवर्त्तिप्रपञ्चक इत्यर्थः।

इमौ स्मसुनिशार्दूल किङ्करौ समुपस्थितौ इत्युक्तरीत्या भक्तवस्य इति वार्थः एकं वीजं तमः (परे देवे मनस्येकीभवति प्र०।४।२) इतिश्रुत्युक्तरीत्या स्वेनेकीभूताविभागावस्थं तमोलक्षणं वीजं महदादिवहुविधप्रपञ्चरूपेण यः करोति तं य आत्मनि तिष्ठन्नित्युक्तरीत्या स्वान्तर्यामिणं ये पश्यन्ति तेषामेवमुक्तिरित्यर्थः।

उपमासूर्यकादिवदिति सूत्रस्य, एक एव हि भूतात्मा इति श्रुतेश्च तस्थानस्थितस्यापि तद्धर्मासंसर्गित्वमर्थः प्रागुदाहृतकठवल्लीश्रुतिभ्य एकार्थत्वादेव निश्चीयत इत्याह कठवल्लीति।

## वेदान्त रत्न मञ्जूषा

ननु स्यादेतदविद्याब्रह्मणोरुपाधिविम्वयोर्निरवयवत्वनीरूपत्वाभ्यां प्रतिविम्वभावाऽनुपपत्तिः। किन्त्वविद्यावच्छिन्नमन्तःकरणावच्छिन्नं वा ब्रह्म प्रत्यगात्मशब्दाभिधेयम्। यथा घटावच्छिन्नाकाशस्य मठाकाशेन भेदस्तस्य चानवच्छिन्नेन महाकाशेनाभेदस्तथाऽन्तः करणावच्छिन्नस्य व्यष्टिरूप

जीवस्याविद्यावच्छिन्नेन समष्टिरूपेण भेदस्तस्य च शुद्धेन नित्यमुक्तेनान बच्छिन्नेन ब्रह्मणाभेद उपाधिकृतो भेदश्चेति चेन्न । बिकल्पासहिष्णुतया तुच्छत्वात् । तथाहि—उपाधिरविद्याभूतोऽन्तः करणरूपो वा ? चेतनं शुद्धं निर्मुक्तं निर्विशेषं ब्रह्म कुठारः काष्ठानीव छित्वा भिनत्ति तद्वत् भिनत्ति वा ? यथावस्थितमेवैकदेशे स्थित्वाऽवच्छिनत्तीति विवेचनीयम् ।

## कुञ्चिका

यद्यप्युउपाधिविम्बयोरविद्याब्रह्मणोर्निर्वयवत्वान्नीरूपत्वान्नोपपद्यते प्रतिविम्बभावस्तथापि उपहितं ब्रह्म जीवात्मशब्दाभिधेयम् उपाधिश्चैकजीववादे अविद्या नाना जीववादे अन्तः करणमित्याशंकते । नन्विति । एक जीववादमभिप्रेत्याह । अविद्यावच्छिन्नमिति । जीवानां नानात्वमतेन अन्तः करणेति । यथा घटावच्छिन्नाकाशो मठाकाशाद्भिद्यते सचानवच्छिन्नमहाकाशेनाभिन्नस्तद्वत् । अन्तःकरणावच्छिन्नव्यष्टिजीवः अविद्यावच्छिन्न समष्टिजीवाद्भिन्नः सच शुद्ध नित्य मुक्तः अविद्यानवच्छिन्नब्रह्माभिन्नः । उपाधिप्रयुक्तोभेदश्च इत्यर्थः एतेनौपाधिक भेदाभेदवादिभट्टभास्करमतं प्रदर्शितम् । दूषयति । नेति । तत्र हेतुमाह-विकल्पेति तन्मतं दूषयितुं विकल्पयति तथाहीत्यादिना । उपाधिशब्दार्थं पृच्छति उपाधिरिति । विकल्पान्तरमाह । चेतनमिति । सर्वगतस्यैवेक उपाधिनाछिन्नोब्रह्मखण्डो जीवात्मेति प्रथमविकल्पार्थः । अवच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषो जीव इति द्वितीयविकल्पार्थः । सर्वगतनिरवयवनिर्विशेषवस्तु छेदनक्रियाफलाश्रयत्वा-पत्यनर्हत्वात् नाद्यः पक्षः साधीयान् "निष्कलं निष्क्रियं शान्तमितिश्रुते रित्याद्यपक्ष-मपाकरोति । नाद्य इति । त्रिपक्षे वाधकस्तर्कमाह । अन्यथेति ब्रह्मणश्छेदनानर्हत्व इत्यर्थः जीवस्य ब्रह्मखण्डत्वे तस्य साद्यत्वापत्तेरिति तत्रैव दोषान्तरमाह । प्रत्यगात्मनामिति । प्रत्यगात्मनस्तथात्वस्वीकारे वाधकमाह । तद्विषयकेति । अजो ह्येको जुषमाणोऽनुशेते । प्रकृतिं पुरुषं चैव विध्यनादी उभावपि इत्यजत्वानादित्वनियमभंगप्रसंग-श्चेत्यर्थः । द्वितीय विकल्पं दूषयति ।

## भाषानुवाद

व्यक्तियों में प्रति संक्रान्त हैं । वाहिर में भी आकाश तुल्य परमात्मा अपने अपने अविक्रय रूप से व्यापक हैं, जैसे वायु प्राण रूप से सबों में अनुप्रविष्ट है वैसे हि परमात्मा सर्वत्र व्याप्त हैं । यथा सूर्य प्राणि मात्र के चक्षुओं में व्याप्त है

वह चक्षु बाहिर के दोषों से लिप्त नहीं होता है, वैसे हि सर्व भूतों में अन्तर्यामी रूप से प्रविष्ट एक परमात्मा बाहिर के दोषों से लिप्त नहीं होता है। 'एको वशी सर्वभूतान्तरात्मेति' एक-समान और अधिक से रहित– भगवान के तुल्य उन्हों से अधिक कोई भी वस्तु नहीं हैं। भगवान के वश में सब प्रपञ्च और सर्व भूतों का अन्तर्यामी है परमात्मा एक हि तम लक्षण बीज को महतत्त्वादि रूप से अनेक प्रकार करता है वह परमात्मा मेरे आत्मा में विद्यमान है। इस प्रकार जो देखते हैं वे जन मुक्ति को अवश्य प्राप्त होंगे। 'उपमासूर्यकादिवत्' इस बादरायण सूत्र का और'एक एव हि भूतात्मा'इस श्रुति का एक ही अर्थ होता है .यह निश्चय सिद्ध हुवा कि अन्तर्यामी निर्लेप और स्वतन्त्र है। अब यहां पर यह शङ्का उपस्थित होती है कि ब्रह्म और अविद्या यह दोनों निरवयव और रूप रहित हैं इसी से बिम्ब प्रतिबिम्ब भाव नहीं हो सकता है। तथापि अवछेदवाद से यह सिद्ध होता है कि उपाधि विशिष्ट ब्रह्म ही जीव शब्द से कहा जाता है। एक जीववाद में उपाधि अविद्या है। और नानाजीववाद में अन्तः-करण उपाधि है। जैसे घट से अवच्छिन्न आकाश मठाकाश से भिन्न है वह घटाकाश अनवछिन्नमहाकाश से अभिन्न है वैसे हि अन्तःकरण से (अवच्छिन्न) विशिष्ट व्यष्टि जीव अविद्यावच्छिन्न समष्टि जीव से भिन्न है वह जीव शुद्ध नित्य मुक्त अनवच्छिन्न ब्रह्म से अभिन्न है। उपाधि प्रयुक्त भेद है यह औपाधिक अभेदवादी भट्ट भास्कर का मत है। इस शंका का समाधान इस प्रकार है कि तुम्हारा पक्ष विकल्प से दूषित है। वह विकल्प इस प्रकार है कि अविद्यारूप उपाधि वा अन्तःकरण रूप उपाधि चेतन शुद्ध निर्विशेष ब्रह्म को जैसे कुठार काष्ठों को छेदन करके पृथक् करता है वैसे ही भेदन करिके पृथक् पृथक् जीवों को कर देती है। भाव यह है कि उपाधि से अवच्छिन्न ब्रह्म का खंड अर्थात् टुकड़ा जीव है। द्वितीय विकल्पका भाव यह है कि उपाधि संयुक्त ब्रह्म का प्रदेश जीव है।

## वेदान्त रत्न मञ्जूषा

नाद्यः। सर्वगतस्य निरवयवस्य वस्तुनश्छेदनानर्हत्वात्। अन्यथा ब्रह्मणो निरवयवत्वसर्वगतत्वादीनां प्रत्यगात्मनामनादित्वाजत्वादेर्भङ्गप्रसङ्गात्। तद्विषयकश्रुतिव्याकोपाच्च। नापि, द्वितीयः। तत्राप्युपाधेः परिच्छिन्नत्वं, सर्वगतत्वंवा। नान्त्यः, उत्क्रान्तिगत्याद्यनुपपत्तेः। किञ्च ब्रह्मणो विभुत्वेनोपाधेरपि तत्त्वात् सर्वस्यापि आवृतत्त्वेन शुद्धस्य मुक्तप्राप्यस्योच्छेदेन

जगदान्ध्यापत्तेश्च । नाप्याद्यः, उपाधेः परिच्छिन्नत्वे हि उत्क्रान्त्यादिव्यवस्था-संपत्तावपि दोषान्तरस्य सत्त्वात् । तथाच उपाधेर्गमनाद्यवस्थायां सर्वगतस्य ब्रह्मणो महाकाशवन्निश्चलत्वेन घटावच्छिन्नाकाशस्य घटगमनेनगमनाऽसम्भववद् गमनासम्भवात् ।

## कुञ्चिका

नापीति । तत्रापि विकल्पयति तत्रेति । उपाधेः सर्वगतत्वपक्षं निरस्यति । नान्त्य इति । श्रूयते च "उत्क्रान्तिगत्यागतयः प्रत्यगात्मनः तद्यथा," तेन प्रद्योतेनैष आत्मा निष्क्रामति, येवैकेचास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मण इति" नचैतासामुपाधेर्विभुत्वे शक्यमुपपादनमित्यर्थः । ब्रह्मवदुपाधेरपि विभुत्वेन सर्वस्यापि चेतनस्यावृतत्वेन शुद्धस्य मुक्तप्राप्यस्याभावः प्रसज्येत प्रकाशकाभावेन जगदान्ध्यापत्तिः, व्याकुप्येरन् मुक्तप्रतिपादिका श्रुतय इति, उपाधेः सर्वगतत्वपक्षे दोषान्तरमप्याह, किञ्चेति । "तत्वात्" विभुत्वात् । उपाधौ गच्छति सति ब्रह्मणो विभोर्गमनानर्हत्वेन पूर्वदेशावच्छिन्नचेतनस्य क्षेत्रज्ञाख्यस्याकस्मान्निर्हेतुको मोक्षः तथैव शुद्धस्य नित्यमुक्तस्यचेतनप्रदेशविशेषस्याकस्माद्बन्धश्चस्यादिति । पदे पदे बन्धमोक्षौ स्यातां कृतनाशाकृताभ्यागमप्रसंगश्च स्यादित्यत उपाधेः परिच्छिन्नत्वपक्षमपाकरोति-नाप्याद्य इति । दोषान्तरं दर्शयति तथाचेत्यादिना । नित्यमुक्तदेशोऽकस्माद्बध्येत, अनादिबद्धःस्वयमेवाकस्मान्मुच्येतेतिभावः किञ्च ब्रह्मस्वरूपस्यैवोपाधिकसम्बन्धः सहेतुको निर्हेतुकश्च । नाद्यो, वक्तुं शक्योऽप्रसिद्धत्वात् । अन्यथाकल्पनायामनवस्थापत्तेः । नाप्यन्त्यः । मुक्तस्यापि पुनराकस्मिकबन्धापत्तिप्रसङ्गात् । आकस्मिकत्वाविशेषात् नचानादिकर्मसम्बन्ध एव कारणमिति वाच्यम् । ब्रह्मण कर्मसम्बन्धाभ्युपगमे ।

## भाषानुवाद

पहिला पक्ष नहीं बनता है क्योंकि उपाधि निरवयव ब्रह्म को कदापि छेदन नहीं कर सकती है । अन्यथा निरवयवता की हानि होगी और जीव को अनादित्व और अजत्व प्रतिपादक श्रुति वचनों का व्याकोप होगा । द्वितीय विकल्प भी विचार करने से नहीं ठहर सकता है कि उपाधि को आप विभु या परिच्छिन्न माँनते हो । यदि उपाधि विभु है तो जीव इस देह को त्यागकर चन्द्रादि लोक में जाता है पुनः

वहाँ से लौटकर इस मृत्युलोक में आता है। यह गमन और आगमन नहीं हो सकता है क्योंकि ब्रह्म और उपाधि दोनों विभु हैं। और विभु उपाधि ने संपूर्ण ब्रह्म को आवृत कर लिया तो जगत् में अन्धकार फैल जायगा और शुद्ध ब्रह्म तो माया से ढक गया है, मुक्त कहाँ जायेंगे। यह सब दोष पहिले पक्ष में आते हैं। परिछिन्न उपाधि यह इस का पक्ष भी नहीं बन सकता है क्योंकि उपाधि के गमन समय में ब्रह्म का गमन नहीं हो सकता है जैसे घटावच्छिन्न आकाश का घटके गमन से गमन नहीं हो सकता है।

### वेदान्त रत्न मञ्जूषा

**पूर्वदेशस्थस्य चेतनचैत्रज्ञाख्यस्याऽऽकस्मिको मोक्षस्तदुत्तरदेशस्थस्य चेतनस्य नित्यमुक्तशुद्धरूपस्य अकस्मान्निर्हेतुको बन्धश्च पदे पदे स्याताम्। कृतनाशाकृताभ्यागमप्रसङ्गश्च । तस्मादनादरणीयोऽयमवच्छेदवादो विद्वद्भिः।**

**किञ्चाहमर्थस्याप्युपलक्षणमेतत्। ज्ञातृत्वाभिन्नाहमर्थत्वमिति यावत्। अहं जानामि, इच्छामि करोम्यनुभवामीत्यादिप्रत्ययेभ्यः। ननु स्यादेतत्—अस्मदर्थस्यात्मस्वरूपत्वं यदि सर्वावस्थानुगतत्वं तस्य तदेव तु न,। सुषुप्त्याद्यवस्थास्वहमर्थस्य व्यभिचारदर्शनात्। अतश्च—प्रकृतिकार्यरूप एवायमहंजानामीत्यादिप्रतीतिविषयोऽहमर्थः। "अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा" इति गीयमानाच्चेति चेन्न। उक्तस्य हेतोः स्वरूपासिद्धिशून्यत्वात्।**

### कुञ्चिका

कदाचिदपि निवृत्तिर्नस्यात् तन्निवर्त्तकान्तराभावात। अविद्यानिवर्त्तकस्यैव बन्धवत्त्वाभ्युपगमाच्चेत्यपि द्रष्टव्यम्। उपसंहरति। तस्मादिति। इत्यवच्छेदवादनिरासः। ज्ञातृत्ववन्तमित्यहमर्थस्योपलक्षणमित्याह। किञ्चेति। "एतत्" ज्ञातृत्वम्। उपलक्षणं नाम स्वबोधकत्वेसति स्वेत्तरबोधकत्वम्। "अहमेवाहं मां जुहोमी" त्यादिश्रुतिशतैः प्रत्यक्षानुगुणैरमहमर्थस्यात्मत्वमेति सिद्धेऽहन्त्वसमानाधिकरणत्वलाज्ज्ञातृत्वादिकमात्मधर्मं इत्याह। ज्ञातृत्वेति। उक्तार्थं प्रतीत्याव्यवस्थापयति। अहमिति। अहमर्थो ह्यात्मा तेन समानाधिकरणतया प्रतीतो ज्ञाता आत्मेत्यर्थः। अहमर्थ आत्मा सर्वावस्थानुगतत्वादिति प्रयोगे स्वरूपासिद्धिं शंकते नन्विति। "एतत्" अहमर्थस्यात्मत्वं तदा स्यात् यद्यस्मदर्थस्य सर्वावस्थानुगतत्वं स्यादिति योजना। तस्येति। अहमर्थस्येत्यर्थः तदेव तु नेति। सर्वावस्थानुगतत्वमित्यर्थः। तत्र हेतुमाह सुषुप्त्यवस्थायामिति। अहं बुद्धेरात्मविषयत्वे स्वरूप स्फुरणवत्सुषुप्तावपि सानुवर्त्तेत यतो नानुवर्तते। अतोहं बुद्धिर्नात्मविषयेत्यर्थः। प्रयोगश्च

अहमर्थो नात्मा सर्वावस्थानुगतत्वाभावात् । तेन प्रागुक्तानुमाने हेतोः स्वरूपासिद्धत्वं सूचितम् । सर्वावस्थानुगतत्वाभावसाधकं हेतुमुपन्यस्यति । सुषुप्तावस्थायामिति । आदि-शब्देन मरणमोक्षमूर्छासंग्रहः । अहं जानामीति धीर्नात्मगोचरा सुषुप्त्यादावविद्यमान-त्वात् इत्यनुमानं फलितम् ।

## भाषानुवाद

क्षण क्षण में वन्ध और मोक्ष प्रसङ्ग होने लगेगा, जिस ब्रह्म प्रदेश को उपाधि ने परित्याग किया वह पूर्व देशावच्छिन्न जीव संज्ञक चेतन का अनायास मुक्ति होनी चाहिए उत्तर देशावच्छिन्न नित्य मुक्त शुद्ध चेतन का कारण के विना ही बन्धन होना चाहिए और जो किये हुए कर्मों का नाश विना किये हुये कर्मों की प्राप्ती काभी प्रसङ्ग होने लगेगा इससे अवच्छेद वाद भी भ्रम मूलक है यहां पर्यन्त प्रतिबिंब वाद और अवच्छेद वाद को खण्डन करिके आत्मा को ज्ञानाश्रयत्व सिद्ध किया वह ज्ञाता जीव अहमर्थसे अभिन्न है। अर्थात जीवात्मा अहमर्थ रूप है । मैं जानता हूँ कर्ता हूँ इस प्रत्यक्ष प्रतीति से भी यह सिद्ध होता है कि जो ज्ञाता है वह अहमर्थ स्वरूप है। यहां पर यह प्रश्न उपस्थित होता है कि यदि अहमर्थ को आत्मा मानते हो तो सुषुप्ति अवस्था में आत्मा का अनुभव होता है अहमर्थ का भी अनुभव होना चाहिये इससे सिद्ध होता है कि अहमर्थ आत्मा नहीं है। किन्तु प्रकृति का कार्य अहंकार ही अहंजानामि इस प्रतीति का विषय है, भाव यह है कि—

## वेदान्त रत्न मञ्जूषा

तथाहि—सुषुप्त्यादावहमर्थस्यावगमो मानसिद्धः । "एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिद्वेदिषम् ।" एतावन्तं कालं मूर्च्छितएवासमित्यादि प्रत्यभिज्ञाया एवात्र मानत्वात् । तस्मात्—तत्तदवस्थायामपि सुखाज्ञानविषय-कज्ञानाश्रयाऽभिन्नोऽहमर्थोऽनुगत एव । विशेषविषयाभावेन विशेषविषयक-प्रत्ययस्यानुत्थानात् ।

ननु एतावन्तं कालं मामपि अहंनावेदिषमिति प्रत्यभिज्ञानस्यास्मदर्था-भावविषयकस्यापन्होतुमशक्यत्वाद् व्यभिचारस्य तादवस्थ्याद्धेतुसिद्धिरिति चेन्न । भवदभिप्रेते प्रत्यभिज्ञानेऽपि तस्यानुगतत्वेन सत्त्वात् तत्र मामिति कर्म-भूतद्वितीयान्तस्यास्मदर्थस्य जाग्रदादित्रिलक्षणशुद्धभगवदात्मकप्रत्यक्पदार्थो ज्ञाता विषयः ।

## कुञ्चिका

यद्यहमर्थ आत्मा स्यात्तदासुषुप्त्यादावात्मानुभवेनाहम्प्रत्ययः स्यात्तदभावेन नात्मनोऽहम्प्रत्ययगोचरत्वमिति विवेकः। अतश्चेति। अहमर्थत्वाभाववत्यां सुषुप्त्यादावात्मत्वस्य वृत्तित्वादेवेत्यर्थः। "अथातोऽहंकारादेशः।" "अथात आत्मादेशः इत्यादि-श्रुत्योरुभयोः पार्थक्योपदेशात् –"अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा" इतिस्मृत्या च क्षेत्रान्तःपातित्वोपदेशादहमर्थो नात्मा सुषुप्ताद्यवस्थाऽननुगतत्वात् स्थूलदेहादिवत्। करणत्वाच्च चक्षुरादिवत् इत्यनुमानाद्वा प्रकृतिकार्य्य एव अहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वादहं करोम्यहंजानामीति प्रतीतिविषय इत्याह-प्रकृतिकार्यरूप इति॥ "एतावन्तं कालं सुखमहमस्वाप्समित्यहमर्थस्यैव सुखत्वेनानुभवादात्मत्वमविरुद्धमिति न किञ्चिदवेदिषमित्यज्ञानाश्रयत्वेनानुभवाच्च सुषुप्तावहमर्थस्य स्फुरणमस्तीति सर्वावस्थानु-गतत्वहेतोर्नस्वरूपासिद्धत्वमिति परिहरति – नेति। 'उक्तस्य हेतोः"सर्वावस्थानुगतत्वहेतोः स्वरूपेति। पक्षे हेत्वभावः स्वरूपासिद्धिस्तदभावादित्यर्थः। स्वरूपासिद्धिशून्यत्वं प्रदर्श-यति – तथाहीत्यादिना। प्रत्यभिज्ञाप्रमाणेन सुषुप्त्यादावपि अहमर्थोऽवगम्यते इत्यर्थः। प्रत्यभिज्ञामेव दर्शयति—एतावन्तमिति। सुषुप्तोत्थितस्यायं परामर्शः सुषुप्तिकाले सुख-रूपतयाऽनुभूतात्मगोचरः। अस्तीतिकालसम्बन्धस्वापौ तु पूर्वकालानुभूतार्थप्रत्यभिज्ञा-योग्यानुपलब्धिभ्यामनुमेयौ स्वतोऽनुकूलतया भासमानस्याहमर्थस्यानुमानिककाल-वैशिष्ट्यगोचरप्रत्यभिज्ञाविशेषोऽयंपरामर्शः।

## भाषानुवाद

( अहमर्थआत्मा सर्वावस्थानुगतत्वात् ) इस अनुमान में स्वरूपासिद्धहेतुहै स्वरूपासिद्ध भी एक हेत्वाभास है अर्थात् दूषित हेतु है उसका यह लक्षण है कि पक्षे हेत्वभावः, पक्ष में हेतुका नहीं रहना। यहाँ पर अहमर्थ पक्ष है उसमें सर्व अवस्थानु-गतत्वहेतु नहीं है क्योंकि सुषुप्ति काल में अहमर्थ प्रतीत नहीं होता है—अहमर्थो नात्मा सर्वावस्थानुगतत्वाभावात्। इस अनुमान से अहमर्थ में आत्मत्वाभाव सिद्ध होता है। अर्थात् अहमर्थ आत्मा नहीं हो सक्ता है क्योंकि आत्मा जाग्रत् और स्वप्न सुषुप्ति इन तीनों अवस्था में रहता है यदि अहमर्थ आत्मा होता तो वह सुषुप्ति अवस्था में भी प्रतीत होता उस अवस्था में अहमर्थ नहीं भासता है यह पूर्व पक्षी की शङ्का है उसका समाधान यह है कि अहमर्थो नात्मा सर्वावस्थानुगतत्वाभावात् यह वादिका हेतु स्वरूपासिद्ध है क्योंकि सुषुप्ति मूर्च्छा समय में भी अहमर्थ की अनुगति प्रमाण सिद्ध है

वह प्रमाण प्रत्यभिज्ञा है एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषम् इति इतने कालपर्यन्त में सुख से सोया मुझे कुछ भी ज्ञान न रहा और जो मैं सोया था सो मैं जागता हूँ यह प्रत्यभिज्ञा उक्त अर्थ में प्रमाण है अनुभव कर्त्ता ही स्मरण कर्ता होता है। देवदत्त के अनुभव से देवदत्त ही को स्मरण होताहै न कि यज्ञदत्त को अत सुषुप्ति समय में अज्ञान और सुख का ज्ञाता अहमर्थ विद्यमान है अतएव वादि का हेतु ठीक नहीं है। सुषुप्ति में इच्छा और शब्द आदिक सामग्री का अभाव होने से विशेष रूप से विषय का भान नहीं होता है। इस विषय में वादी पुनः शङ्का करता है कि इतने काल पर्यन्त मैं अपने को भी में नहीं जाना यह स्मरण भी तो होता है उक्त प्रतीति अहमर्थाभाव का विषय करती है इससे साबित होता है अहमर्थ अनुगत नहीं है अतएव अहमर्थो नात्मा सर्वावस्थानुगतत्वाभावात् यह हमारा अनुमान सत्य है। अहमर्थ आत्मा सर्वावस्था-नुगतत्वात् यह तुम्हारा अनुमान दूषित है।

इस शङ्का का उत्तर यह है कि एतावन्तं कालं मामपि अहं नावेदिषम्। इस प्रतीति में भी अहमर्थ आत्मा का भान होता है क्योंकि ज्ञानाभाव का अधिकरण अहमर्थ है। एतावन्तं कालं मामपि नावेदिषम्। इस प्रत्यय का अर्थ बतलाते हैं।

## वेदान्तरत्न मञ्जूषा

**तथाच मामिति जाग्रदनुभूतस्य देहादियुक्तस्यात्मत्वेन अभिमतस्य तत्राभावान्निषेधविषयत्वं सूपपन्नम्। तथैव चाहमिति देहादिवियुक्तस्य शुद्धा-त्मदर्थस्य तत्र भावेन विशिष्टाभावविषयाऽनुभवाश्रयस्य तत्रापि सत्त्वात् तस्य ज्ञातृतया भानमपि सूपपन्नतरम्। देहाद्यवच्छिन्नाहमर्थाभावविषयकानुभवाश्रया-भिन्नाऽहमर्थस्योक्तप्रत्यभिज्ञानविषयत्वमस्ति, —एवमहमर्थस्यसर्वावस्थानुगत-त्वात्, —अनुभवस्मृत्योरेकाधिकरण्यनियमाच्च उक्तहेत्वसिद्धेस्तादवस्थ्यमेव। अन्यथा एतावन्तं कालं नाहमासम, इदानीं जातोऽहम्, एतावन्तं कालं नाहमभवम्, किन्तु किञ्चिदनुभवमात्रमासीदिदानीं तदन्योऽहमस्मि—इत्यादि-प्रत्यभिज्ञानं स्यात्। तस्य तु कुत्राप्यदृष्टचरत्वाद्, अनुपपन्नत्वाच्च। तत्सिद्धम्—उक्तप्रत्ययप्रमाणाज्ज्ञात्रभिन्नाहमर्थएवात्मस्वरूप इति।**

## कुञ्चिका

एवं स्वमतपरमतयोः परामर्शानुगुण्यतदभावरूपवैषम्यमुक्तं श्रुतिस्वारस्यमस्मन्मते "अत्रायं पुरुषः स्वयंज्योतिर्भवतीति पुरुषशब्दश्रवणात् पुरुषशब्दो न सम्विन्मात्रपरः।

एवं हि द्रष्टा श्रोता मन्ता बोद्धा रसयिता पुरुष इति ज्ञातुरेव पुरुषत्वश्रवणात् ज्ञातरि पुरुषशब्दप्रसिद्धेरिति भावः। सुषुप्तावहमर्थोऽनुगत इति निगमयति – तस्मादिति। अह-मर्थतावदिच्छाविशिष्ट एव स्फुरत्यावयोर्निर्विवादत्वात्समं सुषुप्तौ चेच्छादेरभावादहम-र्थस्य विशेषविषयत्वं नास्तीत्याह—विशेषेति। एतावन्तं कालं मामप्यहं नावेदिषमित्य-स्मदर्थाभावविषयकप्रत्ययस्य, न जानात्ययममहस्मीतिश्रुतेश्च सुषुप्तावहमर्थाभावस्य मानसिद्धत्वात् कथमस्मत्प्रयुक्तहेतोः स्वरूपासिद्धत्वमितिशङ्कते—नन्विति। मामपीत्युक्त्या कृत्स्ननिषेधेऽभिप्रेते शुक्तिरूप्यवदध्यस्तस्याहमर्थस्यापि निषेधविषयत्वमिति सूचितम्। हेतुसिद्धिः = सुषुप्तावहमर्थस्याव्यभिचारदर्शनादितिहेतुः। तथाचाहमर्थस्य सर्वास्वस्थानु-गतत्वाभावादहमर्थो नात्मेति प्रतिपत्तुं शक्यत इत्यर्थः।

अहंनावेदिषमित्यत्रवेदनाभावाधिकरणतयाऽहमर्थस्यवेदितुरात्मनः प्रतिपत्तेर्न-तन्निषेध. शक्यते कर्तुं नापि तत्प्रकाशनिषेधस्स्वयज्योतिष्ट्वश्रुतिविरोधः प्रसज्ज्येत वाह्यर्थस्यापि न स्वरूपतो निषेधः सुषुप्तौ विश्वप्रलयस्यासम्भवात। अतः स्वान्यवेद्यविषय-निषेध एव विवक्षित इत्याशयेन परिहरति नेति। यथापूर्वकालीनभूतलानुभवमन्तरा भूतले घटाभावो न शक्यते वक्तुं तद्वत्, अज्ञानाश्रयाहमर्थवदता स्वापवेलायामहमर्था-ऽनुभवोऽभ्युपगन्तव्यस्तथाचभवत्पक्षविपरीतेयं एतावन्तं कालमिति प्रत्यभिज्ञा तथाचोक्त-प्रत्यभिज्ञायामहमर्थस्यानुवृत्तिदर्शनान्नास्मदुक्तहेतोः स्वरूपासिद्धत्वमिति भावः। यतोऽह-मर्थस्वरूपतत्प्रकाशनिषेधयोरशक्यत्वं मामपि नाहमवेदिषमिति प्रत्यभिज्ञायामत जाग-रितावस्थानुभूतदेहादिविशिष्टमिहनिषेध्यमिति वक्तुं तत्रमामिति पदस्यार्थं निर्वक्ति। तत्र मामिति। तत्र = एतावन्तं कालं मामपि नाहमवेदिषमिति प्रत्यभिज्ञायाम्। मामित्युक्तलक्षणस्य देहादिसम्बन्धस्य तत्राभावान्निषेधविषयत्वमुपपद्यते इति निषेधं प्रदर्शयति। तथा चेत्यादिना। जाग्रदवस्थानुभूतदेहादियुक्तस्यात्मत्वेनाभिमतस्यास्म-दर्थात्मनोऽभावः सुषुप्तौ मामपिनावेदिषमिति प्रत्यभिज्ञायायां बोध्यत इत्यर्थः। सुषुप्तावात्मनोऽहमर्थस्य विशेषस्य सत्वेपि जाग्रदनुभूतदेहादियुक्तत्वरूपविशेषणा-भावाद्विशिष्टाभावः। यद्वा मामपि नावेदिषमित्यत्रास्मदर्थे प्रकारीभूतं यद्देहाद-वैशिष्ट्यं तदेव निषेध्यम्। सविशेषणेहि विधिनिषेधौ विशेषणमुपसङ्क्रामत सति-विशेष्यवाधे, इति न्यायात्। एतेन अहमर्थस्य ज्ञातुरात्मनोऽनुवृत्तेर्न तन्निषेधस्सम्भव-तीति निरस्तम्। श्रुत्यन्तरे तद्वैशिष्ट्यं निषिध्यते॥ तद्यथा प्रियया स्त्रिया सम्परियुक्तो न वाह्यं किञ्चन वेद नान्तरमिति। अहमिति प्रथमान्तार्थस्य शुद्धस्यास्मदर्थस्यात्मनः

सुषुप्तौ विद्यमानत्वात्तस्योक्तार्थज्ञातृतया मानमुपपद्यत इत्याह तथैवमिति। तत्र = सुषुप्तौ । विशिष्टाभावइति । जाग्रदवस्थानुभूतानादिकर्मसंस्कारनिरूपितात्मत्वाभिमतदेहादियुक्तत्वरूपविशिषणविशेष्टास्मदर्थात्मात्यत्राभाव इति तदर्थः । विशेषणस्य यथा दण्डस्यासत्वदशायां दण्डी पुरुषो नास्तीति प्रत्ययो जायते विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्वात्तथा प्रकृतेऽपि जाग्रदवस्थानुभूतानादिकर्मसंस्कारनिरूपितात्मत्वाभिमतदेहयुक्तत्वरूपविशेषणाभावान्निरुक्तविशेषणविशिष्टाभावः । एतावन्तंकालंमामपि, अहं नावेदिषमिति प्रत्यभिज्ञायामुक्तविशिष्टाभावो नञा बोध्यते। इत्याशयः । तत्रापि = सुषुप्तावपि । तस्य = अहमर्थस्यात्मनः। अहमर्थ आत्मा सर्वावस्थानुगतत्वादित्यनुमानस्य निर्दुष्टत्वम् । येनयोर्थःऽभूयते स एवस्तेन स्मर्यते अन्यानुभूतस्यान्येन स्मरणायोगात् । तथाच सुषुप्तावप्यज्ञानस्य सुखस्य ज्ञाताऽहमर्थोऽस्त्येवेत्याह—एवमिति । उक्तहेत्वसिद्धेरिति । सर्वावस्थानुगतत्वादितिहेतोः स्वरूपासिद्धत्वमित्यर्थः विपक्षे बाधकतर्कमुपन्यस्यन्ति। अन्यथेति। एतावन्तं कालं मामपि अहं नावेदिषमिति प्रत्यभिज्ञाया उक्तार्थत्वास्वीकार इति तदर्थः । उक्तप्रमाणात् = एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषमितिप्रत्यभिज्ञाप्रमाणात्।

## भाषानुवाद

अहं यह प्रथमान्तपद कर्ता का वाचक है इसका देह और इन्द्रियों से पृथक् ब्रह्मात्मक शुद्ध जीवात्मा ज्ञाता अर्थ है। मां यह द्वितीयान्तकर्म वाचक पद है इसका अर्थ यह होता है कि जाग्रत् अवस्था अनुभूत कर्म और संस्कार के आश्रय आत्मत्वेन अभिमत देहयुक्त आत्मा है। अतएव उक्त प्रत्यभिज्ञा में जाग्रत अवस्था में अनुभूत आत्मत्वेन अभिमत जो देह युक्त आत्मा का निषेध है। तात्पर्य यह है कि सुषुप्ति काल में अहमर्थ रूप आत्मा विशेष्य विद्यमान है तो भी जाग्रत अवस्था में अनुभूत देह आदि युक्तत्व रूप विशेषण नहीं है इसी से विशेषणाभाव प्रयुक्त विशिष्टा भाव है जैसे पुरुष की स्थिति काल में भी विशेषण दण्ड के अभाव से दण्डी नास्ति यह प्रतीति होती है जाग्रदवस्थानुभूतानादिकर्मसंस्काराश्रयदेहादियुक्तत्वविशिष्टास्मदर्थात्मा नास्तीति प्रतीति सिद्धाभावो हि विशिष्टा भावः। इस विशिष्टाभाव का ज्ञाता अहमर्थ आत्मा सर्व अवस्था में अनुगत है

अतएव प्रतिवादी का हेतु स्वरूपासिद्ध है सिद्धान्ती का हेतु निर्दुष्ट है। यदि उक्त प्रत्यभिज्ञा का उपदर्शित अर्थ स्वीकार नहीं किया जाय तो इतने काल पर्यन्त मैं नहीं था अभी मैं उत्पन्न हुवा हूं यह प्रतीति होनी चाहिए। इस प्रकार की प्रतीति कभी भी किसी को नहीं होती है इसी से साबित हो चुका कि ज्ञाता से अभिन्न अहमर्थ आत्मा है।

## वेदान्तरत्न मञ्जूषा

किञ्च सर्वश्रुतिमूलभूतस्य सर्वमन्त्रभूषणरूपस्याप्यस्मदर्थप्रयोगदर्शनाद् गायत्र्याख्यस्यमन्त्रस्यायमेवार्थः। ज्ञात्रभिन्नास्मदर्थएवात्मेति यावत्। ननु—आत्मबुद्ध्योरन्योन्याध्यासाभिप्रायप्रयुक्तोऽयमस्मच्छब्दो नात्मस्वरूपविषयक इति चेन्न धीशब्दस्य पृथक्प्रयोगात्। अयमभिप्रायः। वेदमातृगायत्र्याख्याया देवतायाः सर्वज्ञत्वं, नवेति विवेचनीयम्। आद्ये तया देवतयाऽयमस्मच्छब्दप्रयोगो ज्ञात्वैवाध्यासाभिप्रायेण दर्शित इति वक्तुं नैव शक्यः। अन्यथा मात्रादेरपि वत्सलतरायास्तस्या एवंभूतमिथ्यात्वोपदेशे सर्ववञ्चकतयाऽनाप्तत्वापत्तेः। द्वितीयेऽज्ञत्वादेवाप्रामाणिकत्वापत्तेश्च। तन्मूलकस्य सर्वस्य वेदस्य तच्छाखा-रूपस्याप्रामाणिकतरत्वापत्तेश्च सर्वस्य वेदस्य बाधायां सत्यां बाह्यमतस्यैव वरीयस्त्वापत्तेश्च।

## कुञ्चिका

गायत्र्याख्यमन्त्रेऽस्मदर्थप्रयोगादअहमर्थ आत्मेति निश्चीयते, इत्याह—किञ्चेति। गायत्रीमन्त्रे आत्मनि बुद्धेरध्यासः तस्यां आत्मनोऽध्यासस्तदभिप्राये-णास्मदर्थप्रयोगः। इति शङ्कते—नन्विति। धीशब्दस्येति। यो देवो नो धियः प्रचोद-यादित्यत्र योदेवपदार्थः सार्वज्ञ्याद्यनन्ताचिन्त्ययावदात्मवृत्तिस्वाभाविकगुणशक्तिवैभ-वाश्रयः परमेश्वरो विश्वात्मा स नोऽस्मदर्थभूतानां जीवात्मनां सम्बन्धिधीर्बुद्धि विषय-प्रवणा यस्या धिय इति कर्मणिषष्ठी धियमित्यर्थः। यद्वाद्वितीयान्तबहुवचनमिदम्। तथाच या विषयप्रवणाः ताः प्रचोदयात् स्वविषयिका ब्रह्मस्वरूपविषयिका कुर्यादिति ब्रह्मणो नियन्तृत्वेन स्वतन्त्रसत्तायोगोऽस्मदर्थभूतानांप्रत्यगात्मनां धीशब्दोप-लक्षितचेतनवर्गस्य च नियम्यत्वेन परतंत्रसत्तायोगश्च स्पष्टं मन्त्रित इति भावः। विपक्षेबाधकतर्कमुपन्यस्यति। अन्यथेति। अध्यासाभिप्रायेणास्मच्छब्दप्रयोक्तृत्वे, इति तदर्थः। बाह्यमतस्य = वेदबाह्यानां नास्तिकानां मतस्य।

## भाषानुवाद

सर्व वेद का मूल भूत सर्व मन्त्र का भूषण गायत्री मन्त्र में भी अस्मदर्थ का प्रयोग किया है इससे भी सिद्ध होता है कि ज्ञाता से अभिन्न अहमर्थ आत्मा है। आत्मा का बुद्धि में अध्यास और बुद्धि में आत्मा का अध्यास से गायत्री मन्त्र में अस्मदर्थ का प्रयोग किया है यह प्रतिवादी का प्रश्न है उसका उत्तर यह है कि गायत्री मन्त्र में धी शब्द का पृथक प्रयोग करने से निश्चय होता है कि यहाँ पर अध्यास के अभिप्राय से अस्मदर्थ का प्रयोग नहीं है। प्रतिवादी से यह जिज्ञासा है कि वेदमाता गायत्री देवता सर्वज्ञ है या नहीं जो उसे सर्वज्ञ बतलाते हो तो उसने अध्यास के अभिप्रायः से अस्मत् शब्द का प्रयोग किया। यह नहीं कह सकते हो क्योंकि जो माता सदा पुत्रों को हित उपदेश करती है वह माता जो कदाचित् मिथ्या उपदेश करे उसके वाक्य में किसी भी व्यक्ति का विश्वास नहीं होगा और वंचक कहने लगेंगे। जो उसे अज्ञ कहोगे तो उसका वाक्य सर्वथा अप्रमाणिक है तन्मूलक समस्त वेद में अप्रामाणिकता प्रसक्ति होगी। तब नास्तिक मत में प्रविष्ट होना पड़ेगा। उक्त गायत्री मन्त्र में अस्मदर्थ के प्रयोग करने से सिद्ध हो चुका कि अहमर्थ आत्मा है।

## वेदान्त रत्न मञ्जूषा

किञ्चास्तां तावत् सुषुप्त्यादावहमर्थस्य व्यभिचारशङ्कावकाशो मोक्षदशायामपि तस्यानुगतत्वेनात्मस्वरूपतासिद्धेरविरुद्धत्वात्। तथाहि। महाप्रलये विश्वलयात्मकेऽविशिष्यमाणस्यैकाद्वितीयादिशब्दाभिधेयस्य परब्रह्माख्यस्य पुरुषोत्तमस्य नित्यमुक्तत्वं निर्विवादम्। तथाच तस्यापिज्ञात्रभिन्नाहमर्थ स्वरूपत्वं श्रावयन्त्यस्तत्साम्यप्राप्तानां मुक्तानामपि तथात्वमर्थतः प्रतिपादयन्ति वेदान्तश्रुतयः। "ब्रह्मैवेदमग्र आसीत् तदात्मानं वेदाहं ब्रह्मास्मीति, बहुस्यां प्रजायेय नामरूपे व्याकरवाणि त्रिवृतं त्रिवृतं करवाणीत्यादयः। मुक्तानामपि वामदेवादीनां तथैवानुभव श्रवणाच्चापि" तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्चेति।

## कुञ्चिका

सुषुप्त्याद्यवस्थासु भासमान आत्माऽहमिति स्फुरतीत्युक्तं भवति तथापि तुष्यतु दुर्जनन्यायेनाह—किञ्चेति । यद्वा सुषुप्त्यादावात्माऽहमर्थव्यभिचारी नवेति व्यभिचारसंशयो येषां न निवर्त्तते मा निवर्त्ततां तथापि मुक्तावहमर्थोऽनुवर्त्तत एव तदनुरोधेनाहमर्थस्यात्मत्वसिद्धत्येवेत्याह—किञ्चेति । तस्य = अहमर्थस्य । सर्वज्ञस्य नित्यमुक्तस्य परब्रह्मणो निर्धूताशेषदोषाणां विद्यावतां. लब्धतत्साम्यानां मुक्तानां वामदेवप्रभृतीनाञ्च ज्ञात्रभिन्नाहमर्थस्वरूपत्वं प्रतिपादयन्त्यः शतश श्रुतिस्मृतयस्सन्ति ताभिरात्मनोऽहमर्थत्वं निश्चीयत इत्याह—तथाहीत्यादिना । तस्य = पुरुषोत्तमस्य । तत्साम्यप्राप्तानाम् = भगवत्साम्यप्राप्तनाम् । ब्रह्मणोऽहमर्थस्वरूपत्वं स्फुटीकर्त्तुमुत्तरवाक्येन तद्घटकतच्छब्दनिर्णयाय ब्रह्मैवेदमिति । वाक्यं पूर्वमुपादत्ते—ब्रह्मैवेदमिति । अस्मीतिक्रियया परब्रह्मणोऽहमर्थत्वस्य प्रतिपत्तिः । वहुस्यामिति वाक्ये "अस्मद्युत्तम" इत्युत्तमपुरुषवलादहमितिप्रत्ययसिद्धिः । नामरूपव्याकर्तृत्वं त्रिवृत्करणत्वंचाहमर्थस्य परब्रह्मण एवोपपद्यते, नत्वहङ्कारस्य, अनेनाहङ्कारसृष्टेः पूर्वमप्यहंप्रत्ययं ज्ञापयति श्रुतिरिति सूचितम् । निवृत्ताविद्यावतामप्यहमित्यात्मप्रतिपत्तिदर्शनेनाहम्प्रत्ययस्य मुक्तावनुवृत्तिमाह—मुक्तानामिति । आदिपदेन प्रह्लादभरतादिपरिग्रहः । तद्धै पश्यत् = जगत्कारणं ब्रह्मस्वान्तरात्मत्वेन पश्यत् । अतएवात्राहमर्थसामानाधिकरण्यं परब्रह्मणस्सर्वात्मकत्वप्रकाशकम् । तदेतच्छास्त्रदृष्ट्यातूपदेशोवामदेवादिवदितिसूत्रस्य व्याख्यायां भगवत्पादैराचार्य्यचरणैर्वेदान्तपारिजातसौरभाख्ये निरूपितम् ।

## भाषानुवाद

सुषुप्ति अवस्था में अहमर्थ के व्यभिचार की शङ्का निवृत्ति हुई या नहीं यह विषय तो रहने दो परन्तु मुक्ति अवस्था में भी अहमर्थ आत्मा अनुगत है सो दत्तचित्त होकर श्रवण कीजियेगा। महाप्रलयकाल में एक अद्वितीय ब्रह्म ही शेष रहता है वह नित्यमुक्त अहमर्थ है यह "ब्रह्मैवेदमग्र आसीत्" तदात्मानं वेदाहं ब्रह्मास्मीति इस श्रुति से प्रमाणित है। सृष्टि के पहिले ब्रह्म ही था उसको यह ज्ञान था कि मैं ब्रह्म हूँ मैं बहुत रूप से होऊँ मैं एक एक भूतों को त्रिवृतकरूँ नामरूप को प्रगट करूँ। मुक्त वामदेव आदि का अनुभव भी अहमर्थ आत्मा है इसमें प्रमाण है 'अहं मनुरभवं सूर्य्यश्च" मैं मनु हुवा मैं सूर्य हुवा।

## वेदान्तरत्नमञ्जूषा

किञ्च "वेदाहं समतीतानि वर्तमानानि" इति अस्मदर्थस्यैव सर्वज्ञत्वम् । "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" । इति विश्वोत्पतिस्थितिप्रवृत्तिसंहारकारणत्वम् । "इति मत्वा भजन्ते मां बुधा भावसमन्विता" इति भजनीयविषयत्वम् । तद्भजतां च ज्ञानित्वम् । "तेषामहं समुद्धर्ता मृत्युसंसारसागरादिति संसारनिवर्तकत्वम् । तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इति अनुकम्पादिगुणाऽऽश्रयत्वं, ज्ञानदातृत्वम्, अज्ञाननाशकत्वं, सर्वधीनिष्ठत्वञ्च । भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ इति तद्विषयकज्ञानस्यैव मोक्षान्तरङ्ग हेतुत्वम् ।

## कुञ्चिका

स्मृतावप्यहंत्वेन व्यवहारमाह—वेदाहमिति । अस्मदर्थस्य सर्वज्ञत्वं निरूप्य तस्यैवोत्पत्तिस्थितिलयकर्तृत्वमाह—अहं सर्वस्येति भजनीयोऽप्यहंप्रत्ययविषय इत्याह—इतिमत्वेति मृत्युविरोधिमुक्तिप्रदत्वमप्यहमर्थस्यैवेत्याह--तेषामिति । अनुकम्पादिगुणाश्रयत्वज्ञानप्रदत्वाज्ञाननिवर्तकत्वसर्वधीवृत्तित्वादयोधर्मा अहमर्थनिष्ठा एवेत्याह--तेषामिति । अहमर्थपुरुषोत्तमविषयकज्ञानस्यैव मोक्षान्तरङ्गोपायत्वमित्याह—भोक्तारमिति ।

## भाषानुवाद

और सर्व शास्त्र शिरोमणि श्रीमद्भगवद्गीता में भी यह सिद्धान्त है कि हे अर्जुन भूत भविष्यत वर्तमान सर्वभूतों को मैं जानता हूँ इससे यह सिद्ध हुवा कि अहमर्थ ही सर्वज्ञ है अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा इसी श्रीमद्भगवद्गीता के वचन से सावित होता है कि विश्व की उत्पत्ति और स्थिति प्रवृत्ति और प्रलय का कारण'अहमर्थ ही है । इति मत्वा भजन्ते मां बुधा भाव समन्विता इस वचन से भजन का विषय अहमर्थ ही सिद्ध होता है । तेषामहं समुद्धर्ता मृत्युसंसार सागरात । उन्हीं को संसार से उद्धार करने वाला मैं हूँ इससे संसार निवारकता अहमर्थ ही में है ।

## वेदान्त रत्न मञ्जूषा

"मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते। मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः परां सिद्धिमितो गताः ॥ इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ वहवो ज्ञानतपसापूता मद्भावमागता ॥" इति "मुक्तोपसृप्यव्यपदेशात्।" १।३।२ तन्निष्ठस्य मोक्षव्यपदेशादितिसूत्रोक्त-मुक्तोपसृप्यत्वम् ।

## कुञ्चिका

पुनर्जन्मनिवर्तकताहमर्थस्यैवेत्याह– मामुपेत्येति। दुःखनिवृत्तिपूर्वकपरसिद्धिगम-कत्वमस्मदर्थस्यैवेत्याह—इदमित्ति। ' यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीत्यादिश्रु-तिभ्यः "संसारवन्धान्मुक्तैरुपसृप्यः प्राप्यः मुक्तोपसृप्यस्तस्य व्यपदेशान्निर्देशादिति सूत्रार्थः। "तन्निष्ठस्य मोक्षोपदेशादि' ति तस्मिन् सदादिशब्दाभिधेये ईक्षतरि तेजोऽव-न्नादिकर्तरि निष्ठा = निदिध्यासनापरपर्य्यायलक्षणा यस्य विदुषः स तन्निष्ठस्तस्य मोक्षो-पदेशात् १।१।७ तथाहि तत्त्वमसीति मुमुक्षोः कारणात्मकत्वानुसन्धानमुपदिश्य "तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथसम्पत्स्ये" इति ब्रह्मभावापत्तिलक्षणमोक्ष उपदिश्यते। इति सूत्रार्थः।

## भाषानुवाद

तेषामेवानुकम्पार्थमहमज्ञानजंतमः। इस वचन से सिद्धि होता है कि अनुक-म्पादि गुणाश्रयत्व और ज्ञानदातृत्व और अज्ञान नाशकत्व यह सब अहमर्थ निष्ठ हैं। प्रीति पूर्वक भजन करने वाले मनुष्यों के अनुग्रह करने के लिये उन्हीं की बुद्धि वृत्ति में स्थित होकर प्राचीन कर्म रूप अज्ञानजन्य तम को प्रकाशितमद्विषयकज्ञानरूपी-दीपक के द्वारा नाश करता हूँ। भोक्ता और लोक महेश्वर सबों का मित्र मैं ही हूँ। हे अर्जुन मेरे को प्राप्त होकर फिर जन्म को प्राप्त नहीं होता है। इससे मुक्त प्राप्यता बतलाई इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इस श्री मुख वचन से यह निश्चित होता है कि अस्मदर्थ के सङ्ग साधर्म्य ही मुक्ति है। "तन्निष्ठस्य मोक्षोपदेशात् इस" वादरायण सूत्र से भी यह सिद्ध है कि भगवान् के स्वरूप और गुण का अनवरत साक्षात्कार करने वाले पुरुषों का मोक्ष होता है। मुक्तोपसृप्य व्यपदेशात् संसार बन्धन से विनिर्मुक्त जो पुरुष है उसको भगवान प्राप्त होता है।

## वेदान्तरत्न मञ्जूषा

मामप्राप्यैव कौन्तेय ! ततोयान्त्यधमांगतिमिति तदप्राप्तेःसंसृतिहेतुत्वम् । "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इति पुरुषोत्तमत्वम् । अहमात्मा गुडाकेश !

## कुञ्चिका

भगवद्प्राप्तिःसंसारहेतुरित्याह—मामप्राप्यैवेति । अहमर्थस्यैव पुरुषोत्तमत्वमाह – अतोऽस्मीति । पुरुषोत्तमस्याहम्प्रत्याश्रयत्वं दर्शयति— अहमात्मेति । हे गुड़ाकेश = हे जितनिद्र । सर्वेषां प्राणिनामाशये हृदयेऽन्तर्यामिरूपेणाहं स्थितः ।

## भाषानुवाद

मामप्राप्यैव कौन्तयततोयान्त्यधमां गतिम् ॥ इस वाक्य से भगवान् की प्राप्ति के बिना अधम गति होती है यह निश्चय होता है । अतोऽस्मि लोके वेदेच प्रथितःपुरुषोत्तमः। लोक और वेद पुराणों में मैं ही पुरुषोत्तम नाम से प्रसिद्ध हूँ । पुरुषोत्तमता भी अहमर्थगत है । 'अहमात्मा गुड़ाकेश" सब का आत्मा मैं ही हूँ । विश्व का अन्तरात्मा भी मैं ही हूँ ।

## वेदान्तरत्नमंजूषा

"क्षेत्रज्ञं चापि मां विद्धि" इति विश्वान्तरात्मत्वम् ।

## कुञ्चिका

प्रत्यगात्मनः स्वतादात्म्यमाह –क्षेत्रज्ञमिति । पूर्वं "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । मयाततमिदं सर्वं जगदव्यक्तमूर्तिना" इत्यादिना सर्वस्य जगतो मत्तः पृथक्स्थित्यभावेन मदभिन्नत्वम् । 'नचाहं तेष्ववस्थितः, नच मत्स्थानि भूतानि पश्य मे योगमैश्वरम्, मयाध्यक्षेण प्रकृतिः सूयते सचाचरमि" त्यादिना मद्भिन्नत्वं चोक्तं किन्तु पूर्वाध्याये "येतुसर्वाणिकर्माणि मयिसंन्यस्य मत्पराः।अनन्येनैव योगेन मां ध्यायन्त उपासते, तेषामहं समुद्धर्ता मृत्युसंसारसागरादित्यादिना परमप्रकृतिभूतस्य जीव—पुरुषशब्दाभिधेयस्य क्षेत्रज्ञस्य ध्यातृत्वोपासकत्वधार्यत्वेन प्रतीतं केवलभिन्नत्वं न मन्तव्यमपितु सर्वक्षेत्रेषु देवतिर्यङ्मनुष्यादिशरीरेषु क्षेत्रज्ञमपि मां विद्धि, मदात्मकत्वेन मदभिन्नं जानीहि चशब्देनात्मनस्तद्वैलक्षण्यमपि समुच्चिनोति । मां ततोविलक्षणं च विद्धीत्यर्थः। तथाच "ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मातत्त्वमसि श्वेत-

केतो अयमात्मा ब्रह्म सर्वं खल्विदं ब्रह्म तज्जलानिति, अभयं वै जनक प्राप्तोऽसि, यदात्मानं वेदाहं ब्रह्मास्मीति इत्यादिका भगवतः सर्वात्मत्वेन सर्वसामानाधिकरण्यवाचिका श्रुतयस्सन्ति एवं मदात्मकत्वेन मद्व्याप्यत्वेन मत्तोऽपृथक् सिद्धतया मत्तादात्म्यरूपं क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं मम सर्वज्ञस्य वेदान्तकृतो वेदविदः सर्वेश्वरस्य मतम् = सम्मतम्। अतो मम मतादन्यथा ये मन्यन्ते तदज्ञानमित्यर्थः।

## भाषानुवाद

जीवात्मा मेरे से अभिन्न है। यद्यपि "नचाहं तेष्ववस्थित इत्यादि वचनों से जीव का ईश्वर से भिन्न उपदेशकिया है। इससे, जीवात्मा पुरुषोत्तम से केवल भिन्न है ऐसा नहीं मानना चाहिए किन्तु देवता मनुष्य आदि शरीरों में मेरे से क्षेत्रज्ञ = जीवात्मा को तू अभिन्न भी जान। च शब्द से यह सूचित किया कि मेरे को जीव से विलक्षण जानना चाहिये। जीव मदात्मक और मेरे आधीन जीव की स्थिति प्रवृत्ति होने से मेरे से अपृथक् सिद्ध हैं अर्थात् मेरा तादात्म्य अनेक रूप से जीवों में है।

## वेदान्तरत्नमञ्जूषा

विष्टभ्याहमिदं कृत्स्नमिति विश्वाधारत्वम्। न तदस्ति विनायत्स्यान्मया भूतं चराचरमिति। विश्वव्यापकत्वम्। "सर्वस्य चाहं हृदि सन्निविष्टः" इति सर्वधीवृत्तिप्रवर्तकत्वम्।

## कुञ्चिका

हे अर्जुन वहुनैतेन पृथक् पृथक ज्ञातेन तव किं कार्यं स्यात् सर्वस्य निष्कर्षार्थं मुच्यमानंशृणु—विष्टभ्येति १०। ४२। इदं कृत्स्नं निखिलं जगदेकांशेन एकदेशस्याल्पांशेन विष्टभ्य = धृत्वा स्थितोऽहमित्यर्थः। नतदस्तीति। १०। ३६। यदपि च सर्वभूतनां सर्वावस्थास्थितानां चराचरप्राणिनां वीजं प्ररोहकारणं तदहं हे अर्जुन! तत्रहेतुः, आब्रह्मस्तम्बपर्यन्तं व्यापकेन मयाविना यत्स्यात्तच्चरमच्चरं वा वस्तुनास्त्येव सर्वस्य मदविनाभावात्। सर्वकारणव्यापकत्वात् कारणकारणोऽहमित्यर्थः। सर्वस्येति। १५. ११। सर्वस्य = ब्रह्मादि प्राणिमात्रस्य हृदि सम्यगन्तर्यामिरूपेण निविष्टः। अतोमत्तएव हेतो. सर्वस्य पूर्वानुभूतार्थविषयास्मृतिर्भवति।

## भाषानुवाद

विष्टभ्याहमिदं कृत्स्न मिति। इससे जाना जाता है कि विश्व का आधार

भी अहमर्थ भगवान् ही है । मेरे विना कोई चर अचर वस्तु नहीं है । इति सर्व व्यापकता । सर्व स्येति । सर्व के हृदय में मैं ही सन्निविष्ट हूं ।

## वेदान्तरत्न मञ्जूषा

वेदैश्च सर्वैरहमेव वेद्यः" इतिसर्वशास्त्रयोनित्वम् । "अपरेयमितस्त्वन्याम् जीवभूतां महाबाहो ययेति" चेतनाचेतनप्रकृत्यधिष्ठातृत्वम् । "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । 'परं भावमजानन्तो मम भूत महेश्वरम् ॥" मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनींश्रिता" इति तदवज्ञाया मूढत्वराक्षसत्वासुरत्वमोहत्वमोहत्व भावापत्ति कारणत्वम् ।

## कुञ्चिका

वैदैश्चेति । इन्द्राग्निसूर्यमित्रावरुणवाय्वादि प्रतिपादकैरपि वेदैरहमेव वेद्यः, मम सर्वात्मत्वादित्यर्थः । शास्त्रेति । शास्त्रं वेदः योनिः कारणं ज्ञापकं प्रमाणं यस्मिं स्तच्छात्रयोनिस्तस्य भावस्तत्वम्, वेदैकप्रमाणकत्वमहमर्थस्यैवेत्यर्थः । अपरेति । अष्टधा प्रोक्ता प्रकृतिः सेयमपरा निकृष्टा जडत्वात्परार्थत्वाच्च । इतस्त्वचेतनभूतायाः प्रकृतेरन्यां विलक्षणां स्वरूपतः स्वभावतश्चात्यन्तविजातीयां परां तस्याः भोक्तृतया प्रकृष्टां जीवभूतां चेतनां प्रकृतिं मे मदीयां मदात्मिकां विद्धीत्यर्थः । अवजानन्तीतिः ६।११।मूढा अनादि पाप बाहुल्येन मत्स्वरूपादिविषयकाज्ञानावृतत्वान्मोहमापन्ना विपरीतज्ञाना मां भूतमहेश्वरं सर्वजगज्जन्मादि कारणं वासुदेवमवजानन्ति, साक्षात्परमेश्वरोयमिति न मन्यन्ते नाद्रियन्त इत्यर्थः । तेषामवज्ञाने भ्रमकल्पितं हेतुमाह । तनुमाश्रितामिति । कारुण्यादिगुणपरवशतया सर्वेषां समाश्रणीयत्वाय भक्तानुग्रहाय च स्वेच्छया मनुष्याकार-माश्रितं मनुष्यतया प्रतीयमानं प्राकृतमानुषसमं मन्यन्ते । ततोभ्रान्त्या मुषितज्ञाना मम परं भावं कारुण्यगुणेच्छया भक्ताभिलाषपूरणाय मनुष्यत्वाद्याकारेणाविर्भवनरूपं परं तात्पर्यमजानन्तो मनुष्यमात्रभावनयेतरसजातीयं मत्वा नाश्रयन्त्यतो न मुच्यती इत्यर्थः । मेघाशेति । ६।१२। मामुपेक्ष्य चण्डीभैरवगजाननादय एवास्मद्वाञ्छितंदा स्यन्तीत्येवम्भूता मोघा निष्फला आशा येषां ते मोघाशा मत्प्रेरणां विनादेवतान्तरस्य किञ्चित्फलदाने सामर्थ्याभावात् । कर्माणि, अग्निहोत्रादीनि देवतान्तराराधनादीनि च येषां ते मोघ

कर्मणः। "फलमत उपपत्ते ब्र० सू० इतिन्यायात् कर्मणां जड़ानां फलदाने शक्त्य-भावात्फलदातुर्भगवतो विमुखत्वात्। तथा मोघं परमेश्वराप्रतिपादकं कुतर्कजनितं ज्ञानं येषां ते मोघज्ञानाः। सर्वत्रहेतुः—विचेतस इति। चित्ताधीशवासुदेव चिन्ताशून्यत्वा-द्विक्षिप्तचित्ताः प्रमादिनः। अतएव राक्षसीं तामसीं हिंसाद्वेषवहुलामासुरीं च कामप्रद-मात्सर्यदर्पादिप्रधानां मोहिनीं धर्मज्ञानविवेकमोहकर्त्रीं प्रकृतिं योनिं स्वभावं वाश्रिता भवन्तीतिशेषः।

## भाषानुवाद

सब वेदों से मैं ही वेद्य हूँ। सर्व शास्त्र का विषय अहमर्थ ही है। भूमि और जल अग्नि वायु आकाश मन बुद्धि अहङ्कार यह अष्ट प्रकार की मेरी अपरा प्रकृति है जीव भूत मेरी परा प्रकृति है इन दोनों प्रकृतियों को तू जान। इस से यह सिद्ध हुआ कि चेतन और अचेतन प्रकृति का नियन्ता परमात्मा अहमर्थ है। अवजानन्ति मां मूढा मानुषीं तनुमाश्रिताम् इति। मूढ जन मेरे को मनुष्य जान के मेरी अवज्ञा करते हैं मेरे ईश्वर भाव को जानते नहीं उन्हों की आशा और कर्म सभी निष्फल हैं। अनादि पापों के वाहुल्य से अज्ञानावृत मोह को प्राप्त हुये जीव जगत्सृष्टि कर्ता सर्व कर्म फल प्रद मुक्त प्राप्य मेरे को साक्षात् स्वयं भगवान हैं इस प्रकार नहीं मानते हैं क्योंकि प्राकृत मनुष्य के समान मुझे जानते हैं मेरा प्रभाव अर्थात् कारुण्य गुण के वश होकर भक्तों की अभिलाषा पूरण करने के लिये मनुष्याकार से मेरा आविर्भाव है वास्तविक सच्चिदानन्द घन रूप दिव्य-मङ्गल विग्रह रूप है। इस प्रकार से मेरा स्वरूप नहीं जानते हैं वे जन संसार से कदापि मुक्त नहीं हो सकते हैं और उन्हों की आशा निष्फल है उन्हों का किया हुआ कर्म तथा ज्ञान सम्पूर्ण साधन निष्फल है। अतएव वे विक्षिप्त चित्त वाले जन राक्षसी आसुरी योनि को प्राप्त होते हैं। यह भगवान् की अवज्ञा का फल है।

## वेदान्तरत्नमञ्जूषा

"मामेकं शरणं व्रजे" ति सर्वशरण्यत्वम्। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि माशुचः॥ इति निश्शेषपापनिवारकत्वम्।

## कुञ्चिका

मामेकमिति। मां निखिलहेयगन्धशून्यं भगवन्तं ज्ञानशक्तिवलैश्वर्य्यादि गुणार्णवं सर्वनियन्तारं सर्वफलप्रदातारं शरणं शरण्यं प्राप्यं रक्षकंच विज्ञाय भगवद-

नुग्रहादेवाहं कृतार्थो भविष्यामीति विश्वासपूर्वकं स्वस्य स्वतन्त्रकर्तृत्वाभिमानं विहाय स्वहिताहितं सर्वं मदधीनं निश्चित्य प्रेमप्रकर्षेण गंगाप्रवाहवदनवच्छिन्नचिन्तनेन प्रपद्य-स्वेत्यर्थः। नचैवं सर्वधर्मानादरेण मम पापसम्बन्धः स्यादिति शङ्कनीयमित्यत आह— अहं त्वामिति। अहं स्वतन्त्रः सर्वेश्वरः मदेकशरणं त्वां सर्वपापेभ्य अनेकजन्मस्वकृत्य करणकृत्याकरणजनितानि वहुपापानि तेभ्यः सर्वेभ्यो मोचयिष्यामि स्वसामर्थ्यादेव, अतो माशुचः प्रायश्चित्ताकरणात् स्वधर्मानादराद्बन्धुवधाच्च यानि मे पापानि तानि कथं तरिष्यामीति शोकं माकृथा इत्यर्थः।

## भाषानुवाद

मामेकं शरणं व्रजेति। यज्ञ दान तप आदि धर्म और उन्हों के फलों को छोड़ कर मेरी शरण आइये तुझे मैं सर्व पापों से विनिर्मुक्त कर दूंगा तू शोकमत करै। सब का शरण्य और सब पापों से मोचक अहमर्थ भगवान् वासुदेव ही है।

## वेदान्तरत्न मंजूषा

" नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः। नचैवं न भविष्यामः सर्व इति कालत्रयाऽवाध्यत्वम्। मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय इति साम्यातिशयशून्यतया ईश्वरकल्पानामपि नियन्तृत्वरूपं निरतिशयैश्वर्यत्वञ्च-स्वयमेव श्रीमुखेन गानात्। सर्वस्यापि गीताशास्त्रस्यास्मदर्थाभिन्नसर्वज्ञानन्ता-चिन्त्यशक्त्याश्रयपुरुषोत्तमविषयकत्वमवगम्यते उदाहृतेभ्यो हेतुगर्भितश्लोकेभ्यः तस्मादहमर्थ एव परब्रह्मभूतो विश्वात्मा भगवान् वासुदेव इति सिद्धम्।

## कुञ्चिका

नत्वहंकारश्चिदचिदन्तरात्मा तस्याचेतनत्वात् स्वाभाविकनित्यरूपेऽहम्प्रत्ययं दर्शयति—नत्वेवाहमिति। सर्वात्मनां मध्ये यथा अहं सर्वेश्वर इतः पूर्वस्मिन्काले जातु-कदाचिन्नासं नाभवमिति न अपित्वासमेव, तथा त्वं नासीरिति न किन्त्वासीरेव, तथेमे जनाधिपानासन्निति न किन्त्वासन्नेव। न चेति। पुनः सर्वे वयं पूर्वोक्ता अतः वर्तमानकालात् परमन्ते काले न भविष्याम इति न, अपितु भविष्याम एवेत्यर्थः।= नत्वहंकारो नित्यः एवमनेकश्रुतिस्मृतिवचनोपादानं परविवक्षितद्वित्रिता-द्दशवचनमपनोदार्थम्। नचैतेष्वहंशब्देन चिन्मात्रे लक्षणेति वाच्यम्। मुख्यार्थ-

सम्भवे तदयोगात्। अनेकवाक्यस्थाहंशब्दस्य लक्षणाकल्पने गौरवाच्च। यद्यहमर्थस्यात्मत्वं स्यात्तदा क्षेत्रान्तर्गततयाप्यहङ्कारस्य श्रीमद्भगवद्गीतायां श्रवणात् प्रत्यगात्मनोऽपि क्षेत्रभेदापत्तिः। क्षेत्रान्तर्भावत्ववचनंतु महाभूतान्यहङ्कार इत्येवम्। अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते, अहंकारविमूढात्मा कर्ताहमिति मन्यते, इत्यपरं वचनमिति चेन्न यतः यद्यहंकारशब्दस्याहंशब्दपर्यायत्वं स्यात्तदोक्तदोषः प्रसज्येत् नत्वेवम् स्वरूपोपदेशपराणि यावन्ति वचनानि भगवतोदाहृतानि तानि सर्वाण्यहंमर्थघटितानि अतोऽहमर्थस्यात्मत्वं नानुपपन्नम्। महाभूतान्यहंकार इत्यत्राहंकारशब्दः प्रकृतिपरिणामविशेषवाचकः। "गर्वोऽभिमानोऽहंकार" इति नैघण्टुकाः। अनात्मनि देहादावात्मशब्दप्रयोगस्त्वविद्या तदुक्तं विष्णुपुराणे "श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ?" अनात्मन्यात्मबुद्धिरिति भावः।

## भाषानुवाद

मत्त इति। हे अर्जुन! मेरे से परे और कोई तत्व नहीं है मैं ही सर्व जगत में ओत प्रोत हूँ।

## वेदान्त रत्न मञ्जूषा

**एवमेव कर्तृत्वमपि। तथाहि तन्मनोऽकुरुतेत्यादिवाक्ये मनसः कर्मत्वं श्रृण्वन्तः श्रोत्रेण विद्वांसो मनसेति करणत्वम् मन उत्क्रामन्मीलित इवाश्नन् पिबन्नास्ते इत्यादिश्रुतौ मनस उत्क्रमणानन्तरमपि आत्मनः कर्तृत्वम्।**

## कुञ्चिका

प्रत्यगात्मनामहमर्थत्वं निरूप्य कर्तृत्वमपि प्रदर्शयति "एवमिति" उक्तार्थं श्रुति प्रमाणेन द्रढयति तन्मन इति, तत्=ब्रह्म, मनः कर्मक—कृत्याश्रयः, इति तदर्थः। अनयाश्रुत्या मनसः कर्मत्वमेव प्रतिपाद्यते, ननु कर्तृत्वम्॥ मनसः करणत्वबोधिकामपि श्रुतिमुदाहरति "श्रृण्वन्त" इति। अनया श्रुत्या करणत्वमेव प्रदर्शितम् नतु कर्तृत्वमपि, तथाच—प्रत्यगात्मनामेव कर्तृत्वं सिद्धमितिभावः। मनसोऽसत्वदशायामपि प्रत्यगात्मनां कर्तृत्वप्रतिपादिकां श्रुतिमुदाहरति "मन" इति।

## भाषानुवाद

अहमर्थ का निर्णय गीता शास्त्र में श्रीमुख से किया है। अतएव अहमर्थ से अभिन्न सर्वज्ञ और अचिन्त्य अनन्त शक्ति श्रीपुरुषोत्तम परब्रह्म वासुदेव विश्व के आत्मा श्रीमद्भगवद्गीता शास्त्र का विषय है, इससे साबित हो चुका कि अहमर्थ आत्मा है।

## वेदान्तरत्नमञ्जूषा

परं ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते जक्षन् क्रीडन् रममाणः सह ब्रह्मणा विपश्चितेतिपर मोक्षदशायां भगवद्भावापत्त्यनन्तरमपि कर्तृत्वं श्रूयते उदाहृतश्रुतिभ्यः । अतः सर्वावस्थानुगतत्वात् कर्तृत्वं स्वाभाविकमेवेत्यवगम्यते, इतरथा मनस एव कर्मत्वकरणत्वकर्तृत्वादिप्रसङ्गो दुर्वारः । तथात्वासम्भवात् । अदृष्टचरत्वात् । नापि सुषुप्त्यादौ तदभावः शङ्कनीयः ज्ञातृत्ववत्तस्यापि, अनुगतत्वात् ।

### कुञ्चिका

मोक्षदशायामपिभगवद्भावापत्त्यनन्तरमप्यात्मनः क्रियाश्रयत्वरूपकर्तृत्वं श्रूयत इत्याह—परमिति । परं चेतनाज्जीवादचेतनाच्चपदार्थाद्विलक्षणं ज्योतिः सर्वावभासकमंशिस्वरूपं जीव उपसमीपे सम्यक् प्राप्य गाढान्धकारावृतं चक्षुर्यथास्वासाधारणवस्त्राभरणादिविषयप्रकाशकत्वालभमानं सत् सदैव तमसाऽनावृतं भास्करमुपसम्पद्य स्वेनासाधारणेन स्वविषयप्रकाशकत्वावच्छिन्नेन स्वरूपेण निष्पद्यते । तथादेहेन्द्रियादिविलक्षणेन स्वानन्दसम्पन्नेनानन्दस्वरूपेण निष्पद्यत इति श्रुत्यर्थः । भोक्तृत्वं सांव्यवहारिकं कर्तृत्वमपि सांव्यवहारिकमितिमतं दूषयितुमाह— अत इति । यतः कर्तृत्वं सर्वास्ववस्थानुगतमतः स्वाभाविकमित्यर्थः ।विपक्षे बाधकतर्कमाह=इतरथेति । आत्मनःस्वाभाविककर्तृत्वानभ्युपगम इति तदर्थः । एतेन बुद्धिश्चेत्कर्त्री ।

भोक्ताचात्मा ततो यस्यापेक्षितोपायोभोक्तुर्न तस्य कर्तृत्वं यस्य कर्तृत्वं नच तस्योपेक्षितोपाय इति किङ्केन सङ्गतमिति शास्त्रस्यानर्थकत्वमविद्यमानाभिधेयत्वं तथाचाप्रयोजनकत्वं स्यादित्यादिदोषमप्युक्तं भवति । तथात्वासम्भवात् = एकस्य वस्तुनः कर्मत्वकरणत्वकर्तृत्वासम्भवात् । एकस्य तथात्वं लोके न दृष्टचरमित्याह—अदृष्टचरत्वादिति । यद्यात्मनः स्वाभाविकं कर्तृत्वमभ्युपेयते तदा सुषुप्तावपि तदुपलब्धिः स्यादित्याशङ्क्यापाकरोति—नापीति । तदभावः=कर्तृत्वाभावः । तस्य=कर्तृत्वस्य । सुषुप्तावपिश्वासादिकर्तृत्वमुपलभ्यते "सुप्तोभूर्भूरित्यादिस्वसितीत्यादिश्रुतेः । देहादिवन्मनसो निमित्तरूपत्वेनापितदुपपत्तिः । कामः सङ्कल्प इत्यादिश्रुतिरपि मनसः करणत्वबोधनविषयिकैव । "मनसैवाग्रे सङ्कल्पयतीतिश्रुत्यन्तरात् । अत्रस्पष्टं कण्ठरवेण करणपाठदर्शनाच्च । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण" इतिश्रुतेस्तु ह्यात्मनो भोक्तृत्वे देहादिवन्मनसोऽपिसहकारित्वमात्रमित्येतत्परत्वात् । किञ्च "ध्यायतीव लेलायतीवेतिश्रुताविव-

शब्दः परतन्त्रप्रभौ प्रभुरिवेतिवत् जीवकर्तृत्वस्येश्वरपारतन्त्र्यप्रदर्शनपरः। ननु "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्त्ताहमितिमन्यते" इतिस्मृति-बाधिकेति चेन्न। तस्यापि स्वतन्त्रकर्तृत्वनिषेधपरत्वात्। तत्रैवं सति कर्तारमात्मनं केवलन्तु यः। अत्र केवलशब्दः स्वातन्त्र्यपरः स्वोक्तार्थे प्रमाणतयोपन्यस्तः। स्वातन्त्र्येणकर्तारं मन्यमानो दुर्मतिरित्यर्थः। स कारयेत् पुण्यमथापिपापं न तावता दोषवानी-शिताऽपि। एष एव साधु कर्म कारयतीति श्रुतिभ्यः।

## भाषानुवाद

इसी प्रकार कर्तृत्व भी आत्मा का स्वरूप धर्म है। तन्मनोऽकुरुत इति। ब्रह्म ने मन को किया ब्रह्मकर्तृक मन कर्मक क्रिया है। शृण्वन्तः श्रोत्रेणविद्वान् सो मनसेति विद्वान् श्रोत्र द्वारा मनसे सुनते हैं। इस श्रुति में मन को करण बतलाया है। मन उत्क्रामन मीलितइवाश्नन् पिबन्नास्त इति। मन के निकलने पर भी मिले हुयेकी तरह भोजन और पान करता है इस श्रुति में भोजन आदिक का कर्ता आत्मा है यह बतलाया है परं ज्योति रूप सम्पद्य स्वेनरूपेणाभिनिष्पद्यते, जक्षन् क्रीडन् रममाणः सह ब्रह्मणा विपश्चिता इति। इन श्रुतियों से स्पष्ट निश्चय होता है कि मुक्त पुरुष पर ज्योति, दिव्य मङ्गल विग्रहयुक्त भगवान् को प्राप्त होकर अपने निज स्वरूप में स्थित होता है मुक्त पुरुष ब्रह्म के सङ्ग भोजन और क्रीडा रमण कर्ता है। मोक्ष दशा में भी और क्रिया का आश्रय है। अतएव सब अवस्था में आत्माका स्वाभाविक कर्तृत्व धर्म अनुगत है। एक ही वस्तु कर्म तथा करण और कर्ता नहीं हो सकता है जो मन को ही कर्त्ता मानोगे तो उसकी करण शक्ति विलुप्त हो जायेंगी सुषिप्ति अवस्था में जैसे अहमर्थ से अभिन्न ज्ञाता की प्रतीति होती है तद्वत् कर्तृत्व भी अनुगत है।

## वेदान्तरत्न मञ्जूषा

किञ्च बद्धावस्थायां ज्ञानादिसंकोचेन करणनिमित्तकत्वाद्विशेषकर्तृत्वस्य करणानांश्च सुषुप्त्यादौ लयात् तदभानं न विरुद्ध्यते। नचैवं जाग्रदवस्थायां कदाचिदपि तदुपरमो न स्यादिति वाच्यम्। विशेषविषयसम्बन्धिक्रियाया अपि तत्सहकारित्वात्। तस्या अभावे तदनाविर्भावोऽविरुद्धः।

ननु करणक्रियादिनिमित्तकात्मनिष्ठकर्तृत्वकल्पने महागोरवाद्वरीयान् उपाधेरेव कर्तृत्वाभ्युपगम इति चेन्न।

## कुञ्चिका

बद्धावस्थायामनादिप्रकृतिसम्बन्धरूपया कर्मरूपया वाऽविद्यया सङ्कुचितज्ञान-

क्रियाशक्तिकानां प्रत्यगात्मनां ज्ञानक्रियादौ मनआदिपारतन्त्र्यात् तत्सहायापेक्षा तथाच सुषुप्त्यादाविन्द्रियाणां लयान्न विशेषतः कर्तृत्वस्य भानं भवतीत्याह—किञ्चेति। यदि स्वाभाविकं कर्तृत्वमात्मन उच्यते तदा जाग्रदवस्थायां सर्वदा कर्तृत्वभानं प्रसज्येत कदाचिदपि कर्तृत्वस्योपरमो न स्यादिति शङ्कां परिहरति—नचेति। विशेषविषयसम्बन्धिक्रियायां कर्तृत्वसहकारित्वमभ्युपेयते तथाच विशेषविषयसम्बन्धिक्रियाया अभावात् सर्वदा कर्तृत्वस्याविर्भावो न भवतीत्याह—विशेषेति। तत्सहकारित्वात् = कर्तृत्वसहकारित्वात्। तस्याः = क्रियायाः। तदनाविर्भावः = कर्तृत्वानाविर्भावः। ज्ञातुरात्मनो वद्धदशायां करणविषयक्रियासम्बन्धनिमित्तकमेव कर्तृत्वं स्वीकार्य्यम् तत्कल्पनामपेक्ष्य एकाया बुद्धेरेवकर्तृत्वकल्पने महल्लाघवमित्याशंकते - नन्विति। उपाधेर्जडत्वेन तत्कर्तृत्वाङ्गीकारे घटपटादीनामपि कर्तृत्वं प्रसज्येत इति परिहरति-नेति।

## भाषानुवाद

और वद्धावस्था में अनादि कर्मात्मक अविद्या से ज्ञान का सङ्कोच होता है अतएव विशेषकर्तृत्वकरण अर्थात् इन्द्रियों के अधीन है सुषुप्ति अवस्था में इन्द्रियों का लय होने से विशेष रूप से कर्तृत्व का भान नहीं होता है। यहां पर प्रतिवादि का यह प्रश्न उपस्थित होता है कि जाग्रत काल में करण विद्यमान है कर्तृत्व का भान सर्वदा होना चाहिए। इस शंका का निवारण इस प्रकार है कि विशेष विषय समन्धि क्रिया भी कर्तृत्व का सहकारी कारण है क्रिया के रहने पर कर्तृत्व का भान होता है अतएव घटपटादि सम्वन्धिक्रिया के अभाव से कर्तृत्व की प्रतीति नहीं होती है। यहां पर वादी की शङ्का है कि इन्द्रिय और क्रिया के आधीन आत्मा में कर्तृत्व मानने की अपेक्षा से उपाधि को कर्तृत्व मानने में लाघव है।

## वेदान्तरत्न मंजूषा

**उपाधेर्जडस्य कर्तृत्वाऽभ्युपगमेऽतिप्रसङ्गात्। ननूपाधिसम्बन्धादकर्तुरप्यात्मनः कर्तृत्वं नोपाधिमात्रस्येति चेन्न। तथात्वे नपुंसकस्यापि स्त्रीसम्बन्धमात्रेण प्रजोत्पत्तिः स्वीकरणीया स्यात्। नचैवं कुत्राप्यदृष्टचरमुपपन्नं चेति। तस्माद्स्वाभाविककर्तृत्वाद्याश्रयस्यैवात्मनः स्वाभाविकदहनशक्त्याश्रयस्याग्नेः काष्ठादिसम्बन्धेन तदाविर्भाववत् करणादिसम्बन्धनिमित्ततदाविर्भाव उपपन्नतरः नचैवं कर्तृत्वनिषेधविषयकशास्त्रबाध इति वाच्यम्! तस्य स्वतन्त्रत्वावच्छिन्नकर्तृत्वादिनिषेधविषयकत्वेन समञ्जसत्वात्।**

## कुञ्चिका

अतिप्रसंग इति—घटादीनामपि कर्तृत्वप्रसंग इत्यर्थः। उक्तदोषान्माभूतकेवलाया उपाधेः कर्तृत्वं किन्तु उपाधिसम्पर्कादकर्त्तुरप्यात्मनः कर्तृत्वमिति शंकते। नन्विति। यद्युपाधिसम्बन्धात्कर्तृत्वमात्मनोऽभ्युपेयते तदा स्त्रीसम्बन्धमात्रादपि षण्डस्य प्रजोत्पादकत्वं स्यादिति निरस्यति—नेति। तथात्वे—उपाधिसम्पर्कात्कर्तृत्वे। स्वाभाविककर्तृत्वाद्याश्रयाहमर्थाभिन्नज्ञातुरात्मनो बद्धदशायां करणविषयकसम्बन्धनिमित्तकमेव कर्तृत्वं स्वाभाविकं दाहाश्रयाग्नेः काष्ठादिसम्बन्धनिमित्तकदाहकत्ववत् सूपपन्नं सुषुप्तिमूर्च्छादौ करणविषयादेरभावेन विशेषकर्तृत्वाभानस्यापि सूपपन्नत्वम्। सामान्यश्वासादिकर्तृत्वस्योक्तश्रुत्या तत्रापि सत्वात्सर्वावस्थानुगतत्वमपि सूपपन्नतरमिति व्युत्पादयन्निगमयति—तस्मादिति। यथा वन्हेर्दाहनुकूला शक्तिः स्वाभाविकी काष्ठादिसम्बन्धेनाविर्भूयते तथा प्रत्यगात्मनः स्वाभाविकं कर्तृत्वं बद्धदशायां करणादिसंसर्गादाविर्भवति मुक्तावस्थायान्तु स्वपरस्वरूपयोराविर्भावेन बुद्धीन्द्रियादिनिरपेक्षत्वमिति विवेकः। नन्वकर्त्तैवात्मा तथाहि न जायते म्रियतेचेति। तस्य जन्मादिविकारं प्रतिसिद्धय "हन्ता चेन्मन्यतेहतम्" उभौ तौ न विजानीतौ नायं हन्ति नहन्यते इतिहननक्रियाश्रयत्वं फलाश्रयत्वं मन्यमानोऽज्ञः इतिकठवल्युक्तेः। अहंकारविमूढात्मा कर्त्ताहमितिमन्यत इति प्रकृतेरेव कर्तृत्वेन पुरुषस्य च भोक्तृत्वमात्रमेव यथा जपाकुसुमस्थलौहित्यं स्फटिके भाति तद्वन्मनोवृतिकृत्यादिकमात्मन्यध्यस्तं भासते नतु तात्विकं तथात्वे ह्यात्मनो विकारित्वापत्तेः सुषुप्तौ मनसोऽभावे कृत्यादीनामदर्शनात्। अकर्त्रात्मबोधकश्रुतिव्याकोपश्चेत्याशङ्क्य परिहरति। नचेति तत्र हेतुमाह—एतस्येति। तत्रैवंसति कर्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिरिति केवलशब्दः स्वातन्त्र्यपरः उक्तार्थे मानं सांसारिकप्रवृत्तावधिष्ठानदि पञ्चकस्य हेतुत्वात् केवलं स्वातन्त्रेणस्वात्मानं कर्त्तारं मन्यमानो दुर्मतीत्यर्थः। अन्यथा गुणानां कर्तृत्वे तेषामेव भोक्तृत्वापत्तिस्तयोः सामानाधिकरण्यनियमात्। नह्यन्यकर्तृककर्मणोऽन्येषां भोक्तृत्वं लोके प्रसिद्धं गुणकर्तृकप्रवाहस्य नित्यत्वेनानिर्मोक्षप्रसङ्गो मुक्तानामपि पुनर्भोक्तृत्वप्रसङ्गश्चदुर्वारः इतरकर्तृकत्वप्रसङ्गात्। किञ्च भोक्तृत्वमात्रस्वीकारे भुजिक्रियाया व्यापाराश्रयत्वेनावश्यम्भावात् कथमकर्तृत्वमात्मन इति पण्डितम्मन्यैर्विचारणीयम्। दैवञ्चैवात्रपञ्चममित्यत्रदैवशब्दः परमात्मपरस्तथाचपरमात्माधीनमेव प्रत्यगात्मनः कर्तृत्वम् "स कारयेत् पुण्यमथापि पापं न तावतापि दोषवानीशतापीत्यादि-श्रुतेः। केनापि देवेन हृदिस्थितेन यथानियुक्तोऽस्मि तथा करोमीत्यादिस्मृतेश्चेति भावः।

## भाषानुवाद

यह शंका सर्वथा असङ्गत है क्योंकि जब जड़ उपाधि को कर्तृत्व आप बतलाते हैं तब घट और पट आदि को भी कर्तृत्व कहना चाहिए। प्रश्न ? केवल उपाधि कर्ता नहीं है किन्तु उपाधि के संबन्ध से अकर्त्ता आत्मा में कर्तृत्व की प्रतीति होती है। उत्तर। यदि उपाधि के सम्बन्ध से कर्तृत्व माना जाय तो नपुंसक पुरुष के सम्बन्ध से स्त्री के भी सन्तानोत्पत्ति होनी चाहिए। यह वार्ता अभी तक किसी भी मनुष्य के दृष्टि गोचर और श्रवण इन्द्रिय के विषय नहीं हुई है। यथा स्वतः सिद्ध दहन कर्ता अग्नि काष्ठ के सम्बन्ध से ही दाहक है तद्वत् स्वाभाविक कर्तृत्वाश्रय आत्मा है उसमें करण के सम्बन्ध से ही कर्तृत्व का आविर्भाव होता है। ( प्रश्न ) यदि आत्मा में स्वाभाविक-कर्तृत्व स्वीकार करोगे तो आत्मा के कर्तृत्व निषेधक वचनों की निरर्थकता होगी। उत्तर। आत्मा में कर्तृत्व के निषेधक वचनों का अभिप्राय यह है कि आत्मा में स्वतन्त्र कर्ताऽपने का निषेध विषय है। अर्थात् आत्मा में परमेश्वराधीन ही कर्तृत्व है स्वतन्त्र कर्तृत्व नहीं है। अन्यथा आत्मा में कर्तृत्व के बोधक भी वचन है उन्हों का भी बाध हो जायेगा। कर्त्ता शास्त्रार्थवत्वात्। इत्यादि सूत्र प्रतिपादित कर्त्रधिकरण सर्वथा असङ्गत कहना पड़ेगा इससे कर्ता के निषेधक वचनों का तात्पर्य स्वतन्त्र कर्तृत्व के निषेध में है।

## वेदान्तरत्नमञ्जूषा

**अन्यथा, कर्ताशास्त्रार्थवत्त्वादित्यधिकरणबाधस्यापि तुल्ययोगक्षेमत्वात् कथं नालोच्यते वादिभिः। ननु तस्य बुद्ध्यवच्छिन्ननिष्ठकर्तृत्वविषयकत्वान्न बाध इति चेन्न। अशब्दानुमानिकसांख्यमतप्रवेशात्। तत्र दोषाणां पूर्वमेवोद्घाटितत्वात्। निराकृतत्वाच्चावच्छेदप्रतिबिम्बवादयोः। तस्माज्ज्ञातृत्ववत् कर्तृत्वमपि स्वाभाविकमात्मनः स्वरूपनिरूपितो धर्मविशेष इति साधीयान् एवं भोक्तृत्वादयोऽप्यूहनीया। तथाहि सुषुप्त्यादौ सुखादि भोक्तृत्वे। प्रत्यभिज्ञायाः, मोक्षे भगवत्स्वरूपगुणादिविषयानुभवानन्दभोक्तृत्वे जक्षन् क्रीडन् रममाणः सह ब्रह्मणा विपश्चितेति श्रुतेश्च प्रमाणत्वात्।**

## कुञ्चिका

विपक्षे बाधकतर्कमाह—अन्यथेति। प्रत्यगात्मनः कर्तृत्वानभ्युपगम इति तदर्थः। आत्मनो ज्ञातृत्ववत् कर्तृत्वमप्यस्तिनवेति संशये, आत्मैव कर्त्ता। "यजेत

स्वर्गकामः मुमुक्षुर्वैशरणं व्रजेत् " सोऽन्वेष्टव्यः स विजिज्ञासितव्यः। इत्यादिभोगमोक्ष-साधनोपदेशशास्त्रस्यार्थवत्वादिति सूत्रार्थः। यद्यात्मनः कर्तृत्वं नाभ्युपेयते तदा कर्ता-शास्त्रार्थवत्वादितिकर्त्रधिकरणं बाध्येत। बुद्ध्यात्मनोरविवेकनिबन्धनबुद्ध्युपाध्यवच्छिन्न जीवनिष्ठं कर्तृत्वं तद्विषयकत्वमुक्ताधिकरणस्येति शङ्कते। नन्विति। बुद्ध्यात्मनोरविवेक-निबन्धनस्य जीवनिष्ठकर्तृत्वस्य साङ्ख्यमतेऽपि सत्वेन तस्मात्तत्रविशेषो नास्तीत्याशयेन परिहरति—नेति। अशब्दानुमानिक इति। श्रुतिप्रमाणरहितमतआनुमानिकम्। केवलानु-मानैकगम्यमित्यर्थः। तत्र = साङ्ख्यमते। पूर्वमिति। उपाधिरविद्या, अन्तःकरणोकेत्यादि-ग्रन्थेन प्रदर्शितत्वादित्यर्थः। साङ्ख्यमते बुद्धिरेव कर्त्री पुरुषस्तु निर्लेपः स च न सम्भ-वति बन्धतन्निवृत्त्योपयिकक्रत्योः स्वध्वंसाभावस्वफलभोक्तृभ्यां सामानाधिकरण्यनिय-मेन बुद्धेः कर्तृत्वायोगात। कर्तृत्वभोक्तृत्वाद्यनर्थरूपो बन्धो बुद्धिगतश्चेत्तदा मोक्षोऽपि तद्गतः स्यात् बन्धमोक्षयोः सामानाधिकरण्यनियमात् अज्ञानमपि दुःखादिभोगद्वारेणै-वानर्थ इति तत्र सिद्धान्तात्। निराकृतत्वादिति। प्रतिबिम्ब एव तावन्न सिद्ध्यतीति-ग्रन्थेन निरासादित्यर्थः। एवं भोक्तृत्वादय इति। सुषुप्त्यादौ सुखमहमस्वाप्समिति योऽहंजागर्मि सएवाहं सुखी सुप्त इति च स्मरणप्रत्यभिज्ञानप्रमाणसिद्धं भोक्तृत्वमित्याह—तथाहीति। प्रत्यभिज्ञाया इत्यस्य प्रमाणत्वादित्यनेनान्वयः। सतत्रपर्येति। सङ्कल्पादेवास्य पितरः समुपतिष्ठन्ति विहारोपदेशात्। सङ्कल्पादेवतच्छ्रुतेरितिश्रुतिसूत्रप्रमाणसिद्धं भोक्तृत्व-मित्याह—मोक्ष इति।

## भाषानुवाद

वादि का प्रश्न। आत्मामे कर्तृत्वप्रतिपादक वचनों का यह आशय है कि वह बचन बुद्ध्यवच्छिन्न आत्मा को कर्ता बतलाते हैं शुद्ध आत्मा अकर्ता है। उत्तर। यदि बुद्ध्य वच्छिन्न आत्मा को कर्तृत्व मानोगे तो साङ्ख्यमत में प्रविष्ट हुये क्योंकि सांख्य मत वादी जब तक बुद्धि और आत्मा का विवेक ज्ञान नहीं है तब तक आत्मा में कर्तृत्व मानते हैं। और अवच्छेद वाद तथा प्रतिबिम्ब वाद का खण्डन पहिले कर चुके हैं। यहां पर्यन्त आत्मा में स्वाभाविक कर्तृत्व है यह प्रतिपादन किया अब यह बतलाते हैं कि आत्मा में भोक्तृत्व भी स्वाभाविक है सभी अवस्था में आत्मा में भोक्तृत्व अनुगत है। इसमें सुखमहमस्वाप्सं यह प्रत्यभिज्ञा प्रमाण है सुषुप्ति अवस्था में सुख का भोक्ता आत्मा है। मोक्ष में ब्रह्म के स्वरूप और गुणों के आनन्द का भोक्ता मुक्त पुरुष है। इसमें जक्षन् क्रीडन्रममाणः सह ब्रह्मणाविपश्चिता यह श्रुति प्रमाण है।

## वेदान्तरत्न मञ्जूषा

यद्वा ज्ञानस्वरूपमित्यनेनैव तार्किकपक्षव्यावृत्तिवद् वाह्यपक्षव्यावृत्तिर-प्यर्थसिद्धा। उभयोरपि अचेतनात्माङ्गीकारसाम्यात्। चकारोऽहमर्थत्वसमुच्चया-र्थक एवेति पदस्वारस्यं ज्ञेयम्।

ननु स्यादेतत् तथाप्युक्तलक्षणस्य परब्रह्मणि पुरुषोत्तमेऽपि साम्यात् तत्राप्यतिप्रसङ्गस्तस्यापि लक्ष्यत्वाभ्युपगमेऽस्मत्पक्षपातादत्यन्ताभेदसिद्धेः सिद्धा-न्तभङ्ग इति चेत्तत्राह—हरेरिति। श्रीपुरुषोत्तमायत्तस्वरूपस्थितिप्रवृत्तिकत्वं सर्वनियन्तुर्विश्वात्मनः श्रीवासुदेवस्यायत्तं नियततत्रं स्वरूपं स्थितश्च प्रवृ-त्तिश्च यस्य तत्त्वं सर्वदेशसर्वकालीनवस्तुविषयकज्ञानादौ क्रियाप्रवृत्त्यादौ च स्वातन्त्र्याभाववत्वमिति यावत्।

## कुञ्चिका

इन्द्रियसन्निकर्षादात्मनि ज्ञानं भवति नान्यथा तस्मादागन्तुकज्ञानाश्रय आत्मा स्वतोऽचेतन इति तार्किका मन्यन्ते। देह एवात्मेति चार्वाकाः। इन्द्रियाण्यात्मेत्यपरे। मन एवात्मेत्यन्ये। इति सर्वेषां वेदवाह्यानां पक्षे जड एवात्मेति प्राप्त आह—ज्ञानस्वरूप इति। ज्ञानं चैतन्यं स्वरूपमस्येति तथा। "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानं यज्ञं तनुते विज्ञानमानन्दं ब्रह्म" ज्ञोऽतएव इति श्रुतिसूत्रेभ्यस्तस्य ज्ञानस्वरूपत्वं वोध्यते। अत आग-न्तुकज्ञानं आत्मा जड इति मतमपास्तम्। आत्मनो नित्यचैतन्यस्वरूपत्वं श्रुतिप्रमाणेन निर्धारितम्। तेन देहादिजडवर्गवैलक्षण्यमात्मन उक्तं भवति तथाच ज्ञानस्वरूपमित्यनेन तार्किकमतस्य वाह्यमतस्य च निरासः, अतः श्लोकोक्तचकारोऽहमर्थस्य समुच्चायक इत्याह—यद्वेति। उभयोः = वाह्यतार्किकयोः। ज्ञानस्वरूपादिघटितं प्रत्यगात्मनो लक्षणं परब्रह्मणि वासुदेवेऽतिव्यापकमिति शङ्कते नन्विति। स्यादेतदिति। एतत् = प्रत्यगात्मनोलक्षणम्। स्यात् = आस्ताम्। ततः किमित्यतआह-तत्रापीति। तस्य = परब्रह्मणः। अस्मत्पक्षपातादिति। क्षराक्षरात्यन्ताभिन्नं सजातीयविजातीयस्वगतभेदत्रयशून्यं ब्रह्म इति ब्रुवाणानामत्यन्ता-भेदवादिनां मते प्रवेशः स्यादित्यर्थः। सिद्धान्तभङ्गइति। ब्रह्मणश्चेतनाचेतनयोश्चस्वरूपेण भेदः इतरेतरात्यन्तविलक्षणत्वात्। एवमेव तस्य तयोश्च सर्वात्मत्व सर्वनियन्तृत्वसर्व-व्यापकत्वस्वतन्त्रत्वसर्वाधारत्वादियोगेन ब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यत्वतत्तन्त्रत्व-सत्त्वपराधेयत्वादियोगेनचाभेद इति तव सिद्धान्तो व्याहन्येत इत्यर्थः।

उक्तलक्षणस्य = ज्ञानस्वरूपादिघटितलक्षणस्य । तत्र = परब्रह्मणि । अतिप्रसङ्गः । अलक्ष्यवृत्तित्वादतिव्याप्तिः । हरेरधीनमितिमूलस्यार्थं विवृणोति—श्रीपुरुषोत्तम इति । स्वरूपञ्चस्थितिश्च प्रवृत्तिश्चेति समाहारः स्वरूपसम्बन्धिन्यौ स्थितिप्रवृत्ती इति वा अमुमर्थमाह--सर्वनियन्तुरिति । यदि सर्वेषां नियमनकर्तृत्वं चतुर्मुखादिष्वा-शङ्केत तदाह—विश्वात्मन इति । विश्वेषामात्मा सर्वान्तर्यामीत्यर्थः । तदप्यन्यत्राश-ङ्केत तदाप्याह--श्रीवासुदेव इति । अधीनशब्दं व्याचष्टे-आयत्तमिति । स्वतन्त्रस्य भावः स्वातन्त्र्यं स्वाधीनत्वं तदभाववत्त्वमित्यर्थः ।

## भाषानुवाद

यहाँ पर्य्यन्त के ग्रन्थ के द्वारा यह सिद्ध होचुका कि आत्मा में वास्तविक ज्ञातृत्व और अहमर्थत्वकर्तृत्वभोक्तृत्वादि धर्म वास्तविक है यह काल्पनिक नहीं है। ज्ञानस्वरूपञ्च हरेरधीनं इस श्लोक की व्याख्या प्रस्तुत है। देहादि जड वर्ग से भिन्न तथा चेतनत्व ज्ञानाश्रयत्व यह जीवात्मा का लक्षण किया यह लक्षण परमेश्वर में अति व्याप्त हुआ अति व्याप्ति नाम लक्ष्यवृत्तित्वेसत्यलक्ष्य वृत्तित्वम् । जो लक्षण लक्ष्य में रह कर अलक्ष्य में भी वर्तमान है। वह दोष अति व्याप्त कहलाता है यथा गौका, शृंगित्व लक्षण । अति व्याप्ति रूप दोष को निवारण के अर्थ हरेरधीनमिति यह विशेषण जीव के लक्षण में निवेश किया। जीवात्मा अपने स्वरूप यानी देह और इन्द्रिय आदि कों से विलक्षण प्रकाशात्मक आनन्द स्वरूप है और स्थिति प्रवृत्ति में सर्वथा भगवान् के परतन्त्र है। भाव यह है कि जिस २ वस्तु का ज्ञान जीव को होता है वह ईश्वर की प्रेरणा से ही होता है क्रिया करादि व्यापारः। भगवान की सेवा के लिये पुष्प और तुलसी लाना माला का ग्रन्थन मन्दिर का मांजनः आदि व्यापार कर साध्य है वाङ्मन के द्वारा आरम्भ रूपा प्रवृत्ति है। वाणी द्वारा भगवान् के नाम और गुणों का कीर्तन मन से भगवान् की लीलाओं का स्मरण । यह सभी कार्य भगवान् की कृपा से ही होते हैं।

## वेदान्तरत्नमञ्जूषा

तथाच देहादिजडवर्गभिन्नत्वे ज्ञानाश्रयत्वे च सति भगवदायत्तस्वरूप-स्थितिप्रवृत्तिकत्वं त्रिविधानां प्रत्यगात्मनां साधारणम् । तत्र सत्यन्तस्य विशेषणद्वयात्मकस्य परमात्मसाधारणत्वेऽपि न क्षतिः । उत्तरदलस्यासाधा-

रणस्य व्यावर्त्तकत्वान्नोक्तदोषगन्धस्पृष्टवातस्पर्शावकाशः । उक्तासाधारणत्वे श्रुतयः । "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"

## कुञ्चिका

प्रत्यगात्मनः पर्य्यवसितं लक्षणं निर्वक्ति - देहादीति । प्रथमसत्यन्तेन तार्किकबौद्धाभिमतस्यात्मस्वरूपस्य व्युदासः । द्वितीयसत्यन्तेन चैतन्यमात्रस्वरूपात्मवादिनां-सांख्यानुयायिनां मायावादिनाञ्च मतमपाकृतं भवति। विशेष्यदलेन च परब्रह्मणो व्यावृत्तिः। नित्यमुक्तबद्धमुक्तबद्धानां प्रत्यगात्मनां त्रयाणां साधारणमिदं लक्षणमित्याह—त्रिविधानामिति । तत्र = लक्षणे । विशेषणद्वयात्मकस्य = देहादिजडवर्गभिन्नत्वरूपमेकं विशेषणम्, अपरञ्च ज्ञानश्रयत्वात्मकम् । उत्तरदलस्य = भगवदायत्तस्वरूपस्थितिप्रवृत्तिकत्वरूपस्य । नोक्तदोषेति । उक्तदोषस्य परब्रह्मण्यतिव्याप्तिरूपस्य योगन्धस्तेन स्पृष्टं यत् वातं तस्य योस्पर्शस्तस्यावकाश इत्यर्थः । भगवदायत्तस्वरूपेत्यादिविशेष्यदलं यज्जीवलक्षणउपन्यस्तं तं श्रुतिमुखेन प्रमाणयति—उक्तासाधारणत्व इति । हरेरधीनत्वजीवस्यासाधारणधर्म इत्यर्थः । तमेवभान्तमिति सर्वमिदं चेतनाचेतनात्मकं वस्तु पुरुषोत्तमप्रकाशाधीनप्रकाशात्मकमित्यर्थः ।

## भाषानुवाद

देहादि जडवर्ग से भिन्न ज्ञानस्वरूप ज्ञाता और हरि के आधीन यह जीव का असाधारण लक्षण है । देह और इन्द्रिय को आत्मा मानने वाले चार्वाक आदि कों का मतखण्डनार्थ देह आदि जडवर्ग से भिन्न यह विशेषण है ज्ञान स्वरूप विशेषण से तार्किकमत का खण्डन किया । ज्ञानाश्रय विशेषण से सांख्य और माया वादियों का मत निराकरण किया । हरि के अधीन इस विशेषण से परमेश्वर की व्यावृत्ति की है। यह लक्षण नित्य मुक्त और बद्ध मुक्त और बद्ध इन तीनों जीवों में घटता है। उक्तार्थ को प्रमाणित करने के लिये श्रुतिस्मृति दिखलाता है।जैसे तमेव भान्तमनुभाति सर्वमिति। भगवान के प्रकाश से हि सर्व जगत का प्रकाश होता है।

## वेदान्तरत्न मंजूषा

एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति यमेभ्यो लोकेभ्योऽधोनिनीषते आत्मा हि परमः

स्वतन्त्रोऽधिगुणः जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः । अचिन्त्यशक्तिः पुरुषः पुराणः । नचान्येषां शक्तयस्तादृशाः स्युः, स कारयेत् पुण्यमथापि पापं न तावता दोषत्रानीशताऽपि इत्यादयः । बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः सुखं दुःखं भवो भावो भयश्चाभयमेव च । अहिंसा समता तुष्टिस्तपोदानं यशोऽयशः । भवन्ति भावा भूतानां मत्त एव पृथग्विधाः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया । सर्वस्य चाहं हृदिसन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च" इतिश्रीमुखेन स्वयमेव गीतानिच । जगद्वशे वर्त्ततेऽदः कृष्णस्य सचाराचरमिति भीष्मश्चाह ।

## कुञ्चिका

पुण्यपापादिकर्मसु प्राणिकर्मसापेक्षः पुरुषोत्तमः प्रयोजककर्त्रेति प्रदर्शयितुं श्रुतिमुदाहरति—एष एवेति । सर्वेश्वरस्य स्वातन्त्र्यवोधिकां श्रुतिमुदाहरति—आत्माहीति । सर्वान्तर्यामी परमेश्वरः स्वतन्त्रः सकलकल्याणगुणाश्रयः इत्यर्थः । जीवस्य पार-तन्त्र्यवोधिकां श्रुतिमुदाहरति--जीव इति । अचिन्त्यशक्तिः=अचिन्त्या इयत्तावच्छेदेन चिन्तयितुमनर्हाः शक्तयो यस्य स तथोक्तः । पुरुषः=सर्वेश्वरः पुराणः=पुरातनः । अन्येषाम्=प्रत्यगात्मनाम् । पुण्यपापादिकारयितृत्वेऽपि परमेश्वरस्य दोषास्पृश्यत्वं श्रुतिमुखेनाह—सकारयेदिति सर्वदेशसर्वकालीनवस्तुविषयकज्ञानादौ क्रियाप्रवृत्यादौ च स्वाधीनत्वाभाववत्वरूपं यद्भगवदायत्तस्वरूपस्थितिप्रवृत्तिकत्वरूपं प्राङ्निर्दिष्टं तत् श्रीमुखवचनेन प्रमाणयति--बुद्धिर्ज्ञानमिति । बुद्धिः=सारासारविवेचनरूपान्तःकरणा वस्था । ज्ञानम्=आत्मानात्मपदार्थाववोधनम् । असम्मोहः=वोद्धव्यवस्तुविषयक-भ्रमनिरासेन तत्स्वरूपावधारणम् । क्षमा--चित्तविकारहेतौ सत्यविकृतचित्तता । सत्यम्=यथादृष्टश्रुतवस्तुविषयकभाषणम् । दमः=वाह्येन्द्रियाणां स्वस्वविषयेभ्यो-नियमनम् । शमः=अन्तःकरणस्यानर्थविषयेभ्योनिवर्त्तनम् । सुखम्=अनुकूलवेदनीयम् । दुःखम्=प्रतिकूलानुभवः । भावः=उद्भवः । अभावः=तद्विपर्ययः । भयम्= अगामिदुःखस्य हेतुदर्शनजत्रासः । अभयम् । तन्निवृत्तिः । अहिंसा=मनोवाकायैः प्राणिहिंसानिवृत्तिः । समता=रागद्वेषराहित्यम् । तुष्टिः=यथालाभेन सन्तोषः । तपः । एकादश्यादिव्रतरूपम् । दानम् । न्यायार्जितस्य धनादेर्देशे काले पात्रे प्रति-पादनम् । यशः । औदार्यादिगुणवत्तयाश्लाघा अयशः=कार्पण्यादिदोषेण लोककुत्सनम् ।

बुद्धिरित्यादयस्तद्विपरीताश्च भावाः पृथग्विधाः प्रतिव्यक्तिभिन्नाः प्राणिनां तत्तत्कर्मानुसारेण मत्त एव भवन्तीतिश्लोकार्थः। सर्वस्य प्राणिनः परमेश्वराधीनत्वमाह—ईश्वर इति। ईश्वरः = सर्वचेतनाचेतननियमनशीलो भगवान् वासुदेवः सर्वभूतानां हृद्देशे हे अर्जुन तिष्ठति किंकुर्वन् सर्वभूतानि मायया निजशक्त्या भ्रामयन् तत्तादनादिबीजभूतकर्मानुसारेण शुभाशुभकर्मसु प्रवर्त्तयन्। कथम्भूतानि यन्त्रारूढानि = प्रकृतिपरिणामदेहेन्द्रियरूपं यन्त्रमारोपितानि यथा दारुमययन्त्रमारूढानि कृत्रिमाणि पक्षिमृगादिभूतानि सूत्रबद्धानि सूत्रधारो लोके भ्रामयति तद्वदित्यर्थः। सर्वचेतनाचेतनवस्तुजातस्य भगवदायत्तत्वं स्वस्य चस्वतन्त्रत्वं सर्वधीप्रवर्त्तकत्वञ्चाह- सर्वस्येति। सर्वस्य = ब्रह्मादिप्राणिमात्रस्य हृदि सम्यगन्तर्यामिरूपेण निविष्टः अतोमत्त एव हेतोः। सर्वस्य पूर्वानुभूतार्थ विषया स्मृतिर्भवति। ज्ञानम् = विषयेन्द्रियसंयोगजो यथावस्तु-विषयानुभवः। अपोहनञ्च = स्मृतिज्ञानयोः प्रमोषो मत्त एव भवति। इत्यर्थः। विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्। स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च स इत्यपि द्रष्टव्यम्।

## भाषानुवाद

एष एवसाधुकर्मकारयतीति। ईश्वर ही प्राणियों के कर्म के अनुसार भला कर्म कराता है जिन्हों को इन लोकों से ऊपर के लोकों में ले जाने की इच्छा करता है उन्हों से ईश्वर ही कर्म के अनुसार साधु भला कर्म कराता है जिसको इन लोकों से अध यानि नीचे ले जाने की इच्छा करता है। ईश्वर पुण्य तथा पाप को कराता है तो भी दोषों से लिप्त नहीं होता है क्योंकि सर्व सामर्थ्य युक्त है। आत्मा हि परमः स्वतन्त्रोधिगुण इति। ईश्वर स्वतन्त्र है सकल गुण और शक्ति से अधिक है। जीवोऽल्पशक्तिरस्वतन्त्रोऽवरइति। जीवात्मा स्वतन्त्र नहीं है और अल्पशक्ति है ईश्वर से निकृष्ट है। जीवात्मा ज्ञान और क्रिया प्रवृत्ति में स्वाधीन नहीं है, किन्तु भगवान् के अधीन है। इसको श्रीमद्भगवद्गीता के वचन द्वारा प्रमाणित करते हैं कि "बुद्धिर्ज्ञानमसंमोहः" "क्षमासत्यं दमःशम इति।" बुद्धि एक अन्तःकरण की अवस्था है जिसके द्वारा सार और असार वस्तुओं का विवेचन किया जाता है। आत्म और अनात्म वस्तुओं का ज्ञान असम्मोहः। भ्रमनिराकरण पूर्वक वोद्धव्य वस्तु का स्वरूप अवधारण है। क्षमा = चित्त में विकार होने के कारण विद्यमान

है तो भी चित्त में कोई विकार न होना। सत्य = जिस प्रकार देखा और सुना उसी तरह भाषण करना। दमः = बाहिर की इन्द्रियगण को स्वविषयों से हटाना। शमः = अन्तःकरण को स्वविषयों से रोक देना। सुख और दुःख। भवः = उत्पत्ति। अभावः = उत्पत्ति का अभावः। भयम् = आगामिदुःख के हेतुदर्शनजन्मत्रास। अभयम् = भय की निवृत्ति। अहिंसा = मन और वाणी और काया से जीवमात्र कि हिंसा निवृत्ति। समता = राग द्वेष इन दोनों की निवृत्ति। तुष्टिः = यथा लाभ से संतोष। तपः = एकादशी आदि उपवासों का पालन करना। दानम् = न्याय से उपार्जित धन को पात्र ब्राह्मण को देना। यश और अयश यह प्राणियों को तत्तत्कर्म के अनुसार मेरे से प्राप्त होता है ईश्वरः सर्वभूतानामिति। ईश्वर सर्व का नियन्ता सर्व भूतों के हृदय में स्थित है सर्वोंको माया यन्त्र पै चढ़ाकर नचाते हैं। सर्व स्यचाहं हृदिसन्निविष्ट इति। सर्वों के हृदय में मैं ही विराजमान हूँ मेरे से ही स्मरण और ज्ञान होता है और इन दोनों का नाश भी मेरे द्वारा होता है। जगद्वशेवर्त्ततेऽदः कृष्णस्य स चराचर मिति। चराचर सब जगत् श्रीकृष्ण के वश में रहता है यह भीष्मजी का वचन प्रमाण है। इन वचनों से साबित हो चुका कि जीव सदा भगवान् के अधीन है।

## वेदान्तरत्न मंजूषा

**नन्वीश्वरस्यैव पुण्यापुण्यकर्मणां प्रयोजककर्तृत्वाभ्युपगमे वैषम्यनैर्घृण्यप्रसक्तिः स्यादिति चेन्न। कर्मसापेक्षत्वात्। तथाह भगवान्सूत्रकारः। वैषम्यनैर्घृण्ये न सापेक्षत्वादिति। ननु तर्हि कर्मण एव प्रयोजकत्वमभ्युपगन्तव्यं किमीश्वरेण सापेक्षेणेति चेन्न। तस्य जडत्वेन कर्तृत्वनियन्तृत्वादेरसम्भवात्। अन्यथा।**

## कुञ्चिका

सहि स्वतन्त्रः परमकारुणिको भगवान् पुरुषोत्तमो धर्म एव शारीरान्प्रवर्तयेन्नाधर्मे तत्प्रेरिताश्च जन्तवः सर्वे धार्मिका एव सुखिन एव स्युर्नदुःखिन इतीश्वरतन्त्रत्वेन वैचित्र्यं जगतः स्यात् प्रत्युतो भगवतः द्वेषपक्षपाताभ्यां विषमता नैर्घृण्यञ्च प्रसज्येते इति शङ्कते— नन्विति। यद्यप्ययमीश्वरो वीतरागस्तथापि पूर्वपूर्वप्रत्यगात्मकर्मापेक्षया तान् धर्माधर्मयोः प्रवर्तयन्नद्वेषपक्षपाताभ्यां विषमः नापि निर्घृण

इत्याशयेनोक्तां शङ्कां परिहरति—नेति । तत्र हेतुमाह—कर्मेति । उक्तार्थे सूत्रकारस्य सम्मतिमाह—वैषम्येति । वैषम्यं नाम देवमनुष्यादीनामुत्तममध्यमादिरूपविषमसृष्टि-कर्तृत्वम् । नैर्घृण्यं नाम दुर्विषहदुःखगर्भजगन्निर्मातृत्वेन तत्संहर्तृत्वेन च निर्दयालुता । तत्रोत्तरमाह-नेति । दृश्यते च लोके चैतनस्यैव कर्त्तुर्नियन्तृत्वं कर्मणां तथात्वाभावान्न प्रयो-जकत्वमन्यथा जडत्वसाम्यात् कर्मवद्घटपटादीनामपि नियन्तृत्वं प्रसज्येतेत्याशयेनोक्तां शङ्कां व्युदस्यति—नेति । तस्य=कर्मणः । विपक्षे बाधकतर्कमुपन्यस्यति—अन्यथेति । जडस्यापि कर्तृत्वनियन्तृत्वे इति तदर्थः ।

## भाषानुवाद

यहाँ पर यह प्रश्न उपस्थित होता है कि जब ईश्वर ही पुण्य और पाप का कराने वाला है। तब ईश्वर में वैषम्य और नैर्घृण्य दोष प्रसक्त होते हैं । वैषम्य उसे कहते हैं कि देवता मनुष्यों की उत्तम और मध्यम आदि रूप से विषमसृष्टि का करना । नैर्घृण्य नाम प्राणियों को गर्भवास आदि को मैं दुख देने से निर्दयालुता । उक्त शङ्का का निवारण यह है कि जीवों के कर्मों के अनुसार ईश्वर पुण्य और पाप कराता है । सूत्रकार श्रीव्यासाचार्यजी ने यही निर्णय किया है । वैषम्यनैर्घृण्ये न सापेक्षत्वादिति । ईश्वर में वैषम्य और नैर्घृण्य दोष की प्रसक्ति नहीं है क्योंकि प्राणियों के पुण्य और पाप रूप कर्म के सापेक्ष सृष्टि को ईश्वर रचता है । वादि का प्रश्न जब कर्म सापेक्ष सृष्टि बतलाते हो तो तब कर्म को हि सृष्टि का कारण कहना चाहिए ईश्वर को कारण मानना निरर्थक है क्योंकि पुण्य और पाप कर्म के अनुसार उत्तम और अधम योनि जीव को प्राप्ति होगी । उत्तर । कर्म जड है । इससे वह नियन्ता और कर्म फल का दाता कदापि नहीं हो सकता है यदि जड कर्म को कर्ता और नियन्ता स्वीकार करोगे तो तब घटपट आदि को भी कर्ता नियन्ता मानना चाहिये और चेतन के सम्बन्ध से ही अचेतन कार्य कर सकता है । रेलगाड़ी की कल को जब ( ड्राइवर ) चालक मोड़ता है तब ही रेल गाड़ी चल सकती है । अतएव जड़वस्तु स्वतन्त्र कदापि कार्य नहीं कर सकता है ।

## वेदान्तरत्नमञ्जूषा

**घटादावति प्रसङ्गाच्च । न च प्रलये कर्मणोऽप्यभावात् कथमिव तत्सा-पेक्षत्वं परमात्मनः सम्पादनीयमिति वाच्यम् । कर्मणामनादित्वात् । इतरथा**

सृष्ट्यभावप्रसङ्गः । कृतनाशाकृताभ्यागमप्रसङ्गश्च । तथा च सूत्रम् । "न कर्माविभागादिति चेन्नानादित्वादिति" तस्मात् कर्म सापेक्षत्वात् पुण्यापुण्यादि प्रयोजकस्य नियन्तुर्न वैषम्यादि शङ्कावकाशः । एददुक्तं भवति यथा व्रीह्याम्रकण्टकादीनां विषमाणामप्युत्पत्तौ पर्जन्यस्यासाधारणहेतुत्वेऽपि वैषम्यस्य तत्तद्बीजवृत्तित्वेन न पर्जन्येतत्प्रसक्तिरेवमेव पुण्यापुण्यसुखदुःखादीनां विषमाणामपि साधने परमात्मनोऽसाधारणत्वेऽपि वैषम्यस्य तद्बीजात्मकानादिकर्मनिष्ठत्वेन परमेश्वरे भगवति न वैषम्यादिप्रसङ्ग इति । तथा च श्रुतिः "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति" ।

## कुञ्चिका

अतिप्रसङ्गाच्चेति । अतिप्रसक्तिश्चात्र घटादीनां कर्तृत्वनियंतृत्वापत्तिरूपा द्रष्टव्या । यदि कर्मणां चेतनत्वमभ्युपेयते तदा संज्ञाभेदोऽवशिष्यते न वस्तुभेदस्तस्यैवेश्वरत्वं सम्भवतीत्याशयः । यदि प्रलये कर्मणां सत्तां स्यात्तदा तत्सापेक्षत्वं परमात्मनः सम्भवति नत्वेवमित्याशङ्क्य परिहरति—नचेति । तत्र हेतुमाह—कर्मणामिति । यदि प्राणिकर्मणामनादित्वं नस्यात्तदा प्रलयोत्तरकाले सृष्टिर्नस्यातदन्यथानुपपत्त्या कर्मणामनादित्वं वाच्यमिति विपक्षे बाधकतर्कमुपन्यस्यति—इतरथेति । कर्मणामनादित्वस्वीकार इति तदर्थः । उक्तार्थं सूत्रकारसंमत्या द्रढयति—तथासूत्रमिति । नच सृष्टेः प्रागेकत्वावधारणात्तदा जीवानामप्यभावेन तत्कर्मणामभावशङ्कनीय इति वाच्यम् । जीवानां तत्कर्मप्रवाहाणाञ्चानादित्वेनैकत्वावधारणात् पृथग्व्यपदेशार्हविभक्तनामरूपात्मकस्थूलाभावाभिप्रायत्वात्, अतो जीवतत्कर्मणामनादित्वेन सत्त्वेऽप्यविभाग उपपद्यते । अनादित्वं जीवानां तत्सृष्टिप्रवाहाणाञ्च "न जायते म्रियते वाविपश्चित्" सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदित्यादिश्रुतिषूपलभ्यते विचित्रसृष्टिप्रवाहानादित्वेनैव तत्कारणविचित्रकर्मप्रवाहानादित्वमप्यवसीयत इति सूत्रार्थः । निगमयति--तस्मादिति । एतदुक्तमिति । यदुक्तं तदेतदभवतीत्यर्थः । कर्म विशेषमूलं जगद्वैषम्यमीश्वरस्तदुत्पत्तौ साधारणकारणम् । यथा सस्योत्पत्तौ पर्जन्यस्याधारणकारणत्वम् । तद्भूयोऽल्पत्वव्रीहियवत्वादि वैषम्यंक्षेत्रबीजादिविशेषकृतमिति नेश्वरे वैषम्यादिप्रसक्तिरित्याह—यथेति । यथा बीज एव वैषम्यं नतु पर्जन्ये तद्वत् वैषम्य तत्तद्बीजात्मकानादिकर्मगतमेव नत्वीश्वर इत्यर्थः । उक्तार्थं श्रुति

मुखेन द्रढयति—पुण्योवेति । उक्तशास्त्रप्रामाण्यादेव धर्मादीन् प्रति कर्मणो हेतुत्वं सिद्ध्यतीति भावः ।

## भाषानुवाद

प्रश्न—यदि प्रलयकाल में प्राणियों के कर्मों की स्थिति हो तब उन्हों के अनुसार ईश्वर फल का दाता हो सकता है प्रलय समय में सब वस्तुओं का नाश हो जाता है तब कर्मों का भी नाश हो चुका । उत्तर—कर्म अनादि सिद्ध है यदि कर्मों को अनादि नहीं मानोंगे तो सृष्टि की उत्पत्ति कदापि नहीं हो सकती है । यदि कर्मों को अनादि स्वीकार नहीं करोंगे तो जो प्राणियों ने पूर्व जन्म में कर्म किये थे उनका नाश मानना पड़ेगा और दूसरे जन्म में पूर्व कर्म तो नष्ट होचुके नये कर्मों की प्राप्ति होनी चाहिए । यह सिद्धान्त सूत्रकार के सम्मत है । "न कर्माविभागादितिचेन्नानादित्वात् ।" विचित्र सृष्टि का प्रवाह अनादि है अतएव सृष्टि के कारण विचित्र कर्मों का प्रवाह भी अनादि है इसी से कर्मों के अनुकूल पुण्य और पाप का फल ईश्वर देता है । अतएव ईश्वर में वैषम्य आदि दोष नहीं आ सकते हैं जैसे आम्र के वृक्ष में फल मिष्ट और मधुर होता है । कांटों के वृक्ष में कांटे हीं लगते हैं इन दोनों की उत्पत्ति में वर्षा का जल कारण है परन्तु जल में विषमता नहीं है विषमता फलों के वीज में है वैसे ही ईश्वर विषम सृष्टि का कारण है परन्तु ईश्वर में विषमता नहीं है । विषमता जीवों के कर्मों में है । इस वार्ता को "पुण्यो वै पुण्येन कर्मणा पापः पापेनेति ।" यह श्रुति बतलाती है पुण्यकर्म से धर्मात्मा श्रेष्ट देह को प्राप्त होता है और पापकर्म करने से पापी देह मिलता है । इससे यह सावित हो चुका है कि जिस तरह का वृक्ष का वीज होता है वैसा ही पेड़ में फल उत्पन्न होगा अतएव पृथक् पृथक् फल पेड़ों में लगते हैं नानाप्रकार के फल होने में वृक्षों के बीजों में भिन्न भिन्न शक्ति है वृष्टि के दाता मेघों में वह शक्ति नहीं है । वैसे ही जीवों के कर्मों में ही एक विचित्रता है । तदनुसार विचित्र विचित्र योनीयों कीप्राप्ति जीवों कों होती है अतएव ईश्वर में विषमता नहीं है ।

## वेदान्त रत्न मञ्जूषा

न चैवं मुक्तौ कर्मणोऽभावादीश्वरतन्त्रत्वस्याभाव इति वाच्यम् । नियन्तृत्वनियम्यत्वयोस्तत्तत्पदार्थस्वरूपत्वात् नहि स्वरूपनाश एव मुक्तिर पितु स्वरूपापत्तिरेवेति । किञ्च न वयं ब्रह्मनियन्तृत्वस्य कर्मसापेक्षत्वं ब्रूमः

किन्तु पुण्यादिकर्मकारयितृत्वे तत्फलदातृत्वेच तयोर्मुक्तात्मभावेऽपि स्वरूप-स्थितिप्रवृत्त्यादौ नियन्तृत्वस्य सदायतनत्वात्सर्वं समञ्जसम् । न च स्यादेत-त्तथापि परमात्मनः सर्व प्रयोजकत्वाभ्युपगमे शास्त्राचार्योपदेशस्य वैयर्थ्या पत्तिरिति वाच्यम् । भगवदायत्तस्वरूपस्थितिप्रवृत्त्यादिविषयकज्ञानाभाव वन्तमेव मुमुक्षुमधिकृत्य शास्त्रस्य प्रवृत्यभ्युपगमात् ।

## कुञ्चिका

प्रत्यगात्मनां पारतन्त्र्यं कर्मसापेक्षं यद्यभ्युपेयते तदा मुक्तौ कर्मणोऽभावा-त्तेषामीश्वरपारतन्त्र्यं न स्यादित्याशङ्क्य परिहरति—नचेति । नियन्तृत्वं तत्पदार्थ वृत्त्यसाधारणस्वाभाविकधर्मरूपम् । नियम्यत्वं त्वंपदार्थप्रत्यगात्मनो साधारण स्वाभाविकधर्मरूपं तौ च धर्मौ स्वरूपादनतिरिक्तावित्याह—नियन्तृत्व इति । यदीश्वरनियन्तृत्वं कर्मसापेक्षत्वं स्यात्तदा मुक्तौ प्रत्यगात्मनां कर्माभावादीश्वर-पारतन्त्र्यं न सिद्ध्येदित्यापत्तिः स्यात् न त्वेवं किन्तु पुण्यापुण्यादिकर्मप्रवाह कारयितृत्वे तत्फलदातृत्वे च कर्मसापेक्षत्वमीश्वरस्य तथा च मुक्तौ तयोरभावेऽपि प्रत्यगात्मनः स्वरूपादौनियन्तृत्वस्य सार्वदिकत्वान्नोक्त दोषावकाश इत्यर्थः । यदीश्वरः कारयति तदा "स्वर्गकामो यजेत" माहिंस्यात्सर्वभूतानीत्यादिविधिनिषेधानामाचार्यो पदिष्टसाधनानाञ्च वैयर्थ्यं प्रसज्येत प्रत्यगात्मनामत्यन्तपरतन्त्रत्वादित्याशङ्क्य परिहरति—नचेति । यस्य पुंसः मदीयस्वरूपस्थितिप्रवृत्त्यादिकं परमेश्वरायत्तमिति ज्ञानं नास्ति तमुद्दिश्य विधिनिषेधादिशास्त्रंप्रवर्त्तते न तु तादृशज्ञानवन्तंप्रतीत्याह-- भगवदायत्तेति ।

## भाषानुवाद

वादी की शंका मुक्तिकाल में प्राणियों के कर्म नष्ट हो जाते हैं उस समय में ईश्वर जीवों का नियन्ता नहीं हो सकता है। समाधान। नियन्तृत्व तत्पदार्थ ब्रह्म स्वरूप है और नियम्यत्व त्वं पदार्थ जीव स्वरूप है। जो स्वरूप नाश को मुक्ति मानते हैं उन्हीं के मत में नियन्तृत्व और नियम्यत्व के नाश की कल्पना है। सिद्धान्ति के मत में स्वरूपापत्ति अर्थात् स्वरूप की प्राप्ति मुक्ति है और भगवान् में जो नियन्तृत्व धर्म है वह कर्म सापेक्ष नहीं है किन्तु पुण्य पाप के कराने में और कर्म के फल देने में जीवों के कर्म सापेक्ष है मुक्ति में कर्मों का अभाव होने पर भी जीव की स्वरूप स्थिति प्रवृत्ति का

ईश्वर ही नियन्ता है इसमें अणु मात्र भी संदेह नहीं है। प्रश्न यदि ईश्वर को प्रयोजक कर्त्ता कहोगे तो वेदान्त वचन और आचार्य से उपदिष्ट साधन निरर्थक हो जायेंगे। उत्तर। जीव सर्व अवस्था में ईश्वार के अधीन है इस ज्ञान से रहित मुमुक्षु शास्त्र और आचार्य के उपदेश का विषय है जिस साधक को मेरी स्वरूप और स्थिति प्रवृत्ति भगवान के अधीन है। यह सच्चा ज्ञान है वह शास्त्र और आचार्य के उपदेश का विषय नहीं है। इससे सिद्ध हो चुका कि जीवात्मा सर्व अवस्था में परमेश्वर के अधीन है।

## वेदान्तरत्न मञ्जूषा

सर्वमनवद्यम्। किञ्च प्रत्यगात्मानः परमात्मायत्तस्वरूपस्थिति-प्रवृत्तिकाः तदात्मकत्वात्। योयदात्मकः स तदायत्त स्वरूप-स्थितिप्रवृत्तिकः मृदात्मकघटादिवत्। घटादीनां मृदात्मकत्वेन मदायत्त-स्वरूपस्थित्यादेर्दृष्टचरत्वात्। उक्तसिद्धान्तेऽनुमानस्यापि प्रमाणत्वात्। न चाचेतने व्यभिचारित्वेन हेतोरनैकान्त्यमितिवाच्यम्। तस्यापि साध्यत्व-साम्यात्। नन्वेवं तर्हि दृष्टान्तासिद्धिरिति चेन्न व्यतिरेकिदृष्टान्तस्य खपुष्पादेः सत्त्वात्। चेतनाचेतनवस्तुजातं ब्रह्मायत्तस्वरूपस्थिति प्रवृत्तिकम्। तदात्मकत्वात् यन्नैवं तन्नैवं खपुष्पनरविषाणाद्यवस्तुवत्। किञ्चेश्वरपारतन्त्र्यस्येश्वरेपि सत्वादात्मायत्तत्वात् परमात्मनः परस्येति ब्रह्मण्यतिव्याप्तिस्तदवस्थैवेति तर्काभिज्ञस्य देवानां प्रियस्य तात्पर्यमाकलय्य तद्व्यावृत्त्यर्थमन्यदसाधारणविशेषणं वदन्।

## कुञ्जिका

अनुमानप्रमाणेनाप्युक्तसिद्धान्तं द्रढयति—किञ्चेति। न्यायावयवान् दर्शयति—प्रत्यगात्मान इति। तदात्मकत्वात् = ब्रह्मात्मकत्वात्। परमात्मायत्तस्वरूप-स्थितिप्रवृत्तिकत्वाभाववत्यचेतने घटादौ तदात्मकत्वरूपहेतोः सत्वाद् व्यभिचार इत्याशङ्क्य परिहरति—नचेति। तत्र हेतुमाह—तस्यापीति। अचेतनस्यापीत्यर्थः। साध्यत्वसाम्यादिति। अचेतनेऽपि परमात्मायत्तस्वरूपस्थितिप्रवृत्तिकत्वं साध्यत इत्यर्थः। तदुक्तं पक्षे पक्षसमे च व्यभिचारो न दोषायेति। यद्यचेतनेऽपि साध्यं साध्यते तदादृष्टान्तासिद्धिरिति शङ्कते—नन्विति। व्यतिरेकदृष्टान्तमनुसृत्य समाधत्ते—

व्यतिरेकीति । प्रयोगं दर्शयति—चेतनाचेतनमिति । यन्नैवमिति । यत् खपुष्पादिकं ब्रह्मायत्तस्वरूपस्थिति प्रवृत्तिकं न भवति । तन्नैवमिति । तत् खपुष्पादिकं ब्रह्मात्मकं न भवतीत्यर्थः । यदीश्वरायत्तत्वं स्वस्मिन्नप्याशङ्केत तदानिरुक्तलक्षणस्य ब्रह्मण्यति व्याप्तिस्तद्वारणाय प्रागुपदर्शितलक्षणे विशेषणान्तरं प्रक्षेप्तुमाह—किञ्चेति । देवानां प्रियस्य = मूर्खस्य । तद्व्यावृत्यर्थम् = ब्रह्मव्यावृत्यर्थम् । प्रत्यगात्मनः परिमाणत्वे विविदन्ते बहवोऽतस्तद्विवादं निरसितुमाह—प्रत्यग्वृत्तिपरिमाणमिति ।

## भाषानुवाद

उक्त अर्थ को अनुमान से भी सिद्ध करते हैं जीवात्मा की हरि के अधीन स्वरूप स्थिति और प्रवृत्ति हैं क्योंकि सब जीव ब्रह्मात्मक है अर्थात् ब्रह्म ही उन्हों का आत्मा है। जो वस्तु यदात्मक होता है उसकी स्वरूप स्थिति प्रवृत्ति उसके अधीन रहती हैं। जैसे घटमृदात्मक है इससे उसकी स्थिति मृत्तिका के अधीन हैं। वादी का प्रश्न है घटादि अचेतनों में साध्य नहीं रहकर मृदात्मक हेतु विद्यमान हैं इसी से तुम्हारा हेतु व्यभिचारी हैं साध्याभाववृत्तिर्हेतु र्व्यभिचारी। जो हेतु साध्य के अभाव वाले अधिकरण में विद्यमान हो वह हेतु व्यभिचारी कहलाता है। उत्तर। अचेतन वस्तु में भी उक्त साध्य को उक्त हेतु से सिद्ध करते हैं। अतएव पक्ष के सम में व्यभिचार नहीं होता है। अथवा उक्त अनुमान में व्यतिरे कि दृष्टांत जानना जहाँ पर साध्य न हो वहाँ पर हेतु भी नहीं रहता हो उसे व्यतिरेकि दृष्टान्त कहते हैं। जैसे खपुष्प की स्वरूप स्थिति और प्रवृत्ति हरि के अधीन नहीं है वह ब्रह्मात्मक भी नहीं हैं। उक्त जीव का लक्षण ईश्वर में अति व्याप्त हैं क्योंकि ईश्वर की स्वरूप स्थिति और प्रवृत्ति ईश्वर के अधीन है इस दोष को निवारण के लिये मूल में अणुं यह विशेषण जीव के लक्षण में दिया ईश्वर विभु है जीव का परिमाण अणु हैं।

## वेदान्तरत्न मंजूषा

प्रत्यग्वृत्तिपरिमाणविवादं निराकरोति—अणुमिति । यद्वा किं परिमाणकोऽसौ प्रत्यगात्मेत्याशङ्कायां वैभवमध्यमपरिमाणवादितार्किकादिबाह्यादि-पक्षौ निराकरोति—अणुमिति । अणुपरिमाणकमिति यावत्। "अणुर्ह्येष आत्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश, अणुर्ह्येष आत्मा

यं वा एते सिनीतः पुण्यं पापम्" । बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इत्यादिश्रुतेः ।

## कुञ्चिका

सर्वेश्वरस्तु स्वतन्त्रएव नतु परतन्त्रस्तथाचहरेरधीनत्वविशेषणेनैव ब्रह्म-
ण्यतिव्याप्तिवारणसम्भवेऽणुमिति विशेषणं निष्प्रयोजनकमित्यत आह—यद्वेति ।
किं शारीररोऽणुपरिमाण उत मध्यमपरिणाम आहोस्वित महत्परिमाण इति तत्र
जीवात्मनो मध्यमपरिमाणत्वे घटादिवदनित्यत्वं प्रसज्येत । श्रूयते चात्मनो देहान्नि-
र्गमो विभुपरिमाणत्वे तन्नोपपद्येत शरीरपरिमाणत्वार्हतपरीक्षायां निरस्तं
सूत्रकारैः तस्मादणुरात्मेत्याह—अणुमिति । प्रत्यगात्मनोऽणुत्वं साक्षादेव श्रुतौ श्रूयतेऽतो
तामुदाहरति—अणुर्ह्येष इति । अणुपरिमाणकः । एष आत्मा जीवात्मा चेतसा
वेदितव्यः यस्मिन्नात्मनि प्राणापानादिपञ्चरूपेण विभक्तः प्राण आश्रित इतरैरीन्द्रियैः
सहेत्यर्थः । बालाग्रेति । बालाग्रस्य यःशततमोभागस्तस्यापि पुनः शतधा कल्पितस्य
तस्य विभाजितस्य योभागोऽतिसूक्ष्मस्तद्वत् स जीवोऽतिसूक्ष्मो विज्ञेयः स च
आनन्त्याय सङ्ख्यानिरूपितावसानशून्यत्वाय कल्पते प्रभवति अनन्तव्यक्तिकः ।
यद्वा ननु जीवस्यातिसूक्ष्मपरिमाणकत्वे सर्वावयवगतसुखदुःखाद्यनुभवयोगस्य व्यवस्था
न स्यात्तस्य देहैकदेशविशेषे स्थैर्यनियमादित्याशङ्कायामाह—सचानन्त्यायेति । स्वरूपेणा-
णुपरिमाणकोऽपि सजीवो धर्मभूतज्ञानेनानन्त्याय विभुत्वाय कल्पते । यथाणुनश्चक्षुषः
प्रकाशोव्याप्त एवमेवास्य प्रकाशो व्याप्तो वैपुरुष इत्यादिश्रुत्यन्तरात् ।

## भाषानुवाद

सम्प्रति जीवात्मा के परिमाण का निर्णय करते हैं। अणुपरिमाणमिति ।
जीव का अणु परिमाण है । यदि जीवात्मा का मध्यम परिणाम मानेंगे तो घटादि-
वत् अनित्यत्व दोष की प्रसक्ति होगी । जीव का परिणाम देह के समान स्वीकार करने
में हस्ति के देह के तुल्य हस्ति के जीव का परिणाम और चैंटी के देह के समान चैंटी
का चैतन्य मानना होगा । इस प्रकार व्यवस्था में यह आपत्ति उपस्थित होती है कि
हस्ति का चेतन कर्मवश से चैंटी के देह में किस प्रकार से प्रवेश कर सकता है
और चींटी का चेतनका कर्मवश से हाथी के देह में प्रविष्ट होना असम्भव है । क्योंकि

हस्ति के शरीर में जीवात्मा हाथी के शरीर के समान है चींटी के देह में जीवात्मा चींटी के समान है अतएव मध्यम परिमाण वाद भ्रान्ति है। यदि जीव का परिमाण विभु कहा जाय तो भी यह आपत्ति उपस्थित होती है कि जीवात्मा की उत्क्रान्ति ( देह से निकलना ) और चन्द्रादिलोकों में गमन फिर उन लोकों से लौटकर इस लोक में आगमन यह वार्ता श्रुति द्वारा निर्णीत है जीव के विभु मानने में यह किस प्रकार से उपपन्न हो सकता है। क्योंकि विभु वस्तु का चलन नहीं हो सकता है वह सर्वत्र व्यापक है इससे विभु परिमाण भी जीव का कहना भ्रान्ति है अतएव जीवात्मा का अणु परिमाण श्रुति द्वारा सिद्ध है अणुर्ह्येष आत्मा चेतसा वेदितव्य इति। यह आत्मा अणु है। चित्त से जानने के योग्य है जो आत्मा पांच प्राणों का आश्रय है और पुण्य पापों से बँधा हुआ है। वालाग्रशतस्येति। बाल के अग्र के शतभाग (सौं टूक, उसके फिर शतभाग उसके भाग के समान परिमाण जीवात्माका है।

## वेदान्तरत्नमञ्जूषा

"उत्क्रान्तिगत्यागतीनाम्। नाणुरतच्छ्रुतेरितिचेन्नेराधिकारात् तद्गुण-सारत्वात्तद्व्यपदेशः प्राज्ञवत् इत्यादिन्यायाच्च।

## कुञ्चिका

एताः श्रुतयो जीवात्मानमणुपरिमाणकं गमयन्तीत्याशयः। एतेन स्वशब्दो-न्मानाभ्याञ्च इतिसूत्रार्थो विवृतः। उत्क्रान्त्यादिश्रुतिभिर्जीवानामणुत्वं प्रसाधितं तथाहि। उत्क्रान्तिस्तावत। "स यदा ऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति" गतिरपि ये वैकेचास्माल्लोकात् प्रयान्ति चाद्रमसमेव ते सर्वे गच्छन्ति। अगतिरपि तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मेण इति। आसां श्रवणादणुपरिमाणक एव प्रत्यगात्मा विभुत्वे तस्य चलनं नोपपद्येत इति भावः "स वा एष महानज आत्मा" "योयं विज्ञानमयः प्राणेषु" "आकाशवत्सर्वगतश्च नित्यः" "सत्यं ज्ञानमनन्तं ब्रह्म इति श्रुतयः सन्ति ताभिः श्रुतिभिः प्रत्यगात्मनोऽणुत्वं विप्रतिषिध्यते। अथ जीवो नाणुःकस्मात्। अतच्छ्रुतेः। अणुत्वविपरीतपरिमाणश्रवणात्। इतिचेन्न कस्मात् इतराधिकारात् उपक्रमेप्रस्तुताज्जीवादितरस्य" यथानुवित्तः प्रतिबुद्ध आत्मेति मध्ये प्रतिपाद्यस्य परमात्मनोऽधिकारादितिसूत्रार्थः यदिशारीराणां स्वरूपतोऽणुत्वमिष्यते।

तदा "नित्यं विभुं सर्वगतं सुसूक्ष्मं नित्यः सर्वगतः स्थाणुरित्यादिविभुत्वप्रतिपादकवचसां व्याकोपः प्रसज्येतेत्यत आह—तद्गुण इति। तुशब्दः शङ्कानिरासार्थः। विभुगुणसारत्वात् जीवस्य तद्व्यपदेशः। "नित्यविभुमित्यादिविभुत्वव्यपदेश उपपद्यते। प्राज्ञवदिति। यथा प्राज्ञस्य ब्रह्मणः बृहन्तो गुणा अस्मिन्निति ब्रह्मेति श्रुत्युक्ता निरुक्तिः। एवं प्रत्यगात्मनोऽपि विभुगुणत्वाद्विभुत्वव्यपदेशो न स्वरूपेणान्यथा पूर्वोदाहृतानि श्रुतिस्मृतिसूत्राणि वाध्येरन्निति सूत्रार्थः।

## भाषानुवाद

वह जीव मोक्ष के योग्य है। श्रीवेदव्यासजी ने भी जीव का परिमाण अणु माना है इस विषय में उन्हों का उत्क्रान्तिगत्यागतीनाम्। नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्। ये सूत्र प्रमाण हैं जीव अणु है जिससे एक देह से दूसरे देहान्तर में और स्वर्ग नरक में जाता है फिर वहाँ से लौटकर आता है यदि जीव को विभु माना जाय तो यह गमन और आगमन नहीं हो सकता है। प्रश्न। जीव को अणु नहीं कह सकते हो क्योंकि 'नित्यं विभुं सर्वगतमिति" इस श्रुति में जीवात्मा को विभु बतलाया है। उत्तर। इस विभुत्व बोधक श्रुति का विषय परमेश्वर है जीव नहीं है।

## वेदान्तरत्नमञ्जूषा

नन्वणुपरिमाणकस्य प्रत्यगात्मनो देहादिसूक्ष्मतमाल्पतरैकदेशस्थत्वेन मेर्वेकातिसूक्ष्मदेशस्थसर्षपस्येव सर्वशरीरानुसंन्धातृत्वप्रकाशकत्वतदवयववृत्तिसुखदुःखाद्यनुभवितृत्वादीनामसम्भवस्य दुर्वारत्वान्नाणुत्वोपपत्तिरिति चेन्न, धर्मिणोजीवात्मनोऽणुत्वेऽपि तदाश्रितधर्मभूतज्ञानस्य विभुत्वेन सर्वस्य सामञ्जस्यं स्यात्।

## कुञ्चिका

यदि प्रत्यगात्मनोऽणुत्वं स्यात्तदा तस्य शारीरैकदेशस्थत्वात् सकलशरीरवृत्तिसुखदुःखादीनामुपलब्धिर्नोपपद्येतेति शङ्कते—नन्विति। अणुपरिमाणकस्येति। अणुमात्रं परिमाणं यस्य सोऽणुपरिमाणगुणाश्रय इत्यर्थः। प्रत्यगात्मनोऽणुत्वात् मेरुगिरौ सर्षपस्येव देहातिसूक्ष्मतमाल्पदेशस्थितत्वात्सर्वशरीरावयववृत्ति दुःखानुन्धातृत्वं प्रकाशकत्वं च न स्यादित्यर्थः धर्मिस्वरूपस्यात्मनोऽविभुत्वेऽपि तद्धर्मभूतज्ञानस्य विभुत्वेन नोक्तदोषावकाश इत्याशयेनोक्तशङ्कां निरस्यति—नेति।

## भाषानुवाद

प्रश्न। यदि जीवात्मा का अणु परिमाण स्वीकार करोगे, तो जैसे समेरु पर्वत में सरसों का दाना एक देश में पड़ा रहता है तद्वत् देह के एक अल्पतर भाग में जीवात्मा रहता तो सर्व शरीर का अनुसन्धान और प्रकाश और कर चरण के सुखदु:ख को एक समय में अनुभव कैसे कर सकता है अतएव जीवात्मा को विभु कहना चाहिये अणु कहना नहीं चाहिये। इस प्रश्न का समाधान यह है कि धर्मी जीवात्मा अणु स्वरूप है। उसका धर्म भूत ज्ञान विभु है उससे सर्व देह का अनुसन्धान और प्रकाश और प्रत्येक अवयवगत सुख तथा दु:ख का अनुभव करता है।

## वेदान्तरत्नमञ्जूषा

'गुणाद्वालोकवत्' इति न्याय्यात्। "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारते" ति दृष्टान्तोपपत्तिसहकृतभगवद्वचनाच्च, एतेनैव विभुविषयकशास्त्रस्यापि नैराकाङ्क्ष्यं व्याख्यातम्। ननु बुद्ध्युपाधिकृतमेवेद श्रूयमाणमणुत्वं न वास्तवम्। बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट" इति श्रवणाद्विभुपरिमाणकत्वमात्मनोऽभ्युपगन्तव्यमिति चेत्, "अहो विवेकनैपुण्यं देवानां हितकारिणः। स्वहस्तेनैव स्वगृहदाहो नालोच्यते कथम्।" भवद्भिरुदाहृतश्रुतेरणुपरत्वेनास्मदिष्टत्वाद् युष्मदनिष्टत्वाच्च।

## कुञ्चिका

उक्तार्थे सूत्रकारस्य सम्मतिमाह--गुणाद्वेति वाशब्दो मानान्तरव्यावृत्त्यर्थः। आत्मा स्वगुणेन ज्ञानेन सकलदेहे व्याप्यावस्थितः। आलोकवत्। यथा मणिद्युमण्यादीनामेकदेशस्थितानामप्यालोकोऽनेकदेशव्यापी दृश्यते तद्वदात्मज्ञानमपीति सूत्रार्थः। उक्तार्थं सदृष्टान्तं श्रीभगवद्वचसा द्रढयति। यथेति। "अल्पदेशस्थात्पुष्पाद् गन्धस्याधिकदेशवृत्तित्ववत्" अधिकदेशवृत्तिज्ञानगुणेन सकलशरीरवृत्तित्वमात्मनो दर्शयति श्रुतिः, "स एष प्रविष्ट आलोमभ्य आनेखेभ्य" इति। तथा च सूत्रम्, 'व्यतिरेको गन्धवत्तथा हि दर्शयति। २। ३। २६॥' इत्यपि द्रष्टव्यम्। नित्यं विभुं सर्वगतं सुसूक्ष्ममित्यादि विभुत्वप्रतिपादकश्रुतिस्मृतिविरोध इत्यत आह, एतेनेति। आत्मनश्चैतन्यगुणेनैव

सकलदेहव्यापित्वरूपं विभुत्वं बोध्यते इति न तासां विरोध इत्यर्थः विभुधर्माश्रयाणां-तथात्वस्य शक्त्यैवावगमान्मुख्यत्वमेवेति भावः। बुद्ध्युपाधिकृतमस्य जीवत्वमिति बुद्धेरन्तःकरणस्याणुतया सोऽप्यणुव्यपदेशभाग्भवति न स्वतोऽणुत्वं शारीरस्येत्याशङ्कते, नन्वित्यादिना। तोत्र प्रौता यः शालाकाग्रम्—आराग्रम्' तस्मादुद्धृता मात्रा मानं यस्य स जीवः तथेत्यर्थः। उक्तवाक्यस्याणुपरत्वेनास्मत्पक्षपातित्वमहो विवेककौशल्यं देवानां हितकारिणः, स्वहस्तेनैव स्वभवनं दह्यत इत्युपहसन्नाह, अहो इति।

## भाषानुवाद

अपने गुण से ही सर्व देह में प्रकाशादि करता है जैसे दीपक इस विषय में गुणाद्वाऽऽलोकवत् यह व्यास सूत्र प्रमाण है। जैसे एक ही सूर्य अकाश के एक देश में रहकर सर्व लोक को प्रकाश करता है वैसे सब क्षेत्रों को क्षेत्री जीवात्मा भी प्रकाश करता है यह वार्त्ता श्रीमद्भगवद्गीता यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथाकृत्स्नं प्रकाशयति भारत। इस वचन से प्रसिद्ध है। जीव का ज्ञान विभु होने से जीव को विभु कहा जाता है। प्रश्न। अणु रूप बुद्धि उपाधि से आवृत जीवात्मा है अतएव जीव को अणु कहते हैं वास्तव में जीवात्मा विभु है यह वार्ता श्रुति के द्वारा निश्चित है।

## वेदान्त रत्न मञ्जूषा

**तथाहि बुद्धेः परिमाणलक्षणेन गुणेन तथैवात्मपरिमाणलक्षणेन गुणेन चोभयथाऽप्यवरः प्रत्यगात्माऽणुपरिमाणको दृष्टः सूक्ष्मदर्शिभिरेकाग्रमनस्कैः'। अवधारणेनान्योऽन्ययोगव्यवच्छेदपरेण मध्यमविभुपक्षौ निरस्येते। न मध्यम-परिमाणको विभुपरिमाणको वा, किन्त्वाराग्रमात्रोपलक्षिताणुमात्रमेत्यवधारणार्थः। यत्तूक्तं विभुरेवात्मेति तत्तुच्छम्। तथाहि विभुत्वे बहुत्वमेकत्वं वा प्रत्यगात्मन इति विवेचनीयम्। नाद्यः, तत्र मनसोऽणुत्वे विभुत्वे वा सर्वेषामपि विभूनां प्रत्यगात्मनां सर्वमूर्त्तद्रव्यसंयोगित्वाविशेषात्सर्वैर्मनोभिः सह नित्यसंयुक्ततया सर्वान्तरवृत्तिज्ञातृत्वापत्तेः अतएव ब्रह्मण्यतिप्रसङ्गाच्च।**

## कुञ्चिका

युष्मदनिष्टत्वमस्मदिष्टत्वञ्च विवृणोति, तथा हीति। 'बुद्धेर्गुणेने' ति श्रुत्यर्थ-

माह, बुद्धेरिति श्रुतिस्थमेवकरं व्याचष्टे अवधारणेनेति फलितार्थमाह, न मध्यमपरिमाणक। इति। प्रत्यगात्मनो विभुत्वपक्षं निरसितुमाह, यत्तूक्तमिति । प्रत्यगात्मनो विभुत्वपक्षे नानात्वमेकत्वञ्चेति विकल्पयति—विभुत्व इति। मनसोऽणुत्वाभिधानं तार्किकमतमभिप्रेत्य मीमांसकमतमनुसृत्याह—विभुत्व इति प्रत्यगात्मनां नानात्वं विभुत्वमिति मतमभिप्रेत्य तावद्दूषयति, नाद्य इति। सर्वजीवनिकायवृत्तिसुखदु:खवेदनानुभवः सर्वेषां प्रत्यगात्मनां प्रसज्येत विभुत्वाविशेषात्। तथा च चैत्रचरणप्रविष्टकण्टकादिजन्यदु:खानुभवकाले सर्वेषामप्यात्मनां विभुत्वेन तत्र सत्त्वाद् वेदनानुभवः स्यादित्याह–सर्वेषामिति। न च यस्य शरीरे कण्टकवेदना जायते तस्यैव वेदनानुभवो नान्येषामिति वाच्यम्। 'सर्वेषां विभूनां शारीराणां सान्निध्याविशेषे एकस्यैवानुभवो नान्येषाम्' इति नियन्तुमशक्यत्वात्। निरुक्तविशेषणघटितविभुत्वं यदि प्रत्यगात्मनो लक्षणं तदा प्रागुक्तज्ञानाश्रयत्वादिघटितविभुत्वस्य परमात्मन्यपि सत्त्वात् तत्र प्रत्यगात्मनो लक्षणस्यातिव्याप्तिरित्याह—अतएवेति। प्रत्यगात्मनोऽणुत्वं विहाय विभुत्वकल्पनादेवेत्यर्थः।

## भाषानुवाद

यथाबुद्धिर्गुणेनात्मगुणेन चैवह्याराग्रमात्रो ह्यवरोऽपि दृष्टः इति। उत्तर। उक्त श्रुति का अर्थ यह है कि बुद्धि के परिमाण गुण से और जीवात्मा के स्वरूप परिमाण से परमेश्वर से अपकृष्ट जीवात्मा है क्योंकि सूक्ष्म दृष्टि वालों ने आराग्रमात्रोपलक्षित अणु परिमाण जीवका देखा है। जीवात्मा का विभु परिमाण नहीं है यह उपदर्शित श्रुति में एवकार का अर्थ है। इससे यह साबित हो चुका कि जीवात्मा का परिमाण अणु है मध्यम और विभु परिमाण जीव का नहीं है। नैयायिक और मीमांसक साङ्ख्यमतानुयायि और मायावादी यह सब जीवात्मा को विभु मानते हैं और मन उपाधि को तार्किक अणु कहते है और मीमांसक मन को विभु मानते है और मायावादी आत्मा एक है और विभु है उपाधि को अणु मानते हैं यहाँ पर यह प्रश्न होता है कि जो आत्मा को विभु मानते है उन्हीं के मत में उपाधि अणु हो या विभु हो परन्तु सर्व विभु जीवों का सबों के मन के सङ्ग नित्य सम्बन्ध है इससे सर्व जीवों को बाह्य और आभ्यन्तर सुख दु:ख का अनुभव होना चाहिये और जीव को विभुत्व मानने पर ब्रह्म में अति व्याप्ति प्रसङ्ग होता है।

## वेदान्तरत्न मञ्जूषा

अहं त्वमयमिति प्रत्ययानां विनिगमनाविरहेण विभागाभावापत्तेश्च। आत्मत्वेन मनः संयोगत्वेन च विशेषाभावात्। न चात्मत्वसाम्येऽपि तत्तत्कर्म-तज्जन्यसंस्कारविशिष्टमनोवैलक्षण्यादीनां परस्परभिन्नत्वेन नियामकानां सत्त्वान्नोक्तदोषावकाश इति वाच्यम्। तत्तत्कर्मादृष्टादीनामपि नियामकत्वेनाभ्युपेतानां परस्परभिन्नानामपि सर्वैष्वात्मसम्बन्धाविशेषात्। तत्राप्यन्य कल्पनेऽनवस्थापत्तेश्च। न द्वितीयः, तत्राप्येकस्य विभोरात्मनः सर्वैरन्तःकरणरूपोपाधिभिरवच्छिन्नत्वात् सर्वेषामुपहितानां सर्वज्ञातृत्वं समानम्।

## कुञ्चिका

प्रत्यगात्मनामेकत्वमिति मतमवलम्ब्य दूषयति, 'अहंत्वमिति'। युष्मदस्मत्प्रत्ययविभाजकरूपाभावात् तेषां प्रत्ययानां विभागोऽनुपपन्न इत्यर्थः। युष्मदस्मदर्थपदवाच्यानां नामपदवाच्यानां च व्यक्तीनामात्मत्वेनैक्यात्तद्विभागोऽनुपपन्न इत्याह—आत्मत्वेनेति। ननु मनः संयोगेनाहं त्वमयं प्रत्ययानां व्यवस्थोपपद्यत एवेत्यत आह—मनः संयोगत्वेनेति। मनःसंयोगानां मनः संयोगत्वेनैक्याद्व्यवस्था दुर्वारैवेत्यर्थः। आत्मत्वेन साम्येपि स्वीयस्वीयकर्मतज्जन्यसंस्कारविशिष्टतत्तन्मनोयुक्ताः शारीराः स्वीयसुखःदुखानुभूतये तत्तन्मनसामितरेतरभिन्नानां भेदनियामकत्वेन सुखाद्यनुभवसाङ्कर्याभावाद् व्यवस्थायाः सामञ्जस्यं तथा च यदात्मादृष्टकृतो यो मनः संयोगः स तदात्मन एव सुखादिहेतुरित्याशङ्क्य परिहरति, न चेति। नियामकत्वेन कल्पितैस्तत्कर्मादृष्टैः सर्वेषां जीवात्मनां सम्बन्धस्य साम्यात्सर्वज्ञातृत्वप्रसङ्गो दुर्निवार अदृष्टस्यापि सर्वात्मसाधारणत्वात्, इत्यर्थः। तत्कर्मजन्यादृष्टस्यात्मना सह समवायात्मक एव सम्बन्धः त्वयाऽभ्युपेयते स च सम्बन्ध एको वा नाना वा? आद्ये, सर्वज्ञातृत्वप्रसक्तिदुर्वारा एव। समवायस्याप्यन्यसम्बन्धस्तस्याप्यन्यसम्बन्धः कल्पयितव्य इत्यनवस्था प्रसज्येत इत्याह—तत्राप्यन्य कल्पनेति। स्यादेतन्ममत्वामात्मनाञ्चविभुत्वबहुत्वयोगे उक्तदोषयोगो नैकत्वविभुत्वयोगे इत्यत आह—न द्वितीय इति। तत्रापीति। एक एव विभुरात्माऽनेकान्तःकरणोपाधिरवच्छिन्नो घटाकाशवच्छिन्नतया भातीति पक्षेऽपीत्यर्थः अन्तःकरणोपाधीनामेकस्यात्मनश्च विभुत्वात् तस्य सर्वैरन्तःकरणोपाधिभिरवच्छिन्नतया सर्वेषामुपहितानां रारीराणां सर्वज्ञातृत्वप्रसक्तिदुर्वारेत्याह—एकस्येति।

## भाषानुवाद

और मैं यह तू यह प्रतीति भी नहीं हो सकती हैं क्योंकि आत्मत्वधर्म सबों में में एक है सबों का मन संयोग भी एक है। वादी इस शङ्का का सामाधान इस प्रकार करता है कि यद्यपि आत्मत्व धर्म से सब आत्मा एक है परन्तु उन्हों के कर्म और अदृष्ट ( धर्म अधर्म ) पृथक् पृथक् है इससे सबों का भेद है अतएव मैं तू यह प्रतीति सिद्ध हो सकती है। उत्तर। प्राणियों के कर्म और अदृष्ट पृथक् पृथक् मानने पर भी उन्हों के कर्म और अदृष्टों का सम्बन्ध सब जीवों के साथ आवश्यक है इससे सुख दुःख का सांकर्य दोष है। प्राणियों के कर्म जन्य अदृष्ट का आत्मा के साथ समवाय सम्बन्ध कहोगे तो वह समवाय एक है या नाना है यदि एक समवाय है तो सब के सुख दुःख का अनुसन्धान सब को होना चाहिए। यदि समवाय को नाना कहोंगे तो समवाय का भी दूसरा समवाय मानना पड़ेगा उसका अन्य समवाय स्वीकार करने से अनवस्था दोष की प्रसक्ती होगी। एक ही आत्मा विभु है नाना अन्तःकरण रूप उपाधियों से युक्त होने से घटाकाशवत् पृथक् पृथक् मालूम होते हैं इस मत में भी आत्मा विभु है सर्व अन्तःकरण रूप उपाधियों का सम्बन्ध आत्मा के साथ है तो सुख दुःख का सांकर्य दोष का निवारण नहीं कर सकते हो।

## वेदान्तरत्नमञ्जूषा

अन्यथा स्वस्यैकस्मिन्देशे वर्त्तमानानामन्तःकरणानां सम्बन्धेन तत्कृतदुःखाद्यनुभवत्वाभ्युपगमे देवदत्तस्य स्वशिरः पादाद्यवयववृत्तिवेदनानुसन्धानाभानप्रसङ्गात्। अनुसन्धातुर्देहवज्जडत्वापत्तेः। ज्ञातृत्वादेरुपाधिधर्मत्वाभ्युपगमात्। उपाधेश्चेतनत्वापत्तेश्च। उपाधेश्चाणुत्वस्वीकारेण शिरः पाण्याद्यवयवैर्युगपत्सम्बन्धतया तद्गतसुखादीनां युगपदनुसन्धानापत्तेश्च। उपाधेर्मध्यमपरिमाणाङ्गीकारे तदवच्छिन्नस्यापि तथात्वापत्त्या बौद्धपक्षस्वीकारापत्तेश्च। उपाध्यणुत्वनिरूपितजीवात्माणुत्वप्रतिपादितसिद्धान्तभङ्गाच्चोक्तेभ्यो हेतुभ्यो महापापीयानयम्पक्षः। उक्तसिद्धान्तस्यैव श्रौतत्वाद्वरीयस्त्वम्।

## कुञ्चिका

बाधकतर्कमुपन्यस्यति, अन्यथेति। विभोरात्मनः सर्वान्तःकरणोपाधिभिरवच्छेदानभ्युपगम इत्यर्थः। 'यद्येवं नाभ्युपेयते तदा किमभ्युपेयसे' इत्यत आह—स्वस्यैवेति।

'स्वस्य' आत्मनः। तत्कृतेति अन्तःकरणकृतेत्यर्थः। आत्मनो यस्मिन्प्रदेशे बुद्धेरन्तःकरणस्य सम्बन्धः तत्प्रदेशावच्छेदेन बुद्धेरेव सुखदुःखानुभवकर्तृत्वस्वीकार इत्यर्थः। बुद्ध्युपाधेरनुसन्धातृत्वे देवदत्तस्य स्वावयववृत्तिवेदनानुसन्धानं न स्यादित्याह—देवदत्तस्येति। यद्यात्मनोऽननुसन्धातृत्वं स्यात्तदा तस्य जडत्वं स्यादित्याह—अननुसन्धातुरिति। आत्मा जडोऽननुसन्धातृत्वाद्देहवदिति प्रयोगः। बुद्धिरूपोपाधेश्चैतन्यं स्यादित्याह—ज्ञातृत्वादेरिति। यद्युपाधेरणुत्वमभ्युपेयते तदा न तस्य सर्वैश्शारीरावयवैः युगपत्सम्बन्धोऽस्ति तथा च शिरः पाण्याद्यवयववृत्तिसुखदुःखाद्यनुसन्धानं युगपन्नोपपद्येत इत्युपाधेर्विभुत्वपक्षं निरस्य सम्प्रति तस्याणुत्वपक्षमपाकरोति। उपाधेश्चेति। तद्गत इति। शिरः पाण्यादिगतेत्यर्थः। यद्युपाधेर्मध्यमपरिमाणत्वमुररीक्रियते तदा मध्यमपरिमाणवतोऽसर्वगतस्य परिच्छिन्नस्यात्मनो घटादिवदनित्यत्वम्प्रसज्येत। उपलब्धुरात्मनः क्षणिकत्वात् स्मरणं नोपपद्यत इति बौद्धपक्षोक्ता दोषाः प्रसज्येरन्नित्याह—उपाधेरिति। 'तदवच्छिन्नस्य' मध्यमपरिमाणावच्छिन्नस्य 'तथात्वापत्त्या' अनित्यत्वापत्त्या। मध्यमपरिमाणत्वपक्षे दोषान्तरमाह—उपाध्यणुत्वेति 'तद्गुणसारत्वात्तु तद्व्यपदेशः।' इति सूत्रस्य तव भाष्ये बुद्धिपरिमाणेनैव प्रत्यगात्मनोऽणुत्वपरिमाणव्यपदेश इत्युक्तिर्मध्यमपरिमाणत्वपक्षे विरुद्ध्येतेत्यर्थः प्रत्यगात्मनां विभुत्ववादो निर्युक्तिकत्वादश्रद्धेयः पापीयानित्याह उक्तेभ्य इति। उक्तेति। प्रत्यगात्मनोऽणुत्वसिद्धान्तस्येत्यर्थः।

## भाषानुवाद

यदि उपाधि को अणु माना जाय तो उसका सम्बन्ध शरीर के एक देश में मानना होगा जिस शरीर के अवयव के सङ्ग अन्तःकरण उपाधि का सम्बन्ध है उस अवयव गत सुख तथा दुःख का अनुसन्धान वह कर सकता है परन्तु देह के जिस प्रदेश में अन्तःकरण का सम्बन्ध नहीं है उस प्रदेश के सुख और दुःख का अनुभव नहीं होना चाहिए। यदि उपाधि का मध्यम परिमाण स्वीकार करोगे तो उपाध्यवच्छिन्न जीव का भी मध्यम परिमाण मानना होगा तथा सति मध्यम परिमाणघटवत् जीव को अनित्यत्वापत्ति दोष होगा और बौद्ध मत में जो दोषों की प्रसक्ती है उन सब दोष स्वीकार करने होंगे उसके मत में आत्मा क्षणिक है फिर स्मरण किस तरह से हो सकता है। यदि उपाधि का मध्यम परिमाण मानोंगे तो सूत्रकार के सङ्ग आपका विरोध होगा। क्योंकि सूत्रकार ने मन को अणु स्वीकार किया है और श्रीशंकराचार्य्यजी ने इस प्रकार कहा

है कि "तद्गुण सारत्वात्तद्व्यपदेश:" इस सूत्र के भाष्य में बुद्धि के अणु परिमाण से ही जीव का अणु परिमाण माना गया है मध्यम परिमाण पक्ष में उन्हों का कहना सर्वथा असंगत होगा। प्राक् उपदिष्ट पक्षों में दोष है। इसीसे जीव का अणु परिमाण है अतः श्रुतियों से प्रमाणित पक्ष ही आदरणीय है।

## वेदान्तरत्न मञ्जूषा

स्यादेतत्। तथाऽप्यणुत्वे निरवयवत्वस्यावश्यम्भावात् यथात्वे चेश्वरस्य तत्र व्याप्त्यसम्भवेनान्तर्यामित्वभङ्गप्रसङ्गादिति चेन्न तुच्छतरत्वाच्छङ्कायाः जीवस्य निरवयत्वाणुत्वयोः सतोरपि परस्य व्यापनशीलत्वेनैव सर्वत्र व्यापकत्वात्, तथाहि नहि नियन्तृनियम्यभावे व्याप्यव्यापकभावे वा सावयवत्वनिरवयत्वयोः सतोरपि परस्य व्यापनशीलत्वेनैव सर्वत्र व्यापकत्वात् तथाहि, 'नहि नियन्तृनियम्यभावे व्याप्यव्यापकभावे वा सावयवत्वनिरवयवत्वयोः प्रयोजकत्वम्'। तथात्वे कालशब्दस्पर्शादीनां निरवयवाणां नियम्यत्वाभावप्रसङ्गात्। किन्तु, वस्तुगतव्याप्यव्यापकताशक्तिरेव नियामिका। एवञ्च सर्वगतस्य नियन्तुः सर्वव्यापनशक्तिमत्त्वात् सर्वमनवद्यमिति कृतं विस्तरेण। एवमेतैर्विशेषणैर्नित्यमुक्तादीनां साधारणलक्षणोक्त्या स्वरूपगुणपरिमाणानि निरूपितानि।

## कुञ्चिका

'श्रौतत्वादिति'। 'अणुरेष आत्मा चेतसा वेदितव्यः,' बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः बालाग्रशतभागस्य शतधाकल्पितस्य चेति श्रुतिभिर्जीवस्याणुत्वसिद्धिर्निष्प्रत्यूहत्वादित्यर्थः स्यादेतदिति। जीवस्याणुत्वं स्यादित्यर्थः। निरवयवे प्रत्यगात्मन्यणौ परमात्मनो व्याप्तिर्न घटते। तथा सति तस्य जीवान्तर्यामित्वभङ्गापत्तिरित्याह—तथाऽपीति। भवतु तावज्जीवस्याणुत्वं निरवयवत्वञ्च विभोः परमात्मनः सर्वत्रव्यापकत्वादुपपद्यते जीवान्तर्यामित्वं तस्येति प्रागुक्तां शङ्कां परिहरति, नेति। अथ कस्मादुच्यते महाविष्णुरिति यस्मात्सर्वांल्लोकान्सर्वान्देवान्सर्वात्मनः सर्वभूतानि व्याप्नोति। स्नेहो यथा पिण्ड ओतप्रोतमनुव्याप्तमिति प्रश्नोत्तराभ्यां निर्णीतं श्रुतिभिः। सावयवा एव व्यक्तयो भगवता नियम्यन्ते न तु निरवयवा इति नियमो न हि, तथा सति कालशब्दस्पर्शादयो निरवयवाः परमात्मनो नियम्याः न स्युरित्याह—तथा हीत्यादिना। तथात्व इति। सावयवानां नियम्यत्व इत्यर्थः। तर्हि किं नियामकमित्यत

आह—किन्त्विति । एवञ्च = वस्तुवृत्तिव्याप्यत्वव्यापकत्वनिमित्तभूतशक्तेरेव प्रयोजकत्व इत्यर्थः । सर्वगतस्य परमात्मनः सर्वव्यापकता शक्तियोगश्रवणात्प्रत्यगात्मनामणुत्वसिद्धान्ते जीवान्तर्यामित्वं नानुपपन्नमित्यर्थः । चेतनस्वरूपत्वज्ञातृत्वकर्तृत्वाहमर्थत्वपुरुषोत्तमायत्तस्वरूपस्थितिप्रवृत्तिकत्वाणुत्वरूपैर्विशेषणैर्नित्यमुक्तानां प्रत्यगात्मनां साधारणलक्षणमुक्तं भवतीति फलितार्थं विवृण्वन्नाह—एवमिति । स्वरूपमिति । ज्ञानस्वरूपमित्यनेन प्रत्यगात्मनां स्वरूपं निरूपितं चकारेणाहमर्थत्वं ज्ञातृत्वकर्तृत्वपुरुषोत्तमनियम्यत्वात्मकाः प्रत्यगात्मनो गुणाश्च 'ज्ञातृत्ववन्तं हरेरधीनं' इति पदाभ्यां निरूपिता भवन्ति । अणुं हीत्यनेन प्रत्यगात्मनामणुपरिमाणत्वमुक्तम्भवतीत्यर्थः ।

## भाषानुवाद

जीवात्मा को अणु मानने पर यह प्रश्न उपस्थित होता है कि जब सिद्धान्ती आत्मा को अणु बतलाते हैं तब उसे जीव को निरवयव भी कहना अवश्य होगा निरवयव जीव के अन्दर परमात्मा की व्याप्ति नहीं बन सकती है तब बतलाइये परमात्मा विभु ( व्यापक ) कैसे बन सकता है । समाधान । जीव को अणुत्व और निरवयवत्व होने पर भी परमात्मा का व्यापन शील एक स्वाभाविक धर्म है उससे परमात्मा सर्वत्र व्यापक है ईश्वर नियन्ता और व्यापक है जीव नियम्य और व्याप्य है इस नियन्तृ नियम्य भाव और व्याप्य व्यापक भाव में सावयवत्व और निरवयवत्व प्रयोजक नहीं है । यदि सावयवत्व और निरवयत्व को जो प्रयोजक मानोगे तो काल शब्द स्पर्शरूपादिक निरवयव है ये सब परमात्मा से नियम्य नहीं होने चाहिए । इससे यह सिद्ध हो चुका कि वस्तुगत व्यापकता शक्ति ही व्याप्य व्यापक भाव और नियन्तृ नियम्य भाव में नियामक है । सर्वगत और सर्व का नियन्ता परमात्मा है क्योंकि उसमें सर्व व्यापन शक्ति विद्यमान है यहाँ तक नित्यमुक्त जीवों का लक्षण प्रदर्शन किया ।

## वेदान्तरत्न मञ्जूषा

इदानीं बद्धानां विशेषमाह । शरीरसंयोगवियोगयोग्यमिति । अत्र शरीरशब्दस्तत्कारणभूतानादिकर्मात्मिकाऽविद्योपलक्षणार्थः । कार्यकारणयोरभेदात् । अनादिकर्मरूपाविद्याऽवच्छेदलक्षणबन्धार्हत्वे सति तन्निवृत्तिपूर्वकभगवद्भावापत्तिलक्षणमोक्षार्हमिति यावत् । तथा हि अनादिकर्मात्मिकाऽविद्यावच्छिन्नो देवतिर्यङ्मनुष्यादिदेहरूपं संसारचक्रमनुभवन् श्रीभगवन्निर्हेतुककृपा-

कटाक्षावलोकित आचार्य देवो भूत्वा तन्मुखनिर्झरितसच्छास्त्रसुधाप्लावित-संशयादिरोगो भगवत्स्वरूपादिविषयकध्यानसन्ततिपरिपाकलब्धसाक्षात्कारनिरस्तकर्मबन्धो भगवद्भावापत्तिलक्षणमोक्षभाग्भवतीति वाक्यार्थः।

"यमेवैष वृणुते तेन लभ्यः। तमक्रतुम्पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि"

## कुञ्चिका

सम्प्रति नित्यमुक्तेभ्यः बद्धानां शारीराणां वैलक्षण्यं दर्शयति, इदानीमिति देहकारणीभूतानादिकर्मात्मिकामविद्यां शरीरपदमुपलक्षयतीत्याह—अत्रेति। परन्नमूलेत्यर्थः। उपलक्षणत्वं नाम स्वबोधकत्वे सति स्वेतरबोधकत्वम्। कथमत्र शरीरपदेन तत्कारणीभूतानादिकर्मात्मिकाऽविद्याया बोध इत्यत आह—कार्येति। कार्यवाचकेन शरीरपदेन तत्कारणीभूताया अनादिकर्मात्मिकाऽविद्याया बोधो भवत्येव। तयोरभेदात्, स च 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति सूत्रेण समर्थितः। शरीरेत्यस्य पर्यवसितार्थमाह—अनादीति। उक्तार्थं स्पष्टयति, तथाहीत्यादिना। उक्तार्थं श्रुतिप्रमाणेन द्रढयति। 'यमेवैष वृणुत' इति, "तस्यैष आत्मा विवृणुते तनुं स्वामिति" अस्याश्श्रुतेः शेषभागः। अस्यार्थः—एष आत्मा यं साधकम्प्रार्थयते तेन लभ्यः प्रार्थनीयपुंसा लभ्य इत्यर्थः। तत्प्रार्थनीयत्वञ्च तत्प्रियतमस्यैव पुंसः। प्रियतमत्वञ्च तत्प्रीतिमेव। ततश्च भगवद्विषयिण्युपासकस्य प्रीतिर्भगवत उपासके प्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवति। तस्योपासकस्यैष आत्मा परमात्मा स्वरूपं प्रकाशयति। स्वात्मानम्प्रयच्छतीति। तं तादृशम्परमात्मानमक्रतुः काम्यकर्मादिरहितो धातुधारकस्य परमात्मनः प्रसादादात्मनो महिमानं महत्वसम्पादकं स्वसार्वज्ञ्यादिगुणाविर्भावहेतुभूतं परमात्मानं यदा पश्यति तदा वीतशोको भवतीति श्रुत्यर्थः। तस्मिन्ब्रह्मणि दर्शनगोचरे सति हृदयग्रन्थिः स्थूलसूक्ष्मरूप प्रकृतिसम्बन्धो भिद्यते ध्वंसम्प्राप्नोति। तत्कार्यभूताः सर्वे संशयाः स्वपरेतरतत्त्वविषयकाश्छिद्यन्ते। अस्य ब्रह्मसाक्षात्कारवतः कर्माणि क्षीयन्ते, कर्मभिर्मुच्यते।

## भाषानुवाद

अब बद्ध जीवों की विशेषता दिखलाते हैं। शरीर संयोग वियोग योग्यमिति। बद्ध जीवों का शरीर के संग संयोग और वियोग होता है। यहाँ शरीर पद से शरीर का

कारण अनादि कर्मात्मिक अविद्या का ग्रहण है क्योंकि कार्य और कारण का अभेद है। "अनादि कर्म रूपाऽविद्यावच्छेद लक्षण बन्धार्हत्वेसति तन्निवृत्ति पूर्वक भगवद्भावापत्ति लक्षण मोक्षार्हत्वं" यह बद्ध जीवों का लक्षण है। अनादि कर्म रूप अविद्या से जीव का वास्तविक रूप आवृत है इसी से जीव बद्ध कहलाता है और अविद्या निवृत्ति पूर्वक भगवद्भावापत्ति रूप मोक्ष के योग्य बद्ध जीव है। भाव यह है कि अनादि कर्मों के बन्धनों से यन्त्रित जीव मनुष्य और पशु प्रभृति अनेक योनियों में परिभ्रमण कर रहा है और योनियों में सुख दुःख भोग का अनुभव भी करता है। जब इस पर भगवान् की निर्हेतुक कृपा होती है तब यह जीव श्रीगुरुदेव के सन्मुख होता है श्रीगुरुदेव इसके पांचो संस्कार कर भगवान् के शरण कर देते हैं जब श्रीगुरुदेवजी ने जीव को अर्थ पंच का उपदेश किया अर्थात् १जीव और २भगवान का स्वरूप और ३भगवत्कृपा का फल मोक्ष। ४भक्तिरस और ५भगवान् की प्राप्ति का प्रतिबन्धक रूप यह पाँच अर्थ उपदिष्ट किये इस उपदेश रूप मधु को पान कर जीव के संशय रूप रोग का नाश हुआ पश्चात् आचार्योपदिष्ट पद्धति के अनुसार भगवान् के दिव्य मङ्गल विग्रह के माधुर्य और तद्गुणों का अनवरत स्मरण करने लगा फिर जीव को भगवान् का साक्षात्कार होने पर समस्त बन्धनों से छूट कर भगवद्भावापत्ति रूप मोक्ष का भागी होता है "यमे वेष वृणुते तेन लभ्यः तमक्रतुं पश्यति वीत शोको धातु प्रसादान्महिमानमीशमिति"। उक्त अर्थ इन श्रुतियों से सावित होते हैं। परमात्मा जिस जीव को स्वीकार करता है वह पुरुष भगवान् को प्राप्त होता है। वीत शोक होकर ईश्वर की कृपा से परमात्मा की महिमा और ईश्वर को देखता है। परमात्मा के दर्शन होने पर इस जीव के संचित क्रियमाण और प्रारब्ध यह तीनों कर्म नष्ट होजाते हैं। उस समय पुण्य और पाप को छोड़ कर माया से निर्मुक्त हो भगवान की परम समता को प्राप्त होता है।

## वेदान्त रत्न मञ्जूषा

तस्मिन्दृष्टे परावरे। यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति।" इत्यादिश्रुतिभ्यः। 'मत्प्रसादादवाप्नोति शाश्वतम्पदमव्यय' मित्यादि भगवदुक्तेश्च।

ननु श्रीपुरुषोत्तमानुग्रहः परिच्छिन्नो विभुर्वा? नाद्यः, जीवानुग्रहवद-प्रयोजकतयाऽकिञ्चित्करत्वात्, कालादिपरिच्छेदेनानित्यत्वाच्च। नहि द्वितीयः,

सर्वत्र व्याप्त्या सर्वगोक्षप्रसङ्गात् । तत्साधनतत्प्रतिपादक शास्त्रस्य वैयर्थ्यापत्ते-श्चेतिचेन्न ।

## कुञ्चिका

तस्मिन्निति। तच्छब्दार्थं विवृण्वंस्तत्स्वरूपमाह—परावर इति । परे चिदचि-द्वर्गा अवरे यस्मात्तस्मिन्पुरुषोत्तम इति यावत् । "प्रधानक्षेत्रज्ञपतिर्गुणेश" इति श्रुतेः । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । इति भगवदुक्तेश्चेति श्रुत्यर्थः । यदा पश्यः द्रष्टा पुरुषं पश्यते तदा पुण्यपापे विधूय साम्यमुपैतीत्यन्वयः । 'निरञ्जनः' पुण्यादिलक्षणाञ्जनस्य विनष्टत्वात् । पुरुषं विशिनष्टि—रुक्मवर्णमिति प्रकाशात्मकं वर्णरूपं यस्य तमादित्यवर्णं तमसः परस्तादिति वाक्यान्तरात् अनेन नीरूपस्य ब्रह्मणो दर्शनं मोक्षहेतुरिति मन्यमानो निरस्तः । जीवेऽति प्रसक्तिं वार-यन्नाह – कर्त्तारमिति विश्वस्येति शेषः । चतुर्मुखस्यापि विश्वकर्तृत्वेशत्वयोः सत्त्वाद्-तद्व्यावृत्त्यर्थमाह–ब्रह्मयोनिमिति । चतुर्मुखस्यापि कारणम् । 'यो ब्रह्माणं विदधाति पूर्व मिति' श्रुतेः । यद्वा वेदस्यापि विधिद्वारेणेशनशीलत्वाज्जगन्निमित्तत्वाच्च, तत्रातिव्याप्ति-वारणायाह—'ब्रह्मयोनिम्' वेदस्यापि कारण मित्यर्थः । साम्यं विशिनष्टि—परममिति । स्वरूपेण सार्वज्ञ्यादिगुणेन च साम्यात्परमत्वमिति श्रुत्यर्थः । श्रीमुखवचनमुदाहरति—मत्प्रसादादिति । तस्मात् अनादिकर्मरूपाविद्यावच्छेदलक्षणबन्धार्हत्वे सति तन्निवृत्तिपूर्वक-भगवद्भावापत्तिलक्षणमोक्षार्हमिति साधूक्तम् । भगवदीयोऽग्रहः परिच्छिन्नः सर्वगतोवेति-पृच्छति, नन्विति । अस्मदीयानुग्रहवद् निष्प्रयोजनकं वस्तुतः देशतः कालतः तस्य परिच्छिन्नत्वेनानित्यत्वं स्यादित्याद्यपक्षं निरस्यति, नाद्य इति । भगवदनुग्रहस्य विभुत्वे सर्वेषां प्रत्यगात्मनां मोक्षं तत्साधनश्रवणमनननिदिध्यासनादिप्रतिपादकशास्त्राणां वैयर्थ्यं च प्रसज्येत इति द्वितीयपक्षं व्युदस्यति, नापीति । न तावद्वस्तुसद्भावमात्रं मोक्षस्या-साधारणं हेतुरपि तु तद्विषयी भाव, एवञ्च भगवदनुग्रहस्य व्यापकत्वेऽपि तद्विषयीभूतस्यैव बन्धनिवृत्तिर्नान्यस्येति परिहरति, नेति ।

## भाषानुवाद

प्रश्न ! भगवान् की कृपा परिच्छिन्न है अथवा व्यापक है । अर्थात किसी एक जीव व्यक्ति पर है या सब जीवों पर है पहिलापक्ष नहीं कह सकते हैं क्योंकि जैसे जीव की कृपा एक व्यक्ति पर है उसके समान भगवान की कृपा है । उससे कोई भी कार्य

नहीं हो सकता है किसी काल में किसी व्यक्ति पर भगवत्कृपा हुई तो वह काल से परिच्छिन्न होने से अनित्य हो जायेंगी। द्वितीय पक्ष में भगवान् की कृपा सब पर है तो सबों का मोक्ष होना चाहिए। और मोक्ष के साधनों को बतलाने वाले शास्त्र निरर्थक हो जायेंगे।

## वेदान्तरत्नमञ्जूषा

व्यापकस्यापि तस्य श्रवणादिसाधनसम्पन्ने आचार्यदेवभक्तिसम्पृक्त एवाविर्भावो नान्यत्र। यथा न्यायपक्षे व्यापकस्यापि गोत्वादेः सास्नादिमत्येव सम्बन्धो नान्यत्र। यथा चौपनिषदानां सिद्धान्ते ब्रह्मस्वरूपस्य विश्वात्मनः "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इति वचनात् सर्वत्र व्याप्त्याऽपि क्वचिदेव तदधिकारिविशेष आसन्नमोक्षके तत्साक्षात्कारो नान्यत्र, तद्वत्। एतेनैव सर्वेषामपि भगवदीयगुणानां स्वरूपवद्व्यापकत्वं मोक्षादिदानहेतुत्वञ्चोक्तम्भवति। स्वाभाविकत्वंचोक्तम्भवति, अतोन सर्वमोक्षप्रसङ्गदोषोत्थानावकाशः। नापि साधनादिवैयर्थ्यापत्तिः। 'स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतेः। एतच्चाग्रे निपुणं वक्ष्यामः। अथ सङ्ख्याविवादं निराकरोति, प्रतिदेहभिन्नमिति।

## कुञ्चिका

'तस्य' पुरुषोत्तमानुग्रहस्य। उक्तार्थमुदाहरणेन स्फुटयति, यथेति। न च तस्य सर्वगतत्वेऽपि तद्विषयकसाक्षात्काराभावान्नोक्तदोषप्रसङ्ग इति वाच्यम्। उक्तरीत्या प्रकृतेऽपि साम्यात्। यथा हि हिरण्यादिनिधिः स्वीयैः पित्रादिभिः ग्रहे निखनितो विद्यमानोऽपि तत्प्रजास्तदज्ञानेन तमप्राप्य दरिद्राः खिद्यमाना भ्रमन्ति। तथा भगवदीयगुणानां सत्त्वे मोक्षासाधारणहेतुत्वे चापि लौकिका अज्ञानेन तदविषयी भूताः संसरन्तीति न कश्चिद्विरोध इति भावः। भगवदीय गुणस्य साधनान्तरसापेक्षत्वेऽन्योऽन्याश्रयोऽप्राधान्यापत्तिश्च तेषां स्वातन्त्र्ये सर्वत्र व्याप्तिप्रसङ्ग इमामाशङ्कामतिदेशेन निरस्यति, एतेनैवेति। भगवदीयगुणगणस्य निरपेक्षत्वेऽपि तत्र नैर्घृण्यादिदोषप्रसङ्गवारणाय साधनान्तरप्रतिपादकशास्त्रबाधनिवृत्तये च साधनान्तराणामपि व्याजमात्रेण स्वीकारान्नोक्तदोषप्रसक्तिः। नहि व्याजमात्रस्य वस्तुस्वातन्त्र्यहानि कर्तृत्वशक्तियुक्तातिप्रसङ्गात् तस्मात् साधनान्तरं व्याजीकृत्य स्वयमेव सकलदानोर्हो भगवदीयानुग्रहाद्यादिगुणगण इत्यर्थः।

इत्थं परिमाणविवादं निराकृत्य प्रत्यगात्मनां सङ्ख्याविवादमपाकरोतीत्याह—अथेति। ब्रह्मादिस्थावरान्तेषु प्रत्येकमेकैकः शारीर विलक्षणस्वरूप इत्याह—ब्रह्मादीति। तत्तदन्तःकरणरूपोपाधिभेदात् प्रत्यगात्मनां भेद इति पक्षं दूषयितुमाह—स्वरूपेणेति। "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभिचाकशीति" श्रुत्या जीवपरयोर्विभागः श्रूयते। अनेनैव जीवानामितरेतरस्वरूपभेदश्च स्पष्ट एव दर्शितः। "अजो ह्येको जुषमाणोऽनुशेते जहात्येनाम्भुक्तभोगामजोऽन्य" इति श्रुतेरित्याह—अनेनेति, प्रतिदेहभिन्नमिति विशेषणेनेत्यर्थः।

### भाषानुवाद

उत्तर। जिस प्रकार तार्किकों के सिद्धान्त में गोत्व जाति व्यापक है तो भी श्रृंगसास्नादिमति गोव्यक्ति में ही उसकी प्रतीति होती है सर्वत्र नहीं होती है। जैसे वेदान्तसिद्धान्त में ब्रह्म प्राणीमात्र का आत्मा होने से सर्व के अन्तर और बाहर व्यापक है। इसमे "अन्तर्वहिश्च तत्सर्वं व्याप्य नारायणस्थित" यह वचन प्रमाण है जैसे जिसके मोक्ष होने में विलम्ब नहीं है उस विलक्षण अधिकारी को ब्रह्म का साक्षात्कार होता है वैसे ही भगवत्कृपा सर्वत्र व्यापक होनेपर भी शास्त्र का श्रवण और मनन निदिध्यासन साधन से सम्पन्न और श्रीगुरुदेव में अनन्य भक्ति युक्त साधक के हृदय में भगवत्कृपा का साक्षात्कार होता है। सर्वदा दीनता युक्त अनन्य भक्त का जो मनुष्य दर्शन करते हैं वह स्वयं कहने लगते हैं कि इसके ऊपर भगवान् की पूर्ण कृपा है। अतः सब की मोक्ष नहीं हो सकती है मोक्ष के साधन बतलाने वाले शास्त्र भी निरर्थक नहीं है। इससे यह भी सिद्ध हो चुका कि भगवान् के दिव्य कल्याण गुण भगवान के स्वरूप की तुल्य व्यापक और मोक्ष के कारण स्वाभाविक है "स्वाभाविकी ज्ञानवल क्रिया च" ऊपर की कही हुई वार्ता इस श्रुति से प्रमाणित है।

### वेदान्तरत्न मञ्जूषा

देहं देहं प्रति भिन्नमिति प्रतिदेहभिन्नम्। ब्रह्मादिस्थावरान्तेषु चतुर्विधेष्वपि देहेषु स्वरूपेणैव भिन्नमिति यावत् अनेन परमात्मनो जीवानाञ्च महद्वैलक्षण्यमुक्तम्, परमेश्वरस्य सर्वत्रैक्यत्वात् अतएव प्रत्यगात्मनामपि मिथो भेदसिद्ध्या एकजीववादिपक्षो निरस्तः। अन्यथैकस्मिन्सुप्ते मूर्च्छिते मृते वा निखिलजीवनिकायस्यापि प्रतीत्यापत्तेः। एतेनैव सुखादिगुणसाङ्कर्यशङ्काऽपि दूरतो निरस्ता भवति। तथा च शास्त्रम्। अन्तः प्रविष्टः शास्ता जनानाम्।

## कुञ्चिका

प्रत्यगात्मानः प्रतिदेहं भिन्नाः, परमेश्वरस्तु सर्वत्रैक एवेति, तयोर्महद्वैलक्षण्य-मित्याह—परमेश्वर इति। 'अत एव' प्रतिदेहभिन्नत्वादेव'। एकचैतन्यपक्षे बाधकतर्क-मुपन्यस्यति, अन्यथेति। जीवस्यैकत्वस्वीकारे इत्यर्थः। नोपपद्यते चैकस्मिञ्जीववादे जन्ममरणकरणानां व्यवस्था, एकस्मिञ्जायमाने सर्वे जायेरन् म्रियमाणे म्रियेरन् इत्यर्थः। चैत्रमैत्रादीनां भोगसाङ्कर्यमपि दुर्निवारमित्याह—एतेनेति। जीवानां नानात्वसमर्थने-नेत्यर्थः। न चोपाधिकभेदस्य तन्नियामकत्वान्नोक्तदोषावकाश इति वाच्यम्। यतः प्रत्यगात्मन एकत्वे उपाधिभेदेन न व्यवस्थाकल्पनं युक्तं तथात्वे देहादेरिव देहावयव पाणिस्तनादीनामपि भेदकत्वं स्यात् तथा च पाणौ नष्टे पुरुषस्य नाशव्यवहारः स्यात्। स्तनादौ जाते च जन्मव्यवहारश्च स्यात्। न चान्तःकरणभेदोऽविद्या भेदो वा तन्नियामक इति वाच्यम्। चैतन्यैक्ये चक्षुरादिभेदवदन्तःकरणभेदस्यानुसन्धानप्रयोजकत्वास-म्भवात्। अथानेकविद्यासम्बन्धस्य दुःखाद्यनुसन्धानरूपस्यानर्थस्य च विशिष्टवृत्तित्वं शुद्धगतत्वं वा। नाद्यो बन्धमोक्षयोर्वैयधिकरण्यात्। अन्ते च यच्छुद्धं चैत्रीयदुःखा-नुसन्धातृ तदेव मैत्रीयदुःखानुसन्धात्रितिसाङ्कर्यतादवस्थ्यात्। किञ्च 'आचार्य-वान् पुरुषो वेदे' ति श्रुतेरेकजीववादे ह्युपदेष्टव्यान्यस्य चेतनस्याभावात्, उपदेष्टुरभावे तत्त्वज्ञानासम्भवस्तदसम्भवे च मोक्षासम्भवः इत्यन्यत्र विस्तरः। उक्तार्थं शास्त्रप्रमाणेन द्रढयति, शास्त्रमिति। जीवपरमात्मनोर्भेदप्रतिपादिकां श्रुतिमुदाहरति, 'अन्त' इति। जनानामिति बहुवचनप्रयोगेण शारीराणां नानात्वमभिहितम्।

## भाषानुवाद

कोई आचार्य्य का मत है कि एक ही जीव है अभी तक किसी को भी मोक्ष नहीं हुई है जब एक जीव मुक्त हो जायेगा तब संसार भी नष्ट हो जायेगा कोई आचार्य्य जीव को नाना बतलाते हैं। इस विवाद को मिटाने के लिये भगवान श्रीनिम्बार्काचार्य्यपादजी ने प्रतिदेह भिन्नम्। इस पद का प्रयोग किया प्रत्येक देह के अन्दर जीव पृथक् पृथक् है। इससे परमेश्वर सब प्राणियों में एक है जीवात्मा भिन्न भिन्न है दोनों परस्पर में विलक्षण है। यह सावित हुआ। अतएव एक जीववादी का मत खंडन हो चुका यदि जीव प्रति देह में पृथक् पृथक् नहीं मानोगे तो एक जीव के शयन करने पर सब ही का शयन हो जाना चाहिए। एक जीव को मूर्छा होने से सब ही को मूर्छित हो

जाना चाहिए। एक जीव को सुख दुःख होने पर सब ही सुखी दुःखी हो जायेंगे इससे एक जीववाद सर्वथा भ्रान्ति है।

## वेदान्तरत्न मंजूषा

सर्वात्मा य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति, एष ते आत्मान्तर्याम्यमृतः, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, धियो यो नः प्रचोदयात्, शारीरश्चोभयेऽपि हि भेदेनैनमधीयते, भेदव्यपदेशाच्चान्यः, अधिकन्तु भेदनिर्देशात्। नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः। नचैव न भविष्यामः सर्वे वयमतः परम्। इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च। बहवो ज्ञानतपसा पूता मद्भावमागता इत्यादि।

## कुञ्चिका

नित्यश्चेतन एक एव सन् बहूनां नित्यानां चेतनानामपेक्षितानर्थाननायासेन प्रयच्छतीत्यर्थः। अत्र चेतनानां बहुत्वं तेषां परमात्मनो महद्वैलक्षण्यञ्चोक्तम्भवति। परमेश्वरो विश्वात्मा स नो ऽस्मदर्थभूतानां जीवात्मनां सम्बन्धिधीबुद्धिविषयप्रवणा, धिय इति कर्मणि षष्ठी। धियं प्रचोदयात् स्वविषयिकां 'ब्रह्मस्वरूपविषयिकाङ्कुर्यो-दित्यर्थः। अत्रापि प्रत्यगात्मनां नानात्वं स्फोरितम्। द्रष्टृत्वादिधर्माणां चेतने जीवे सत्त्वात्तस्यैवान्तर्यामित्वं स्यादित्यत आह—'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते। १।२।२१। अत्र नकारइति पूर्वसूत्रादनुवर्त्तनीयम्। 'शारीरो जीवो नान्तर्यामि शब्दवाच्यः। सर्वात्मत्वसर्वनियन्तृत्वसर्वद्रष्टृत्वादीनामतद्धर्मत्वात्। हि यतः काण्वा माध्यन्दिनाश्चोभयेऽपि एनं शारीरमन्तर्यामिणो नियमयितुर्भेदेन पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते "यो विज्ञाने तिष्ठन्निति 'काण्वाः। "यमात्मा न वेद यस्यात्मा शरीरं यमात्मानमन्तरो यमयति स ते आत्मान्तर्याम्यमृतः" इति माध्यन्दिनाः। प्रागुदाहृताः श्रुतयः, प्रत्यगात्मपरमात्मनोः स्वरूपतो भेदं प्रबोधयन्ति,स च भेदस्तार्किकमत इथ। जीवेश्वरयोस्तथेह न प्रतिपत्तव्यः किन्त्वेकमेवाद्वितीयं ब्रह्मेति श्रुत्युक्तस्यैकस्यैव समाभ्यधिकशून्यस्य नियन्तुरनन्तशक्तेः कल्याणगुणैकसिन्धोर्ब्रह्मणोंऽशभूत उदाहृतलक्षणो जीवात्मा वेदोक्तेन स्वासाधारणधर्मेण नियम्यत्वादिनाभिन्नोऽपि स्वनियन्तुः सकाशात् गुणो यथा गुणिभिन्नस्तथाऽपि स्वाधीनस्थितिप्रवृत्त्यनर्हत्वादेकत्वाद्वितीयत्वादि

स्वांशिधर्माविरोधित्वादभिन्नः। तत्र बन्धमोक्षार्हत्वाल्पज्ञत्वादयो धर्मा अंशगता नित्य-मुक्तत्वसर्वज्ञत्वानावृतत्वमुक्तगम्यत्वादयो धर्मा ब्रह्मासाधारणा नात्र गुणसाङ्कर्यदोषः। एवमचेतनशक्तेर्जडत्वपरिणामित्वादयोऽसाधारणधर्माः सर्वशक्तिमत्त्वसर्वज्ञत्वादयः शक्ति-मतो ब्रह्मणोऽसाधारणाः शक्तित्वेन प्रकृतेर्ब्रह्माभिन्नत्वेऽपि शक्तेः पृथक्प्रवृत्त्याद्यभावाद्-ब्रह्माभिन्नत्वम् एवमौपनिषदानां भेदाभेदस्तत्त्वसम्बन्ध इति सूत्रार्थः। भेदव्यपदेशाच्चान्यः १।१।२२। आदित्यादिशरीराभिमानिक्षेत्रज्ञात्तदन्तःस्थोऽन्यः स्वरूपतो भिन्नः परमात्मा कस्मात् 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदि-त्यमन्तरो यमयत्येष ते आत्माऽन्तर्याम्यमृत' इत्यादिश्रुत्या जीवब्रह्मणोर्भेदव्यपदेशात् एवमादित्यादिजीवात्तदन्तर्गतस्य ब्रह्मणो भिन्नत्वं सिद्धमिति सूत्रार्थः। अधिकन्तु भेद-निर्देशात्। १।१।२२। तु शब्दः पूर्वपक्षं व्यावर्त्तयति, यतः शारीरात्सर्वज्ञं सर्वशक्ति सर्वेश्वरं समानातिशयशून्यं जगदभिन्ननिमित्तोपादानकारणमधिकमुत्कृष्टं ब्रह्म ब्रूमः। अतो हितकरणादिदोषप्रसक्तिर्नास्ति। अधिकत्वे हेतुः भेदनिर्देशादिति 'आत्मा वा ऽरे द्रष्टव्यः, ब्रह्मविदाप्नोति परं, य आत्मानमन्तरो यमयतीति' ब्रह्मजीवयोर्भेदनिर्देशात्। अयमर्थः। यथा 'सर्वं खल्विदम्ब्रह्मे' त्यात्राचिद्वर्गस्य स्वरूपेण ब्रह्माभिन्नत्वासम्भवात्। तज्जत्वादिना ब्रह्माभिन्नत्वमङ्गीक्रियते तथा शारीरस्योक्तभेदश्रुतिप्रामाण्यात् स्वरूपतो ब्रह्माभिन्नत्वासम्भवाद्ब्रह्मनिरपेक्षस्थितिप्रवृत्त्यभावाद् ब्रह्माभिन्नत्वम् 'तत्त्वमस्या'दिवाक्यै-रभिधीयते न तु स्वरूपतः। एवमभेदेऽपि भेदव्यपदेशान्नेह हिताकरणादिदोषप्रसक्ति-रिति सूत्रार्थः। श्रीमुखवचनेनाप्युक्तार्थं द्रढयति, 'नत्वेवाहं मिति।' तत्रात्मत्वेन स्वस्य जीवात्मसाम्यापत्तिं तुशब्देन निराकारोति—सर्वात्मनां मध्ये यथाहं सर्वेश्वरः इतः पूर्वस्मिन्काले जातु कदाचिन्नासं नाभवमिति न अपि त्वासमेव। तथा त्वं नासीरिति न किन्त्वासीरेव तथेमे जनाधिपा नासन्निति न, किन्त्वासन्नेव एतेनात्मनो भूतकाले सत्त्वादुत्पत्तिर्निराकृता। अत्र प्रत्यगात्मनां नानात्वं नित्यत्वञ्चोक्तं भवति वहव-इति वहुवचननिर्देशेन प्रत्यगात्मनां नानात्वमभिहितम्। एतेनैकजीववादो निरस्तः। इदं वक्ष्यमाणं ज्ञानमुपाश्रित्य मम साधर्म्यं मत्साम्यं प्राप्ताः। साम्यञ्चात्रस्वरूपेण गुणादिना च। तथा च प्रत्यगात्मनां ज्ञानसाम्यात्स्वरूपसादृश्यम्। अपरिच्छिन्नज्ञानधर्म-कत्वाद्गुणसादृश्यं तत्त्वं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। नियन्तृत्वस्वात-न्त्र्याभावेन ब्रह्मभिन्नत्वेसति सार्वज्ञ्यापहतपाप्मत्वादिभूयोब्रह्मगतधर्मवत्त्वाल्लक्षण-समन्वयः।

## भाषानुवाद

इन श्रुति सूत्र भगवद्वाक्यों के द्वारा साबित होता है कि जीव नाना है। नित्य जीवों के मध्य में नित्य है चेतनोंमें परम चेतन है सबों में एक परमात्मा है, वह सबकी कामना पूर्ण करता हैं। विश्व के अन्तर प्रविष्ट होकर सबों को शासन करता हैं। इन श्रुतियों में "नित्यानां चेतनानां वहूनां" इन प्रयोगों से सिद्ध होता है कि जीव नाना हैं काण्व और माध्यंदिनी शाखा वाले दोनों ऋषि जीवों को भिन्न २ कहते हैं। भेद व्यपदेशाच्चान्य इति। आदित्यादि शरीराभिमानी जीव से तदन्तः स्थितपरमात्मा स्वरूप से भिन्न है क्योंकि बृहदारण्य उपनिषद के अन्तर्यामिब्राह्मण में कहा कि जो परमात्मा आदित्य ( सूर्य ) में स्थित है वह आदित्य से भिन्न है, जिस अन्तर्यामी परमात्मा को सूर्य नहीं जानता है जिस परमात्मा का सूर्य शरीर है और वह आदित्य के अन्दर स्थित होकर उसे नियमन करता है वह तेरा अन्तर्यामी परमात्मा है इस अन्तर्यामी ब्राह्मण के द्वारा जीव से भिन्न परमात्मा है यह सिद्ध हुआ। अधिकन्तु भेदनिर्देशादिति। जीव से सर्वज्ञ सर्वशक्ति सर्वेश्वर परमात्मा भिन्न है और उत्कृष्ट है। नत्वेवाहमिति। हे अर्जुन मैं पूर्व काल में नहीं था सो नहीं किन्तु पूव काल में भी विद्यमान था तू भी पूर्व समय में विद्यमान था ये सब राजगण भी भूत और भविष्यत् वर्तमानकाल त्रय में विद्यमान थे। इस भगवद्गीता वचन से सिद्ध हो चुका कि जीवों का परमात्मा से भेद स्वाभाविक है। और जो कोई आचार्य्य जीव ईश्वर का औपाधिक भेद मानता हैं और भेद को काल्पनिक और व्यवहारिक कोई मानते हैं वह सब मतवादी इस भगवान के वचन से परास्त हो चुके। श्री गीता में प्रागुपदर्शित ज्ञान का आश्रय कर मेरे समानता को प्राप्त हुये। और सर्ग के आदि में उन्हों का जन्म नहीं होता है प्रलय काल में भी उन को कोई तरह की व्यथा नहीं होती है और बहुत से जीव ज्ञान और तप से पवित्र होकर मेरे भाव को प्राप्त हुवे, इन श्री मुख वचनों के द्वारा साबित होता है कि मुक्ति में भी भेद रहता है अतएव भेद स्वाभाविक है।

## वेदान्तरत्नमञ्जूषा

तथात्वेऽप्येकैकस्य जीवस्योक्तसाधनसम्पत्त्या क्रमेण मोक्षाभ्युपगमे कदाचित्सर्वेषामेव मोक्षोपपत्तौ निःशेषकार्यकारणात्मकविश्वात्यन्ताभावप्रसङ्ग-इत्याशङ्क्य समाधत्ते, 'यदनन्तमाहु' रिति। यद्यस्माज्जीवमनन्तमाहुस्तस्मा-

मोक्तशङ्कावकाश इत्यर्थः । अनन्तत्वंचात्र सङ्ख्यानिरूपितावमानशून्यत्वम् । असङ्ख्याकमिति यावत् । आहुरित्यत्र वेदान्तवाक्यानि महर्षयश्चेति योज्यम् । तानि च पूर्वमेवोदाहृतानि । जीवमित्यत्रैकवचनोक्तिर्जीवत्वसामान्याभिप्रायिका अन्यथा प्रतिदेहभिन्नमनन्तमित्यनयोर्विशेषणयोर्वैयर्थ्यापत्तेः न चैकजीववादपक्षेऽपि उपाभिनैव तयोः सम्भवः इति वाच्यम् । तथात्वेऽपि पूर्वोक्तदोषस्य तादवस्थ्यात् । तस्माज्जीवत्वजात्यभिप्रायकमेवात्रैकवचनमित्येवपरम् । "आचार्य-प्रोक्ता या जातिः सा नित्या साऽजराऽमरेति" उद्योगपर्वणि सनत्सुजातवचनात्॥१॥

## कुञ्चिका

नतु स्यादेतत्क्षेत्रज्ञानां प्रतिशरीरं स्वरूपभेदस्तथाऽपि तत्रैकैकस्य साधनसम्पत्त्या क्रमेण मोक्षापत्तौ सत्यां कदाचित्सर्वेष्वपि मुक्तेषु सृष्ट्यत्यन्ताभावोऽपि सम्भाव्य इत्याशङ्कते, तथात्व इति । प्रत्यगात्मनां प्रतिशरीरं स्वरूपभेदस्वीकार इत्यर्थः । अनन्तत्वश-ब्दार्थं व्याचष्टे, अनन्तत्वं चात्रेति । पूर्वमेवेति । 'नित्यो नित्याना' मिति वाक्यकदम्बेन जीवानामनन्तत्वं निरूपितम् । तथा चाह भगवान्पराशरः, "स्थूलैः सूक्ष्मैस्तथा सूक्ष्म-सूक्ष्मैः सूक्ष्मतरैस्तथा । स्थूलैः स्थूलतरैश्चैव तत्सर्वं प्राणिभिर्वृतम् ॥ अङ्गुलस्याष्टमो भागो न सोऽस्ति मुनिसत्तम । न सन्ति प्राणिनो यत्र निजकर्म्मनिबन्धनाः ॥ सर्वे चैते वशं यान्ति यमस्य भगवन्किल । आयुषोन्ते ततो यान्ति यातनास्तत्प्रचोदिताः ॥ यातनाभ्यः परिभ्रष्टा देवाद्यास्त्वथ योनिषु । जन्तवः परिवर्त्तन्ते शास्त्राणामेष निर्णयः ॥" इत्यादिना बद्धानामसङ्ख्यातत्वं निरूपितम् । 'शास्त्राणामेष निर्णय' इति 'निर्णय'पदप्रयोगाच्छ-ङ्कावकाशो दूरतोऽपास्तो भवति ।

यदि प्रत्यगात्मनामसङ्ख्याकत्वं निर्णीतं तदा जीवमित्येकवचनोपादानमसङ्गतं प्रतिभातीत्याशङ्कायां जात्या एकत्वं समर्थयन्नाह—जीवमित्यत्रैकवचनोक्तिरिति । बाधकमुप-न्यस्यति, अन्यथेति । जीवत्वजातावेकत्वाभिप्रायाभावेऽर्थः । यदि जीवमित्येकवचनं जीवस्यैकत्वं ग्राहयति तदा प्रतिदेहभिन्नमनन्तमित्यनयोर्विशेषणयोर्वैयर्थ्यं प्रसज्येत इति तर्काकारः । जीवमित्येकवचनोपस्थापितैकत्वस्य प्रकृत्यर्थतावच्छेदकजीवत्वजातावन्वयः। ननु पदार्थः पदार्थेनान्वयो नतु पदार्थैकदेश इति व्युत्पत्तिविरोधान्न जीवत्व एकत्वान्वयः । न च तादृशव्युत्पत्तौ मानाभाव इति वाच्यम् । नित्यत्वस्य घटत्वेऽन्वयबोधतात्पर्य्येण घटो नित्य इति वाक्यस्यापि प्रामाण्यापत्तेरिति चेन्न । तादृशव्युत्पत्तेर्वैचित्र्यात् । त

सङ्ख्यातिरिक्तकिञ्चिदर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनान्वयबुद्धित्वावच्छिन्नं प्रति अपरपदधर्मिकवृत्तिज्ञानजन्योपस्थितिर्विशेष्यता सम्बन्धेन प्रयोजिका इत्येवम्। अतएव सम्पन्नो व्रीहिः, वेदाः प्रमाणमित्यादिप्रयोगाणां प्रामाण्यमुपपद्यते यदि च जीवमित्यत्र जीवत्वजातेः स्वरूपतो भानान्न तत्रैकत्वान्वयः निरुक्तविशेष्यतासम्बन्धेन शाब्दबोधं प्रति अपरपदधर्मिकवृत्तिज्ञानजन्योपस्थितिः सावच्छिन्नविशेष्यतासम्बन्धेन हेतुरितिकार्यकारणभावादित्युच्यते तथापि स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन प्रकृत्यर्थ एवैकत्वान्वयोऽभ्युपेतव्यः। वस्तुतस्तु विशिष्टशक्तिवादिनां मत एव पदार्थः पदार्थेनान्वय इति व्युत्पत्तिविरोधः शङ्कनीयः, न तु जातिशक्तिवादिनां मत इति। अन्तः करणभेदोऽविद्याभेदो वा प्रत्यगात्मभेदनियामक इत्याशङ्क्य परिहरति न चेति। तयो-रिति। प्रतिदेहभिन्नमनन्तविशेषणयोरित्यर्थः। उपाधिभेदाज्जीवानां भेदो न तु वास्तविक इति शङ्कितुरभिप्रायः।

तथात्वे औपाधिकभेदस्वीकारे। पूर्वोक्तेति। ब्रह्मणो विभुत्वेनोपाधेरपि तत्त्वात् सर्वस्यापि आवृतत्वेन शुद्धस्य मुक्तप्राप्यस्योच्छेदेन जगदान्ध्यापत्तेश्चेत्यादिग्रन्थेन निर-स्तप्रायमित्यर्थः। उपसंहरति, तस्मादिति। उक्तार्थं बादरायणवचसा दृढयति, आचार्यइति।

इति प्रथमश्लोकव्याख्या॥

## भाषानुवाद

यहाँ पर यह प्रश्न उपस्थित होता है कि यदि जीव बहुत हैं तो प्रत्येक जीव साधन से मुक्त होजाने पर किसी काल में क्रम से सबों की मुक्ति होजायेगी फिर सृष्टि नहीं होनी चाहिए इस शंका को निवारण करने के लिये भगवान् श्री निम्बार्काचार्यजी ने 'यदनन्तमाहुः' यह विशेषण प्रदान किया। जीव अनन्त हैं। अर्थात् जीवों की गणना नहीं हो सकती है क्योंकि जीव असंख्याक हैं। महर्षि श्री पराशरजी ने कहा है कि स्थूलैः सूक्ष्मैस्तथा सूक्ष्म सूक्ष्मैः सूक्ष्मतरैस्तथा। स्थूल और सूक्ष्म सूक्ष्मतर और सूक्ष्मतम प्राणियों से सर्व जगत् पूर्ण है कोई बड़े जीव हैं और कोई जीव छोटे हैं, अंगुलि का अष्टमभागमात्र स्थान खाली नहीं है निज कर्मों से बँधे हुए जीव नहीं है वे सब जीव आयु के अन्त में यम के वश होते हैं तहाँ यम की यातना को भोगते हैं, यम-यातना के अन्त में निज कर्मों के अनुसार मनुष्य आदि योनि को प्राप्त होते हैं इसी प्रकार जीव संसार चक्र में भ्रमते हैं यह सिद्धान्त शास्त्रों से निश्चित है। यहाँ पर्यन्त

गुण परिमाण त्रिविध जीवों का साधारण लक्षण और स्वरूप गुण परिमाण सङ्ख्या का निरूपण किया। यहाँ तक प्रथम श्लोक की व्याख्या समाप्ति हुई।

## वेदान्त रत्न मञ्जूषा

एवं तावत्प्रत्यगात्मनः स्वरूपगुणपरिमाणसङ्ख्याविशेषेषु प्रमाणपूर्वकं निरूपितेषु सत्सु तथाभूतपरिमाणसिद्धस्वरूपकं परमार्थसद्वस्तु चेत् कथं नानुभूयते इति शङ्कां परिहरन् विशिनष्टि—अनादिमायेति।

अनादिमायापरियुक्तरूपं त्वेनं विदुर्वै भगवत्प्रसादात्।
मुक्तश्च भक्तं किल बद्धमुक्तं प्रभेदबाहुल्यमथापि बोध्यम् ॥२

अनाद्या अघटनघटनापटीयस्या गुणमय्या मायया प्रकृत्या परियुक्तं परिवेष्टितं सङ्कुचितरूपं धर्मभूतज्ञानं यस्य तम्, श्रीभगवतः पुरुषोत्तमात् पराङ्मुखतयाऽनादिकर्मात्मिकाऽविद्यावच्छिन्नत्वाद्देहेन्द्रियादिलक्षणमायागुणा - ब्धितरङ्गताडितस्वरूपत्वेनात्यन्तसङ्कुचितज्ञानत्वान्नानुभूयते प्रत्यगात्मतत्त्वमि- त्यर्थः। ननु एवं तर्हि गौरनाद्यन्तवतीत्यादि श्रुतेर्मायागुणप्रवाहस्यानाद्यनंतत्वात् कदाचिदपि तज्ज्ञानं न स्यात्। तथात्वे च तितिक्षाविषयत्वमेव तद्विविदिषायाः सुतरां वैयर्थ्यञ्च तत्प्रतिपादकशास्त्रस्यापीति चेत्तत्राह।

## कुञ्चिका

प्रथम श्लोकेन यन्निरूपितं तदनूद्योत्तरश्लोकमवतारयति, एवमिति। जीवस्य चिद्रूपत्वमिन्द्रियदेहादिजडवर्गवैलक्षण्यञ्च ज्ञानस्वरूपत्वञ्चेत्यनेन प्रदर्शितम्। ज्ञातृत्व- वन्तमित्यनेन ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वं कर्तृत्वं चकारेणाहमर्थत्वं भगवदायत्तस्वरूप- स्थितिप्रवृत्तिकत्वं हरेरधीनमित्यनेन निरूपितं, कर्मरूपाऽविद्यावच्छेदलक्षणबन्धमोक्षार्ह- त्वमणुपरिमाणकमसङ्ख्याकञ्च सप्रमाणं निरूपितं, सम्प्रति प्रत्यगात्मनो ज्ञानं स्वाभाविकं नित्यधर्मश्चेत्तादृशस्वरूपं कुतो नानुभूयत इत्यर्थः।

श्लोकार्थं व्याचष्टे, अनाद्या इति। प्रत्यगात्मनो धर्मभूतं ज्ञानं सङ्कोचविका- सार्हं, बद्धावस्थायां तस्य सङ्कोचः, मुक्तौ तद्विकासः। बद्धावस्थायां यदि जीवीयधर्मभूतस्य ज्ञानस्य सङ्कोचत्वमङ्गीक्रियते तदा सर्वेषामज्ञत्वं प्रसज्येतेत्यत आह—अनादिकर्मात्मि- केति। कर्मतारतम्यप्रयुक्तं ज्ञानस्य सङ्कोचत्वं तेन न सर्वेषां शारीराणामज्ञत्वप्रसक्तिः।

तदुक्तमाप्तैः "तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसञ्ज्ञिता। सर्वभूतेषु भूपाल तारतम्येन वर्त्तते॥ अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा॥ संसार तापानखिलानवाप्नोत्यतिसन्ततानिति"। तथा च बद्धदशायां कर्मणां सत्त्वात् तेन सङ्कुचितस्वरूपतया प्रत्यगात्मनो ज्योतिष्ट्वस्वरूपत्वं नानुभूयते। मुक्तौ कर्माभावान्न तस्य सङ्कोच इति भावः। यद्यनादिकर्म्मात्मिकमायया प्रत्यगात्मनो धर्मभूतं ज्ञानं सङ्कुचितम्भवेत्तर्हि गुणप्रवाहस्य कदाऽप्यनुपरमात् स्वस्वरूपज्ञानं जीवानां कदाऽपि न स्यात्। तथा सति तत्साधनानां तत्प्रतिपादकवचनानाञ्च वैयर्थ्यं प्रसज्येतेत्याशङ्कते, नन्विति। मायाया आद्यन्तशून्यत्वं श्रुत्या प्रमाणयति, 'गौरनाद्यन्तवती'ति। गौःमाया आद्य तवती न भवतीति तदर्थः।

## भाषानुवाद

अब दूसरे श्लोक की व्याख्या का प्रारम्भ है। (प्रश्न) ज्ञान स्वरूप और हरि के आधीन आदि स्वरूप जीवात्मा का है तो उस स्वरूप का अनुभव हमें क्यों नहीं होता हैं। इस प्रश्न का उत्तर द्वितीय श्लोक में भगवान् निम्बार्काचार्य्यजी ने प्रदर्शन किया है—अनादिमायापरियुक्तरूपंत्वेनंविदुर्वैभगवत्प्रसादादिति अनादि कर्मात्मिक अविद्या से जीव का धर्म भूत ज्ञान संकुचित होगया है इससे सब जीवों को वास्तविक स्वस्वरूप का ज्ञान नहीं होता है। (प्रश्न) "गौरनाद्यन्तवती" इस श्रुति से सावित होता है कि माया के गुणों का प्रवाह अनादि और अनन्त है, अतः जीव उससे कभी भी निर्मुक्त नहीं हो सकता है। अतएव जीव के वास्तविक स्वरूप कहने वाली श्रुतियाँ व्यर्थ हो जायेंगी और ब्रह्म स्वरूप और स्वस्वरूप की जिज्ञासा कोई भी न करेगा।

## वेदान्तरत्न मञ्जूषा

'त्वेनं विदुर्वै भगवत्प्रसादादिति'। 'वै' इति निश्चयार्थः, तु शब्दः शङ्कानिरसनपरः। एवं प्रमाणसिद्धमपि प्रत्यगात्मानं भगवतः श्रीपुरुषोत्तस्यानुग्रहाद्विदुः, भगवदीयाऽनादिवैदिकसत्सम्प्रदायानुयायिन इति शेषः। 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मन' इति श्रुतेः। एतदुक्तम्भवति, मायाया अनाद्यनन्तत्वेऽपि तत्तत्क्षेत्रज्ञविशेषकर्मनिमित्तकबन्धमोचयोरीश्वरस्यैव प्रदातृत्वेन नियामकत्वात्, न मायाभावाभावयोः। 'संसारबन्धस्थितिमोक्षहेतु'रिति श्रुतेः। "बन्धको भवपाशेन भवपाशाच्च मोचकः। कैव-

न्यदः परब्रह्म विष्णुरेव सनातनः। दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥" इति स्मृतेश्च, तस्मात्तद्विषयकज्ञान-सङ्कोचलक्षणाज्ञाननिवृत्तौ तज्ज्ञानविकाशो भवत्येव।

## कुञ्चिका

उक्तार्थं श्रुतिप्रमाणेन दृढयति, 'तमक्रतुमि'ति श्रुत्यर्थस्तु प्राग्दर्शितः। एतदुक्त-मिति, यदुक्तं तदेतद्भवतीत्यर्थः। सर्वास्वेव बन्धस्थितिप्रवृत्तिषु मोक्षे चेश्वरः प्रयोजककर्त्तेति श्रुत्यादिभ्योऽवसीयते न तु माया तथा च श्रीविष्णोरनुग्रहादेव प्रत्यगात्मनः धर्मभूतज्ञान-सङ्कोचनिवृत्तिपूर्वकज्ञानविकाशो भवत्येवेत्यर्थः। उक्तार्थं श्रुतिस्मृतिप्रमाणेन द्रढयति, न मायेति। मायामोहितानां जीवानामस्वातन्त्र्येण तत्परिहर्त्तुमशक्यत्वात्तद्गुणप्रवाहस्याना-द्यनन्ततया न कदाऽपि कस्यापि मायातिक्रमः स्यादित्याशङ्कयासाधारणं तरणोपायमाह— दैवीति, देवस्य भगवतो नियम्यभूता दैवी एषा त्रिगुणमयकार्यद्वारा सर्वप्रत्यक्षा गुणमयी सत्त्वरजस्तमोगुणमयाऽत्मिका मम परमेश्वरस्य सर्वज्ञस्य सर्वशक्तेः सर्वकार्योत्पादनशक्ति-र्मायाशब्दवाच्या। 'दुरत्यया' ममानुग्रहमन्तरेणोपायसहस्रैरपि दुस्तरा हि निश्चितमेतत्। अनन्तानां जीवानां मध्ये ये केचिन्मामेव सर्वेश्वरं सर्वज्ञं।

## भाषानुवाद

( उत्तर ) भगवान् की कृपा से सत्सम्प्रदाय के अनुगत होकर जीव अपने पारमार्थिक सच्चिदानन्द स्वरूप को जान सकता है। भगवान् की कृपा से जीव की मुक्ति होती है इस विषय में तम क्रतुं पश्यतिवीतशोक इति यह श्रुति प्रमाण है भगवान् के अनुग्रह से जीवात्मा आत्मा के महत्व को और परमात्मा को भी देखता है संसार का बन्धन और पालन मोक्ष का कारण भगवान् ही हैं संसार रूप पाश में बाँधने वाले और उससे निर्मुक्त करना और मोक्ष के प्रदाता भगवान् ही हैं। भगवान् की माया देवी दुर्लंघनीय है जो जन मेरी शरण आते हैं वे जन मेरी माया से पार होते हैं। यह स्मृति उक्त अर्थ में प्रमाण हैं। जीव के स्वरूप विषयक ज्ञान का संकोच ही अज्ञान है उसकी निवृत्ति होने पर जीव के स्वरूप विषयक ज्ञान का विकाश होता है जैसे घट के अन्दर स्थित दीपक की प्रभा का प्रकाश नहीं होता है जब घटरूपप्रतिबन्धक हटा देने से दीपक की प्रभा प्रकाशित होजाती है अतएव जीव के स्वरूप विषयक जिज्ञासा निष्फल नहीं है और तद्बोधक शास्त्र भी अप्रामाणिक नहीं है।

## वेदान्तरत्न मंजूषा

घटस्थदीपस्य तदात्मकप्रतिबन्धसङ्कुचितप्रभस्य घटात्मकप्रतिबन्धनिवृत्तौ तत्प्रभाप्रकाशवत् तस्मात्तज्जिज्ञासायाः सार्थकत्वान्नतितिक्षाविषयता । नापि तद्विधायकशास्त्रवैयर्थ्यमिति । नन्वनुग्रहस्यान्योपायसापेक्षत्वं नवा । नाद्यः । अप्रधानतापत्तेः । अन्योन्याश्रयापत्तेश्च । नापि द्वितीयः सर्वत्र व्याप्तिप्रसङ्गात् । इतिचेन्न, तस्य निरपेक्षत्वेऽपि नैर्घृण्यादिदोषनिवृत्तये, उपायान्तरप्रतिपादकशास्त्रबाधानिवृत्तये च साधनान्तरस्य व्याजमात्रत्वाभ्युपगमान्नोक्तविकल्पावकाशः । इदमत्राकूतम् । यद्यपि नतत्समश्चाभ्यधिकश्च दृश्यते न तत्समश्चाधिकः कुतोन्य इति श्रुतिस्मृतिभ्यः ।

## कुञ्चिका

उक्तार्थं दृष्टान्तेन परबुद्ध्यारूढंकरोति—घटस्थेति । तद्विविदिषायाः तितिक्षाविषयत्वमभिहितम् , तन्निरसितुमाह—तस्मादिति । भगवद्विषयकज्ञानसङ्कोचलक्षणाज्ञाननिवृत्तौ तज्ज्ञानविषयकविकाशो भवत्येवेतिस्वीकारादित्यर्थः । तज्जिज्ञासायाः = ब्रह्मजिज्ञासायाः तद्विधायकेति । तत्साधनप्रतिपादकवचनानां प्रत्यगात्मतत्त्वप्रतिपादकानाञ्च न वैयर्थ्यमित्यर्थः । विकल्पयति --नन्विति । भगवदनुग्रहस्य साधनान्तरसापेक्षत्वे तस्यामुख्यत्वं प्रसज्येत इत्याशयेनाद्यविकल्पमपाकरोति—नाद्य इति । अन्योन्याश्रयेति । भगवदनुग्रहादन्यसाधनसिद्ध्या ज्ञानं स्यात्, अन्यसाधनानुष्ठानेऽनुग्रहःस्यादित्यन्योन्याश्रय इत्यर्थः ।

## भाषानुवाद

( प्रश्न ) भगवान् की कृपा दूसरे साधन की अपेक्षा करती है या नहीं । यदि कहा जाय कि दूसरे उपाय की अपेक्षा करती है तब तो वह साधन ही प्रधान रहा और भगवान् की कृपा गौण अर्थात् अप्रधान होजायगी। और इस पक्ष में अन्योन्याश्रय दोष की प्रसक्ति भी है। जब ईश्वरकी कृपा होगी तब जीव साधनों में प्रवृत होगा,साधन करने से भगवान् की कृपा होगी, दोनों ही परस्पर में साकाङ्क्ष होने से दोनों ही नहीं बन सकेंगे । यदि कहो कि भगवान् की कृपा दूसरे साधन की अपेक्षा नहीं करती है तो सर्वत्र व्यापक भगवत्कृपा से सब की मोक्ष होनी चाहिए। ( उत्तर ) भगवान् की कृपा स्वतन्त्र है । दूसरे साधन की अपेक्षा नहीं करती है, क्योंकि भगवान् निरंकुश ऐश्वर्य वाले हैं उनके समान दूसरा कोई नहीं है शमदमादि साधनों के प्रतिपादक वचन भी आपकी प्रतिज्ञा हैं उस प्रतिज्ञा की रक्षा करने के लिये अन्य साधनों का व्याज मिस मात्र

स्वीकार कर जीवों के ऊपरनिर्हेतुक अपनी कृपा का संचार करती हैं। भगवान् की स्वात- न्त्र्यता को साधनों का व्याज नष्ट नहीं कर सकता है। अब जीवों का भेद प्रदर्शन करते हैं।

## वेदान्तरत्न मञ्जूषा

श्रीपुरुषोत्तमस्य रमाकान्तस्यातिशयसाम्यशून्यस्य भगवतः स्वतन्त्र एव प्रसादो, निरङ्कुशैश्वर्य्यात् तथाऽपि साधनान्तरप्रतिपादकशास्त्रस्यापि स्वस- त्यप्रतिज्ञत्वापादकत्वाद्बाधा मा भूत् तस्मिन्बाधिते सति स्वस्य प्रतिज्ञाहानिप्रस- ङ्गेनानिष्टत्वात् । इतरथा 'रामोद्विर्नाभिभाषत इत्यादिशास्त्रबाधात् साधनान्तर- स्यापि व्याजीक्रियते । किञ्च सर्वथा निर्व्याजत्वाभ्युपगमे नैर्घृण्यादिप्रसङ्गः स्यात् । नहि व्याजमात्रस्य वस्तुनः स्वातन्त्र्यहानिकारकत्वे शक्तिः । तथात्वे च न कश्चिद्विरोधः । अन्यथा "यमेवैष वृणुते तेन लभ्यः, मत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् । मत्प्रसादादवाप्नोति शाश्वतम्पदमव्ययमि" त्यादिशास्त्रव्याकोपादुक्तसिद्धान्त एव वरीयानलं विस्तरेण ।

## कुञ्चिका

अभ्युपेयन्ते च साधनानि व्याजमात्राणि, अन्यथा कांश्चिद्दुःखबहुलान्प्राण- भृतः परमेश्वरः करोति कांश्चिदत्यन्तसुखभाजः निर्जरादीनित्येवं विषमां सृष्टिं कुर्वतः परमेश्वरस्य नैर्घृण्यं प्रसज्येत । सन्ति शतशः साधनान्तरप्रतिपादकवचनानि तेषां बाधश्चेत्याशयेनोक्तविकल्पद्वयं परिहरति, नेति । 'तस्य = भगवदनुग्रहस्य । उक्तार्थं स्वाभि- प्रायं दर्शयन्नाह—इदमत्राकूतमिति । यद्यपि निरङ्कुशैश्वर्य्यस्य पुरुषोत्तमस्यातिशय साम्य- शून्यस्यानुग्रहः साधनान्तरनिरपेक्ष एव तथाऽपि साधनान्तरप्रतिपादिकाः श्रुतिस्मृत्याद- योऽपि भगवदाज्ञारूपा एव । 'श्रुतिस्मृती ममैवाज्ञा' इति तासामपि बाधो मा प्रसज्येत । तथा सति स्वस्य प्रतिज्ञाहान्यापत्तेरित्यतः साधनान्तरव्याज आवश्यक इत्याह—यद्यपी- त्यास्यादिना 'तस्मिन्' साधनान्तरप्रतिपादकशास्त्रे 'स्वस्य भगवतः।'

बाधकमाह—इतरथेति, निर्व्याजत्व इत्यर्थः । स्वर्गं नरकं वा प्राणिनो नयन्नी- श्वरो वैषम्यादिना कथं न दूष्यते भगवदनुग्रहस्य निर्व्याजत्वाभ्युपगमादित्याह— किञ्चेति । यदि साधनानां व्याजमात्रमभ्युपेयते तदा परमेश्वरानुग्रहस्य स्वातन्त्र्ये बाधक- मित्यर्थः। 'तथात्वे' साधनानां व्याजमात्राभ्युपगमे' उक्तार्थे बाधकं तर्कमुपन्यस्यति, अन्यथेति । परमेश्वरानुग्रहस्या स्वातन्त्र्यानभ्युपगमे, इत्यर्थः । 'यमेवैष' इत्यादि वचनानि

व्याकुर्य्येरन्नित्यर्थ.। उक्तसिद्धान्त इति। भगवतः प्रसादः स्वतन्त्र एव साधनानां व्याजमात्रत्वमित्यात्मक इत्यर्थः।

## भाषानुवाद

मुक्तं चभक्तं किलबद्धमुक्तं प्रभेदबाहुल्यमथापि बोध्यम्। जीव चार तरह के हैं एक नित्यमुक्त दूसरे भक्त तीसरे बद्ध चौथे बद्धमुक्त हैं। मुक्तञ्चेति। यह चकार पद बद्धजीव का समुच्चायक है। अनवरत भगवान् के स्वरूप और गुण लीलादि को स्मरण करता है उन्हीं की सेवा में सर्वदा रत हो वह भक्त कहलाता है।

## वेदान्तरत्नमञ्जूषा

एवमेतावता जीवात्मस्वरूपादिकं निरूप्य तज्ज्ञानाज्ञानकारणञ्च निर्णीतमिदानीं पूर्वमुपक्षिप्तं जीवविशेषं विविनक्ति, मुक्तञ्चेति। चकारो बद्धसमुच्चयार्थकः: बद्धञ्चेत्यर्थः भक्तं भजनार्हं मुमुक्षुमिति, तत्सापेक्षनिरूप्यत्वाद्बुभुक्षुरप्युक्तो भवति। स्वाभाविक्यपरिच्छिन्नध्येयाकारेन्द्रियवृत्तिमत्तया भजनशीलत्वाद्भक्तशब्दो मुमुक्षुवाचकः, तद्भिन्नस्तदभाववद्बुभुक्षुरिति यावत्। यद्यपि बद्धमुक्तभेदाद्द्वैविध्यमुक्तम्। अथाऽपि बद्धमुक्तप्रभेदबाहुल्यं बोध्यमित्यन्वयः एतदुक्तम्भवति। जीवात्मानस्तावद्द्विविधाः। बद्धमुक्तभेदात्। तत्र बद्धो नामानादिकर्मवासनाकार्यभूतदेवतिर्य्यगाद्यनेकविधशरीरतत्सम्बन्धिषु आत्मत्वाऽऽत्मीयाभिमानदार्ढ्यवन्तो बद्धाः। तथा भूताश्च द्विविधाः। मुमुक्षुबुभुक्षुभेदात्। तत्र मुमुक्षव अध्यात्म्यादिविविधसांसारिकदुःखानुभवजातक्लेशवत्तया विरक्ताः सन्तः संसारान्मोक्षमिच्छव इति, तेऽपि द्विविधा-भगवद्भावापत्तिलक्षणमुक्तिकामाः निजस्वरूपापत्तिकामाश्च। वैषयिकानन्दमिच्छन्तोबुभुक्षवः तेऽपि द्विविधाः।

## कुञ्चिका

प्रत्यगात्मा चैतन्यस्वरूपो ज्ञानगुणकोऽणुः भगवदायत्तस्वरूपस्थितिप्रवृत्तिकः बन्धमोक्षार्हस्तस्यानादिकर्मात्मिकमायया धर्म्मभूतं ज्ञानं सङ्कुचितं, भगवदनुग्रहात्तज्ज्ञानविकासो भवतीति प्राक्तनग्रन्थेन निरूपितम्। सम्प्रति तेषाम्भेदं विवेचयतीममर्थं निरूपयन्नाह—एवमिति, परममूलस्थचकारार्थं व्याचष्टे, चकार इति। भक्तशब्दार्थं विवृणोति। भक्तमिति। भोगेच्छां विहाय मोक्षमिच्छुरिति मुमुक्षुशब्दार्थस्तत्र भोगेच्छाया निविष्टत्वात

मुमुक्षुशब्देनार्थाद्बुभुक्षुरप्युक्तो भवतीत्याह–तत्सापेक्षेति,मुमुक्षुसापेक्षनिरूप्यत्वादित्यर्थः। ननु कथमत्र मुमुक्षुशब्देन बुभुक्षोर्ग्रहणं भवतीत्यत आह– स्वाभाविक्य इति। स्वाभाविकी– स्वभावसिद्धा– अपरिच्छिन्ना परिच्छेदशून्या। तृतीयाया अभेदोऽर्थोऽन्वयश्चास्य भजने निरुक्तवृत्तिमत्तापन्नं यद्भजनं तच्छीलत्वादित्यर्थः। तद्भिन्न इति मुमुक्षुभिन्न इत्यर्थः। तदभाववदिति, स्वाभाविक्यपरिच्छिन्नध्येयाकारेन्द्रियवृत्तिमत्तया भजनाभाववदित्यर्थः। यथा सद्धेतुनिरूपणे व्याप्तिपक्षधर्मविरहतया दुष्टहेतोः स्मरणम्भवति तद्वदत्रापि निरुक्तभजनाभाववत्तया बुभुक्षोरपि मुमुक्षुशब्देन स्मरणम्भवतीति भावः। मूलश्लोकार्थं योजयति यद्यपीत्यादिना। एतदुक्तमिति, यदुक्तं तदेतद्भवतीत्यर्थः। 'तत्र' बद्धमुक्तेषु मध्य इत्यर्थः। बद्धस्यार्थं विवृणोति, बद्ध इति। अनादीति, अनादिकर्म्मणा या वासना यस्याः कार्यभूतं यद्देवतिर्यगाद्यनेकविधशरीरं तस्य शरीरसम्बन्धिषु कलत्रपुत्रादिष्वित्यर्थः। बद्धानां द्वैविध्यमाह—तथा भूतेति। निरुक्तेष्वात्मत्वात्मीयाभिमानदाढर्यवन्तो बद्धा इत्यर्थः। 'तत्र' तयोः मुमुक्षुशब्दार्थं व्याचष्टे, आध्यात्म्येति। आदिनाऽधिभौतकाधिदैविकयोः परिग्रहः। वातपित्तश्लेष्मणां वैषम्यनिमित्तं शारीरं दुःखमाध्यात्मिकमेकमपरञ्च कामक्रोधलोभादिनिबन्धनं मानसम्, मानुषपशुपक्षिसरीसृप स्थावरनिमित्तं दुःखमाधिभौतिकं, यक्षराक्षसविनायकग्रहावेशनिबन्धनमाधिदैविकमितिविवेकः। मुमुक्षूणां द्वैविध्यमाह—तेऽपीति। भगवद्भावापत्तिरिति। अस्य शास्त्रस्य प्रयोजनमेतेनोक्तम्भवति, 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते। बहवो ज्ञानतपसा पूता मद्भावमागता' इति श्रीमुखोक्तेः। स एव सायुज्यब्रह्मामृतमहिमादिशब्दैरभिधीयते 'निरञ्जनः परमं साम्यमुपैति, नारायणे सायुज्यमाप्नोति, ब्रह्म वेद ब्रह्मैव भवति। जुष्टस्ततस्तेनामृतत्वमेति तन्महिमानं वीतशोक इत्यादि श्रुतिभ्यः। स्वस्वरूपानन्दप्राप्त्या कृतकृत्याश्चान्य– इत्याह– निजस्वरूपेति बु भुक्षूणां द्वैविध्यमाह– तेऽपीति।

## भाषानुवाद

पुनः जीवों की सङ्कलना इस प्रकार है कि बद्ध और मुक्त भेद से दो तरह के जीव बतलाये तो भी बद्ध मुक्त भेद से जीवों का बाहुल्य है कि जीवों के कर्म वासना अनादि है अनादि कर्मों का नाम ही अविद्या है कर्म वासना से जीव मनुष्य तथा देव तिर्यक योनियों में भ्रमता है उन देहों को आत्मा मानता है और शरीर के सम्बन्धी भार्या पुत्र धन पशु भूमि आदि में ममता करता है वह जीव बृद्ध कहलाता है। वह

बद्ध जीव दो प्रकारके हैं। एक मुमुक्षु दूसरा बुभुक्षु है संसार के बन्धन से छूटने की इच्छा करता है वह मुमुक्षु है। मुमुक्षु के भी दो भेद हैं। एक भगवद्भावापत्ति रूप मुक्ति की इच्छा करने वाला दूसरा निज स्वरूपापत्ति रूप मुक्ति को चाहने वाला। प्राकृत सुख की कामना करने वाला बुभुक्षु कहलाता है।

## वेदान्तरत्न मञ्जूषा

भाविश्रेयस्का नित्यसंसारिणश्चेति। मुक्ता अपि द्विविधा, नित्यमुक्ता मुक्ताश्चेति । तत्राद्याश्च, गर्भजन्मजरामरणादिप्रकृतितत्सम्बन्धतत्कार्यविषयकानुभवशून्यत्वे सति नित्यभगवदीयदर्शनादिभजनानुभवानन्दैकरसास्तेऽप्यानन्तर्य्य पार्षदभेदेन द्विविधाः, तत्रानन्तर्य्याः— किरीटकटककुण्डलवंश्यादयः। पार्षदाः—विष्वक्सेनगरुडादयः, 'सदा पश्यन्ति सूरय' इति वचनात्। मुक्तानामनादिकर्मात्मिकाऽविद्यानिरूपितप्रकृतितत्कार्य्यसम्बन्धदुःखादिविनिर्मुक्ताः।

## कुञ्चिका

'तत्र' तयोर्नित्यमुक्तानां लक्षणमाह—गर्भजन्मेति गर्भश्च जन्म च जरा चेति द्वन्द्वसमासः। गर्भादीनां दुःखेऽन्वयः। 'तत्सम्बन्धः' प्रकृतिसम्बन्धः, 'तत्कार्य्यम्' प्रकृतिकार्य्यम्। दर्शनादीति, आदिना जक्षणादिपरिग्रहः। मुक्तस्य संस्कारजन्यधीनिषेधात्स्वतः सिद्धसाक्षात्कारवत्त्वं स्फोरितं दर्शनमिति। नित्यमुक्तानामपि द्वैविध्यमाह—तेऽपीति। उक्तार्थं श्रुत्या दृढयति, सदेति। मुक्तानां स्वरूपमाह—मुक्तेति। अनादिकर्मात्मिका याऽविद्या तन्निरूपितं ,तत्सम्पादितमिति यावत्' प्रकृतितत्कार्यसम्बन्धः तेन जन्यं यद्दुःखादिकं तस्माद्विनिर्मुक्ता इत्यर्थः।

स्वर्गनरकादिगतस्तु प्रतिकूलमनुकूलञ्च दुःखं स्मरति न तथा मुक्तोऽनादिकर्मनिबन्धनं दुःखं तदानीं कर्मणां विनष्टत्वान्न तदनुभव इति भावः। न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् स उत्तमः, नोपजनं स्मरन्निदं शरीरं एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति श्रुतिभ्यः।

## भाषानुवाद

बुभुक्षु के भी दो भेद हैं एक भाविश्रेयस्क ( भविष्य में श्रेय चाहने वाले ) दूसरे नित्य संसारी है। अर्थात् इस लोक में बारम्बार उत्पन्न होते हैं और मरते हैं। मुक्त जीव भी दो तरह के हैं। एक मुक्त दूसरे नित्यमुक्त हैं। प्रकृति के सम्बन्ध से सदा

निर्मुक्त और गर्भ जन्म जरा मरणादि से रहित और प्रकृति कार्य सुख दुःख का अनुभव उन्हों को काल त्रय में भी नहीं होता है और भगवान् का नित्य दर्शन और उनकी सेवा में तत्पर उससे आविर्भूत आनन्द रस का अनवरत साक्षात्कार करने वाले जीवों को नित्य मुक्त कहते हैं। और वह आनन्तर्य्य और पार्षद भेद से दो तरह के हैं।

## वेदान्त रत्नमञ्जूषा

तेऽपि द्विविधाः। निरतिशयानन्दरूपभगवद्भावापत्तिलक्षणवन्त एके। 'बहवो ज्ञानतपसा पूता मद्भावमागताः, इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः सर्गेऽपिनोपजायन्ते प्रलये न व्यथन्तिचेति' भगवदुक्ते। स्वस्वरूपानन्दावाप्ति-मात्रेण सन्तुष्टाश्चान्ये। तत्र भगवद्भावापन्नानां तदिच्छानुरूपनिजेच्छयाऽनन्त-विग्रहादिपरिग्रहोऽपि श्रुतिसिद्धो भगवदवतारादिवत्। स एकधा भवति द्विधा भवति त्रिधा भवति पञ्चधा भवति सहस्रधा भवत्यपरिमिता भवतीत्यादिवच-नात्। अन्येऽपि भेदा आकरेषु द्रष्टव्याः अलमति विस्तरेण। इति त्वम्पदा-र्थसङ्ग्रहः।

## भाषानुवाद

भगवान् के किरीट मुकुट कटक कुण्डल वंशी वस्त्रादि आनन्तर्य कहलाते हैं। विष्वक्सेन जय विजय गरुडादि पार्षद हैं। जीवों के अनादि कर्मों को ही अविद्या कहते हैं उससे ही प्रकृति का सम्बन्ध जीवों को होता है उसका कार्य सुख दुखादि भोग हैं। भगवत्कृपा के द्वारा अविद्या से जो निर्मुक्त हुये वह जीव मुक्त कहलाते हैं।

## कुञ्चिका

मुक्तान्विभज्य दर्शयति। तेऽपि द्विविधा इति। उक्तार्थं प्रमाणेन द्रढयति—बहव इति। शुद्धेन्द्रियमनस्का भक्ता ज्ञानतपसा मज्जन्मविषयकज्ञानमेव तपः सर्वकर्म भर्जकं 'ज्ञानाग्निः सर्व कर्माणि भस्मसात्कुरुत इति तेन पूता निरस्ताज्ञानतत्कार्यशुभाशुभवा-सनाः सन्तो मद्भावमागताः, मम यो भावः अपरिच्छिन्नज्ञानानन्दवत्त्वे सत्यप्राकृतप्रका-शानन्दविग्रहवत्त्वं तमागताः प्राप्ताः स्वरूपभेदे सति 'सर्वं ह पश्यती'ति श्रुतौ सार्वज्ञ्य-योगोक्तेः। सार्वज्ञ्यादिधर्माविर्भावेन विग्रहसाम्येन चाभेदं तादात्म्यलक्षणं भेदाभेदं प्राप्ता इत्यर्थः। भेदसहिष्णुरभेदस्तादात्म्यमिति भगवत्पतञ्जल्युक्ततादात्म्यलक्षणसमन्वयात्। एवं साधर्म्यवचनेन मुक्तौ स्वरूपैक्यवादः, केवलभेदवादश्च बहुवचनेनात्मैक्यवादश्च

स्पष्टं निरस्त इति भावः। भावपदञ्च स्वयमेव व्याख्यातं श्रीमुखेनेत्यतस्तद् वचनमुदाहरति, इदमिति। इदं वक्ष्यमाणं ज्ञानमुपाश्रित्यानुष्ठाय मम साधर्म्यं मागतामत्साम्यं प्राप्ताः सन्तः सर्गेऽपि ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यन्ते, गर्भवासदुःखं नानुभवन्ति तथा प्रलये न व्यथन्ति, प्रलयकालिकदुःखानि नानुभवन्ति न पुनरावर्त्तन्त इत्यर्थः। द्वितीयमुक्तान्द-र्शयति, स्वस्वरूपेति। श्रीपुरुषोत्तमभावापन्नानां भगवत्सङ्कल्पानुरूपनिजेच्छावशादनन्त-विग्रहवत्त्वमपि श्रुतिसिद्धमित्याह। तत्र भगवदिति। उक्तार्थं श्रुत्या प्रमाणयति स एकधेति इति प्रत्यगात्मनो निरूपणम्॥

## भाषानुवाद

नित्य मुक्तों के ही भेद हैं एक तो वह हैं कि निरतिशय आनन्द रूप श्रीकृष्ण-चन्द्र के समानाकारता को प्राप्त होगये हैं। दूसरे वह हैं कि जो अपने स्वरूपानन्द में ही सन्तुष्ट हैं। भगवद्भावापत्ति रूप मुक्ति में "निरञ्जनः परमं साम्यमुपैति, वह वो ज्ञान तपसा पूतामद्भावमागताः। इदं ज्ञान मुपाश्रित्य मम साधर्म्यमागता।" यह श्रुति तथा स्मृति प्रमाण है। बहुत से भक्त ज्ञान तप से पवित्र अर्थात् अज्ञान तत्कार्य शुभ अशुभ वासना से रहित होकर मेरा भाव अर्थात् अपरिच्छिन्न ज्ञान और आनन्द वाले होकर अप्राकृतदिव्य प्रकाश रूप आनन्द विग्रह को प्राप्त हुए। साधर्म्य शब्द का अर्थ सादृश्य है इस पद से मुक्ति में स्वरूपैक्यवाद केवल भेदवाद बहुवचन से आत्मैक्यवाद का खण्डन हो चुका। इति त्वं पदार्थ जीवात्मा का निर्णय यहाँ पर्यन्त दूसरे श्लोक की व्याख्या समाप्त हुई।

---

## वेदान्तरत्नमञ्जूषा

अथाचेतनं निरूप्यते—

अप्राकृतं प्राकृतरूपकञ्च कालस्वरूपं तदचेतनं मतम्।
मायाप्रधानादिपदप्रवाच्यं शुक्लादिभेदाश्च समेऽपि तत्र ॥३॥

अप्राकृतमित्यादिना। अचेतनं त्रिविधं मतं श्रुतिभिरित्यन्वयः। अचे-तनत्वञ्च चेतनविजातीयत्वम् ज्ञातृत्वाद्यनधिकरणत्वञ्च त्रैविध्यमेव विविच्यते, अप्राकृतं प्राकृतरूपकञ्च कालस्वरूपमिति। तत्र तावत्प्राकृतं विशिनष्टि-माया-प्रधानादिपदप्रवाच्यमिति। मायादिपदैरभिधीयमानं प्राकृतम्। आदिपदेन तमो

ऽव्यक्तादिसङ्ग्रहः । मायान्तु प्रकृतिं विद्यान्मायिनंतु महेश्वरम्,प्रधानक्षेत्रज्ञपति गुणेशः, अव्यक्तात्पुरुषः पर, इति श्रुतिभ्यः । "अव्यक्तं कारणं यत्तत्प्रधान-मृषिसत्तमैः । प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ॥ अक्षयंनान्यदा धारममेयमजरं ध्रुवम् । हेतुभूतमशेषस्य प्रकृतिः सा परा मुने ॥" 'दैवीह्येषा-गुणमयी मम माया दुरत्यया ।' इत्यादि स्मृतिभ्यश्च । तदेव लक्षणमुखेन द्योत-यति शुक्लादिभेदाश्च समेऽपितत्रेति । तत्र तस्मिन्प्राकृतपदार्थे ।

## कुञ्चिका

जीवात्मनः स्वरूपपरिमाणादिकं निरूप्य सम्प्रति अचेतनपदार्थं विवेचयती-त्याह—अथेति । चैतन्यगुणज्ञानादिराहित्ये सति परार्थत्वे सति स्वार्थहीनमित्यचेतन-लक्षणमित्याह--ज्ञातृत्वादिति । त्रैविध्यमेव निर्दिशति । अप्राकृतमिति । मायाप्रकृति प्रधानाव्यक्तादिपदाभिधेयमिति यदुक्तं तत् क्रमशः प्रमाणमुखेन समर्थयति, मायान्तु प्रकृतिमिति एतेन मायापदवाच्यत्वं प्रकृतौ स्फोरितम् , प्रधानपदबोध्यत्वम्प्रकृतेर्दर्शयति-प्रधानेति । प्रधानं प्रकृतिः क्षेत्रज्ञो जीवात्मा तयोः पतिरध्यक्षः गुणेशः कल्याणगुणाना-मीशः परमेश्वर इत्यर्थः । अव्यक्तशब्दवाच्यत्वं प्रकृतेः प्रमाणमुखेनाह—अव्यक्तादिति । श्रीभारते भीष्मवचनमुदाहरति अव्यक्तमिति ।

अजामिति । न जायत इत्यजां नित्याम्, एकस्याः प्रकृतेः नानाविधद्रव्यादि-भवनमनुपपन्नमित्यत आह—लोहितेत्यादि । रजः सत्त्वतमोगुणात्मिकाम् गुणभेदात्त-दुपपत्तिरित्यर्थः ।

## भाषानुवाद

क्षेत्रज्ञ जीवात्मा इन दोनों का नियन्ता और गुण के ईश श्रीहरि है । उक्त अर्थ को महाभारत के वचन से भी पुष्ट करते हैं अव्यक्तमिति । अब अचेतन का निरूपण करते हैं । अप्राकृतं प्राकृतरूपकञ्च कालस्वरूपं तदचेतनं मतमिति । चेतन से विलक्षण और ज्ञान और इच्छा कृति आदि जो चेतन के धर्म हैं उन्हों से रहित जो वस्तु है उसे अचेतन कहते हैं उसके प्राकृत और अप्राकृत और काल यह तीन भेद हैं माया और प्रधानादि पदों से जो कहा जाता है वह प्राकृत वस्तु कहलाता है ।

## वेदान्तरत्नमञ्जूषा

समेऽपि शुक्लादिभेदाः सन्ति । आदिना लोहितादिपरिग्रहः । शुक्लादि-

पदाभिधेयसत्त्वादिगुणत्रयाश्रयत्वं प्राकृतत्त्वमिति यावत्। 'अजामेकां लोहित-शुक्लकृष्णामिति' श्रुतेः। गुणाश्च सत्त्वरजस्तमांसि। तत्र ज्ञानादिकारणं गुणः सत्त्वम्, सत्त्वात्सञ्जायते ज्ञानमिति' वचनात्। इदमेव रजस्तमसी अभिभूय उत्कृष्टं सन्मोक्षौपयिकमभिधीयते, श्रीभगवद्गीतोक्तशमदमादिसाधनकदम्बा-चरणद्वारेण। लोभादिकारणं गुणविशेषोरजः। 'रजसो लोभ एव चेति' वच-नात्। इदमेव लोभादिवृद्धया क्षेत्रज्ञानां तत्त्वनिष्ठाभ्रंशहेतुः प्रमादादिकारणं गुणविशेष स्तमः। 'प्रमादमोहौ तमसो भवतोऽज्ञानमेव चेति वचनात्। इदश्च स्वपरस्वरूपावरणे प्रधानकारणम्, इदमेव गुणत्रयाश्रयीभूतं द्रव्यं साम्यावस्था-पन्नं सत् प्रधानादिशब्दवाच्यम्, अनादिजीवादृष्टानुसारिण्या श्रीपुरुषोत्तमेच्छया विक्षिप्तं सद् गुणवैषम्यं भजते; स एव कार्यव्यक्तीभावकालः।

"प्रधानम्पुरुषञ्चैव प्रविश्यात्मेच्छया हरिः। क्षोभयामास सम्प्राप्ते सर्ग-काले व्यया व्ययौ" इति स्मृतेः। सृष्टिक्रमश्च प्रलयावसाने सृष्टिसमये सृज्यमान-प्रपंचवैचित्र्यकारणप्राणिकर्मसहकृताचिन्त्यशक्तिमतो भगवतः श्रीमाधवस्य प्रपंचोत्पादनविषयिकाभिराकलनचिकीर्षाकृतिभिः प्रकृतिविक्षोभ उत्पाद्यते। तथाऽत्र श्रुतयः, "यः सर्वज्ञः सर्ववित्, यस्य ज्ञानमयं तपः, यदैक्षत बहुस्यां प्रजायेय सोऽकामत बहुस्याम्, तन्मनोऽकुरुत इत्याद्याः।

## कुञ्चिका

गुणानेवाह—गुणाश्चेति, 'तत्र' तेषु ज्ञानादिकारणत्वे सति गुणत्वं सत्त्वगुणस्य लक्षणमित्यर्थः। उक्तार्थे प्रमाणमाह सत्त्वादिति। 'शमः' बाह्येन्द्रियनियमनरूपः। दमो मनो नियमनम्। "शमोदमस्तपः शौचं क्षान्तिरार्जवमेव" चेत्यादीनां मोक्षोपायानां तस्यैव कार्यत्वादित्यर्थः "रजो रागात्मकं विद्धि मोहनं सर्वदेहिनाम्। प्रमादालस्य निद्राभिस्त-न्निबध्नाति भारत" इति श्रीमुखवचनमनुसन्धेयम्। साम्यावस्थापन्ना प्रकृतिः प्रधानादि-शब्दैर्व्यवह्रियत इत्याह। इदमेवेति। श्रीपुरुषोत्तमेति। एतेन निरीश्वरसांख्यपक्षो निरस्तः। साङ्ख्यै स्तस्याः स्वातन्त्र्यमभ्युपेयते। श्रीपुरुषोत्तमस्य विश्वात्मनो सर्वनियन्तुरधीन-त्वात्तस्याः 'यदासीत्तदधीनमासीदिति' श्रुतेः। सृष्टिक्रमं दर्शयति, सृष्टिक्रमश्चेति। विचित्रप्रपञ्चोत्पत्तौ सृज्यमानप्राणिकर्मणां सहकारिकारणत्वोपगमान्नानन्ताचिन्त्यशक्तेः श्रीपुरुषोत्तमस्य वैषम्यनैर्घृण्यादिदोषप्रसक्तिरित्यत उक्तं प्राणिकर्मेति। उक्तार्थं श्रुति-

प्रमाणमुखेन द्रढयति। तथाऽत्र श्रुतय इति। सर्वज्ञ इति। सामान्यविषयकज्ञानवान् ,विशेष-रूपेण तत्तद्व्यक्तिविषयकज्ञानवा नित्यर्थः, नातः पौनरुक्त्यं शङ्कनीयम्। (केन।पीतिशेषः) स्वरूपतः प्रकारतश्च सर्व विषयकज्ञानवत्त्वमस्मिन्मन्त्रे भूतयोनेर्विधेयमप्राप्तत्वात् , यस्य ज्ञानमयं तप इत्यनेनांशेन पूर्वमन्त्रोक्ततपः शब्दविवरणम् , यस्य ब्रह्मणः सङ्कल्परूपज्ञान-व्यतिरेकेण जगत्सृष्ट्युपयुक्तं कर्म्मान्तरं नास्तीत्यर्थः तत् सच्छब्दवाच्यं कारणं ब्रह्म ऐक्षत पर्यालोचनं कृतवान्। ईक्षणमेवाह—बहु स्यामिति। सोऽकामयत इति। स आनन्दमय आत्मा देवमनुष्यादिरूपेण बहुस्यां तदर्थमाकाशादिभूतरूपेण प्रजायेयेति व्यष्टिसमष्टि-रूपचेतनाचेतनविषयसङ्कल्पमकृत्वेति श्रुत्यर्थः। तन्मनोऽकुरुत इति। तत्कारणं ब्रह्म मनो-ऽसृजत इत्यर्थः।

## भाषानुवाद

सत्वगुण रजोगुण और तमोगुण इन तीन गुणों का आधार वस्तु जब गुण त्रय की साम्यावस्थापन्न है तब वह वस्तु प्रधान कहलाता है, जब जीवों के पाप पुण्य कर्मों के अनुसार भगवान् की इच्छा होती है उस इच्छा से विक्षिप्त होकर गुणों में वैषम्य होता है तब वह सृष्टि काल कहा जाता है। यह वार्ता प्रधानं पुरुषं चैव प्रविश्या-त्मेच्छया हरिः॥ क्षोभयामास सम्प्राप्ते सर्ग काले व्ययाव्ययौ। यह स्मृति प्रमाण है। भगवान् अपनी इच्छा से प्रधान और पुरुष में प्रविष्ट होकर सृष्टि काल में व्यय नाम विकार शाली। अव्यय नाम विकार रहित को क्षोभ युक्त करते हैं अर्थात् सृष्टि के उन्मुख के करते हैं। सृष्टि का क्रम इस प्रकार है कि सृष्टि के समय विश्व की विचित्रता के कारण प्राणियों के कर्म हैं उन्हों के सापेक्ष अचिन्त्य अनन्त शक्ति सम्पन्न भगवान् को सृष्टि का उत्पादन विषयक ज्ञान और इच्छा और प्रयत्न से प्रकृति में विक्षेप उत्पन्न होता है। उक्तार्थ के साधक यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः तदैक्षत बहुस्यां प्रजायेय सोऽकामयत बहुस्यां तन्मनोऽकुरुत " ये श्रुति है।

## वेदान्तरत्न मञ्जूषा

प्रकृतिपरिणाम एव व्यक्तकार्य्यादिशब्दैरभिधीयते तच्चानेकविधम् , तथाहि प्रथमं परमेश्वरेच्छा तन्त्रप्रकृतिगुणवैषम्यात् कार्य्योन्मुखं प्राप्ता सती महत्तत्त्वं व्यञ्जयति। तदेवाध्यवसायहेतुः सात्त्विकादिभेदात् त्रिविधश्चेति, ततोऽहङ्कारोजीवानां देहादावात्मबुद्ध्युत्पादानासाधारणहेतुः सोऽपि सात्त्विका-

दिभेदात्त्रिविधो वैकारिकतैजसभूतादिशब्दवाच्यश्च । तत्र वैकारिकादहङ्कारादि-न्द्रियाधिष्ठात्री देवता मनश्च । तदेव मनोवृत्तिभेदात्स्थानभेदाच्चान्तःकरणचतुष्ट-यसंज्ञां लभते । सात्त्विकाहङ्करोपादानकद्रव्यत्वेसत्यन्तज्ञानकरणत्वं तत्त्वम् । चतुष्टयश्च मनोबुद्धिचित्ताहङ्कारभेदाद्बोध्यम् । तत्र मननादिहेतुत्वं मनस्त्वम् । इदमेव मनः शब्दादि ( विषय ) सम्बद्धसद्बन्धहेतुः । तत्परित्यागपूर्वकं सपरि-करभगवद्विषयप्रावण्ये सति मोक्षहेतुः । "मन एव मनुष्याणां कारणं बन्धमो-क्षयोः । बन्धाय विषयासक्तं मुक्तं निर्विषयं स्मृतम् ॥ मनो हि द्विविधं प्रोक्तं शुद्ध-श्चाशुद्धमेव च । अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितम् ॥" इति वचनात् । बोधनकरणत्वं बुद्धित्वम् ॥

## कुञ्चिका

कार्य्यं प्रकृतिपरिणाम एवेत्याह--प्रकृतिरिति । तच्चेति । कार्य्यमित्यर्थः । सृष्टिसमये परमेश्वरेच्छया प्रकृतौ गुणवैषम्यं भवति । ततः सात्त्विकादिभेदावच्छिन्न-स्त्रिविधो महानुत्पद्यते ततोऽहङ्कारः सोऽपि त्रिविधः वैकारिकतैजसभूतादिभेदादित्याह । तथाहीत्यादिना । महतत्त्वस्य कार्य्यमाह । तदेवेति महत्तत्त्वमेवेत्यर्थः । अध्यवसायो बुद्धिर्निश्चय इत्यनर्थान्तरमित्यर्थः अहङ्कारस्य कार्य्यमाह—देहादाविति । तं विभजते, सोऽपीति । अहङ्कार इत्यर्थः । वैकारिकाहङ्कारस्य कार्यानाह । इन्द्रियादीति । मनसोवृत्ति-भेदेन गलान्तरवदनहृदयनाभिस्थानभेदेन च चातुर्विध्यमाह । तदेवेति । मनसो लक्षण-माह । सात्विकेति। 'तत्त्वम्' मनस्त्वमित्यर्थः । मनसो बन्धहेतुत्वमाह – इदमेवेति । उक्तार्थं प्रमाणेन द्रढयति-मन एवेति । शुद्धाशुद्धभेदेन मनसो द्वैविध्यमाह—मनोहीति । बुद्धेः स्वरूपमाह—बोधनेति।

## भाषानुवाद

प्रकृति के परिणाम को ही व्यक्त और कार्य शब्द से कहा जाता है वह कार्य अनेक प्रकार का है अब वही दिखलाते हैं पहिले भगवान् की इच्छा से प्रकृति के गुणों में वैषम्य होता है उससे कार्य के उन्मुख प्रकृति महत्तत्व को उत्पन्न करती है निश्चय का कारण महत्तत्व है वह सात्विक और राजस नाम सरूप से तीन तरह का है। महत से अहङ्कार उत्पन्न हुआ। वह देह में आत्म बुद्धि का कारण है अहङ्कार तीनविभागों में विभक्त है एक सात्विक दूसरा राजस तीसरा तामस है वह अहङ्कार वैकारिक तैजस

और भूत इन शब्दों से भी व्यवहृत होता है उन्हों में से सात्विक अहङ्कार से दश इन्द्रियों के अधिष्ठाता देवता और मन उत्पन्न हुआ मन ही वृत्ति और स्थान भेद से अन्तःकरण चतुष्टय कहलाता है। सात्विक अहङ्कार का कार्य द्रव्य और अन्तर्ज्ञान का कारण हो वह अन्तःकरण कहा जाता है। मन बुद्धि चित्त और अहङ्कार यह चार मन के भेद हैं मनन संकल्प विकल्प का कारण मन है वह मन रूप रस शब्दादि विषयों के सम्बन्ध से बन्धन का हेतु है विषयों से हटा कर भगवत्सम्बन्धि पदार्थों में लगा देने से मन ही मोक्ष का हेतु हैं मनुष्यों को बन्धन और मोक्ष का कारण मन ही है जब मन विषयासक्त होता है तब मन बन्धन का हेतु है जब मन प्रापञ्चिक विषयों से रहित होता है तब मन मोक्ष का कारण होता है। मन दो तरह का है एक शुद्ध दूसरा अशुद्ध है सांसारिक वस्तुओं की इच्छा करता है वह मन अशुद्ध है जो सांसारिक वासना से रहित है वह मन शुद्ध है।

## वेदान्तरत्न मंजूषा

देहादावहङ्करणहेतुत्वम् अहङ्कारत्वम्। चिन्तनहेतुत्वं चित्तत्वम्। तेषां चन्द्रब्रह्मरुद्रक्षेत्रज्ञा अधिष्ठात्र्यो देवताः। तथा च सुबालोपनिषच्छ्रुतयः—"मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतं, बुद्धिरध्यात्मं बोधयितव्यमधिभूतं ब्रह्मा तत्राधिदैवतं, अहङ्कारोऽध्यात्मम् अहङ्कर्त्तव्यमधिभूतं रुद्रस्तत्राधिदैवतं, चित्तमध्यात्मं चेतयितव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतमि"त्याद्याः। क्वचिच्चैषामधिष्ठातृत्वेन वासुदेवादयश्चतुर्व्यूहदेवा अप्युच्यन्ते। तेषां मन आदिषूपास्यत्वेन प्रतिपादनाभिप्रायत्वान्नोक्तसिद्धान्तविरोधः। चन्द्रादीनां तत्प्रवर्त्तकत्वं व्यूहदेवानां तदन्तर्यामितया तत्रोपास्यत्वमुभयमपि घटत एवेत्यर्थः। मनसः स्थानं गलान्तरं, बुद्धेर्वदनम्, अहङ्कारस्य हृदयम्, चित्तस्य नाभिरिति शारीरकोपनिषत्पाठादेषां स्थानक्रमोऽपि ज्ञेयः। तैजसाहङ्कारात् बाह्येन्द्रियाणि दशसङ्ख्याकानि जायन्ते। शब्दादिविषयबाह्यज्ञानकर्मैकतरकरणत्वे सति तैजसाहङ्कारोपादानकद्रव्यत्वं बाह्येन्द्रियत्वम्। तद्द्विविधं–ज्ञानेन्द्रियं कर्मेन्द्रियञ्चेति। तत्र शब्दादिविषयकबाह्यज्ञानासाधारणकारणत्वं ज्ञानेन्द्रियत्वम्। तच्च पंचधा-श्रोत्रत्वकचक्षुरसनघ्राणभेदात्। शब्दमात्रग्राहकमिन्द्रियं श्रोत्रम्। मनुष्याणां कर्णशष्कुल्यवच्छिन्नदेशवृत्ति पादोदराणां नयनवृत्ति।

## कुञ्चिका

'तेषाम्' मनोबुद्धिचित्ताहङ्काराणां उक्तार्थं श्रुतिमुखेन निर्द्धारयति—तथाचेत्यादिना। मनोबुद्धिचित्ताहङ्काराणां वासुदेवप्रद्युम्नानिरुद्धसङ्कर्षणरूपा देवता उक्तास्तथाऽपि मनः प्रभृतिषु वासुदेवादीनामुपास्यत्वेनाभिधानान्नोक्तसिद्धान्तस्य विरोध इत्याह—क्वचिच्चेति। चन्द्रब्रह्मरुद्रक्षेत्रज्ञा मनः प्रभृतीनां प्रवर्त्तकाः चतुर्व्यूहादयस्तु तेषामन्तर्यामितया तत्रोपास्या इत्युभयमपि सङ्गच्छत इत्याह। मनः प्रभृतोनां स्थानान्याह—मनस इति। तैजसाहङ्कारस्य कार्यं निर्वक्ति—तैजसादिति। बाह्येन्द्रियस्य लक्षणमाह शब्दादीति। इन्द्रियं विभजते। तद्द्विविधमिति। ज्ञानेन्द्रियस्य लक्षणमाह—तत्रेति। तयोर्मध्य इत्यथः। ज्ञानेन्द्रियाणां विभागमाह तच्चेति। श्रोत्रेन्द्रियं लक्षयति—शब्देति। तस्याधिष्ठानं निर्दिशति। मनुष्याणामिति। पाद उदरं येषां ते पादोदरा=सर्पाः।

## भाषानुवाद

ज्ञान का हेतु बद्धि है देहादिकों में आत्माभिमान का हेतु अहङ्कार हैं। चिन्ता का कारण चित्त है। मन का अधिष्ठातृ देवता चन्द्रमा बुद्धि का अधिष्ठातृ देवता ब्रह्मा है। अहङ्कार का अधिष्ठातृ देवता रुद्र हैं चित्त का अधिष्ठातृ देवता क्षेत्रज्ञ है यह विषय सुवालोपनिषद् में स्पष्ट है किसी २ श्रुतियों में इन्हों के देवता वासुदेव और सङ्कर्षण प्रद्युम्न अनिरुद्ध बतलाये हैं उसका यह भाव है कि मनमें वासुदेव की उपासना और बुद्धि में सङ्कर्षण की उपासना करनी चाहिये मन आदि के प्रवर्त्तक चन्द्रादिक हैं चन्द्रादिकों के अन्तर्यामे वासुदेव हैं अतएव मन आदिकों में वासुदेव की उपासना कर्त्तव्य है। इससे दोनों वचनों का परस्पर में विरोध नहीं है। मन का स्थान गले के अन्दर है बुद्धि का स्थान मुख है अहङ्कार का स्थान हृदय है चित्त का स्थान नाभि है यह स्थान विभाग शारीरक उपनिषद् में प्रसिद्ध हैं। राजस अहंकार से वाह्य इन्द्रिय दश उत्पन्न होती हैं वाह्य इन्द्रियों का यह लक्षण है कि। रूप रस और गन्ध स्पर्श शब्द विषय ज्ञान और कर्म इन दोनों में से एक का कारण हो और तैजस अहङ्कार का कार्य हो और द्रव्यत्व का आश्रय हो। इन्द्रियों के दो भेद हैं एक ज्ञानेन्द्रिय दूसरी कर्मेन्द्रिय है ज्ञानेन्द्रिय पाँच हैं जिन्हों के द्वारा रूप रस गन्धादिकों का ज्ञान होता है वह ज्ञानेन्द्रिय कही जाती हैं श्रोत्र त्वक् चक्षु रसन घ्राण ये पाँच हैं जिससे शब्द का ज्ञान होता है वह श्रोत्र हैं वह श्रोत्र मनुष्यों के कर्ण छिद्र में रहता है सर्प के नेत्र में श्रोत्र रहता है।

## वेदान्तरत्न मञ्जूषा

रूपमात्रग्राहकमिन्द्रियं चक्षु नयनवृत्तिः । स्पर्शमात्रग्राहकमिन्द्रियं त्वक्, सर्वशरीरवृत्ति नखदन्तकेशादिषु प्राणमान्द्यतारतम्यात् स्पर्शानुपलम्भः । रसमात्रग्राहकमिन्द्रियं रसनं जिह्वाग्रवृति । गन्धमात्रग्राहकमिन्द्रियं घ्राणं नासाग्रवृत्ति । तेषां दिग्वातार्कवरुणाश्विनोऽधिष्ठात्र्यो देवताः । शब्दस्पर्शरूपरसगन्धाविषयाश्च । स्थानादिस्थानिभ्योनीयन्तइत्युपक्रम्य चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतम् ॥१

## कुञ्चिका

रूपं लक्षयति । रूपमात्रेति । तस्याश्रयमाह । नयनेति । त्वगिन्द्रियस्य लक्षणमाह । स्पर्शेति । तस्यस्थानमाह । सर्वेति । ननु नखदन्तप्रभृतिषु स्पर्शः कुतो नोपलभ्यते इत्यत आह । नखदन्तेति । रसनेन्द्रियं लक्षयति । रसमात्रेति । तस्याश्रयमाह । जिह्वेति । श्रोत्रत्वक्चक्षूरसनघ्राणानां देवतां निर्वक्ति । तेषामिति । आदित्यादिदेवतासत्वे सुबालोपनिषद्वचनं प्रमाणयति । स्थानानीति । 'स्थानिभ्यः' इन्द्रियेभ्य. स्थानानि कर्णादिगोलकानि नीयन्ते देवताभिः प्राप्यन्ते आदित्यादिदेवताकर्तृकेन्द्रियरूपस्थानिप्रयोज्यप्राप्तिरूपसम्बन्धाश्रयभूतानि कर्णादिगोलकरूपस्थानानीति वाक्यार्थः ।

## भाषानुवाद

रूप मात्र का ग्राहक चक्षु हैं वह इन्द्रिय मनुष्यों के नेत्रों में विद्यमान है जिस से स्पर्श मात्र का ज्ञान हो वह त्वचा कहलातो है वह सर्व शरीर में व्यापक हैं। नख दन्त और केशों में प्राण वायुमन्द है अतएव इन्हों के द्वारा स्पर्श का ग्रहण नहीं होता है जिसके द्वारा रस का ग्रहण होता है वह रसनेन्द्रिय कहलाती हैं वह जिह्वा के अग्र भाग में रहती हैं गन्ध मात्र का ग्राहक इन्द्रिय घ्राण कहलाती हैं वह नासा के अग्र भाग में रहती हैं। दिशा वायु सूर्य वरुण अश्वनी कुमार इन्हों के देवता हैं। शब्द स्पर्श और रूप रस गन्ध ये पाँच इन्हों के विषय हैं। चक्षु अध्यात्म कहलाता है रूप अधिभूत है आदित्य चक्षु का देवता है।

## वेदान्त रत्नमञ्जूषा

श्रौतमध्यात्मं श्रोतव्यमधिभूतं । दिशस्तत्राधिदैवतं ।२। नासाध्यात्मं घ्रातव्यमधिभूतं पृथिवीतत्राधिदैवतम् । ३ । जिह्वाध्यात्मं रसयितव्यमधिभूतं

वरुणस्तत्राधिदैवतम् ।४ । त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतम् । ५ । इत्यादिश्रुतेः । पृथिवीशब्दनाश्विनौ लक्ष्येते । अन्यथा वाक्यान्तरविरोधात् । एतेषां पञ्चमहाभूताप्यायकत्वेन भौतिकत्वमप्युपचर्य्यते । वचनादानाद्यसाधारणकारणमिन्द्रियम् कर्मेन्द्रियं वाक्पाणिपादपायूपस्थसंज्ञाभेदात् पञ्चविधम् । तत्र वर्णोच्चारणासाधारणकारणेन्द्रियं वाक् कण्ठादिस्थानवृत्तिः ।

## कुञ्चिका

आत्मनि शरीरे इत्याध्यात्मं चक्षुषोऽध्यात्ममितिसंज्ञा द्रष्टव्यस्याधिभूतमितिसंज्ञा तत्र चक्षुषि अधिदैवतमधिष्ठातृदेवता एवमुत्तरवाक्येष्वपि बोध्यम् । सुबालोपनिषदि घ्राणेन्द्रियस्य पृथिवीदेवतोक्ता तथापि पृथिवीपदस्याश्विनयोः लक्षणेत्याह । पृथवीशब्देनेति । बाधकतर्कमाह । अन्यथेति । यद्यत्रपृथिवीशब्देनाश्विनौ न लक्ष्येते इत्यर्थः। वाक्यान्तरेति । श्रोत्रादीनां पंचानां क्रमेण दिग्वातार्कवरुणाश्विनोऽधिष्ठातृदेवता इति वाक्यान्तरमित्यर्थः । शब्दस्पर्शरूपरसानां पञ्चमहाभूतेषु पृथिव्यादिष्वाप्ययाल्लयात् तेषु भौतिकत्वव्यपदेश इत्याह । एतेषामिति ।

## भाषानुवाद

श्रोत्र अध्यात्म शब्द अधिभूत दिशा अधि देवता है इसी प्रकार नासा प्रभृति इन्द्रियों में भी अध्यात्म अधि भूत समझ लेना यह विषय श्रुतियों में प्रसिद्ध हैं। पञ्च इन्द्रिय को उपचार से भौतिक भी कहते हैं क्योंकि पाँच भूतों से यह पुष्ट होती है। वचन आदान धारण और विसर्ग आदिकों का असाधारण कारण कर्मेन्द्रिय कहलाती हैं। वाक्पाणि चरण और पायु उपस्थ ये पाँच कर्मेन्द्रिय हैं। वर्णों के उच्चारण का कारण वाक् इन्द्रिय का लक्षण हैं। वह कण्ठादि स्थानों में रहती हैं वर्णों के यह स्थान हैं।

## वेदान्तरत्न मञ्जूषा

अष्टौस्थानानिवर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालुच । इत्यादिवेदभाष्ये पश्वादीनां तत्संस्कारशून्यत्वात्तदभावः । शिल्पादानाद्यऽसाधारणकारणमिन्द्रियं पाणिः। मनुष्यादीनांकराङ्गुल्यादिवृत्तिः । हस्त्यादीनां नासाग्रादिवृत्तिः । विहरणक्रियाऽसाधारणकारणमिन्द्रियं पादः । मनुष्यादीनामङ्घ्रिवृत्तिः । भुजगपक्ष्यादीनामुरः पक्ष्यादिवृत्तिः ।

मलविसर्गकारणमिन्द्रियं पायुस्तदयवृत्तिः। आनन्दविशेषकारणमिन्द्रियमुपस्थं मेहनादिवृत्तिः। तेषां वन्हीन्द्रोपेन्द्रमृत्युप्रजापतयोऽधिष्ठात्र्यो देवताः।

## कुञ्चिका

कर्मेन्द्रियंलक्षयति। वचनेति। तं विभजते। वागिति। वागिन्द्रियस्य लक्षणमाह। तत्रेति। कर्मेन्द्रियेषु मध्य इत्यर्थः तस्य स्थानं निर्दिशति। कण्ठादीति। उक्तार्थं प्रमाणेन द्रढयति। अष्टाविति। पश्वादीनांतत्संस्कार इति कण्ठादिस्थानसंस्कारशून्यत्वात् तद्-भावः = वागिन्द्रियाभावः पाणिं लक्षयति। शिल्पेति। तत्स्थानं निर्दिशति। मनुष्यादीनामिति, पादस्य लक्षणमाह। विहरणेति तस्य स्थानमाह। मनुष्यादीनामिति। कर्मेन्द्रियाणां देवताः। दर्शयति। तेषामिति। वाक्पाणिपादपायूपस्थानामित्यर्थः।

## भाषानुवाद

उर कण्ठ शिर जिह्वामूल दन्त नासिका ओष्ठ तालू यह वर्णों के अष्ट स्थान हैं। अष्टौ स्थानानि वर्णानां यह वेद भाष्य का वचन उक्त अर्थ में प्रमाण हैं। वर्णोच्चारण का संस्कार पशु आदि में नहीं हैं इससे वह वर्णों का उच्चारण नहीं कर सकते हैं। शिल्पादि और आदान का कारण इन्द्रिय पाणि ( कर ) है इसका स्थान मनुष्यों की करों के अङ्गुलि है। और हस्ति के नासाग्र में कर इन्द्रिय का स्थान है। विहरण क्रिया का कारण चरण है चरणों की अङ्गुली के अग्र में इसका स्थान है। सर्पों का उर भी इसका स्थान है क्योंकि सर्प उर से ही चलते है। पक्षियों का पङ्ख भी उसका स्थान है क्योंकि पक्षी अपने पंखों से आकाश में घूमते हैं। मल त्याग का कारण इन्द्रिय पायु है उसका स्थान मूल द्वार है। आनन्द बिशेष का कारण इन्द्रिय उपस्थ कहलाता है इस का स्थान लिङ्ग का अग्र भाग है। अग्नि इन्द्र और विष्णु मृत्यु प्रजापति इन्हों के अधिष्ठाता देवता हैं।

## वेदान्तरत्नमञ्जूषा

वचनादानविहरणोत्सर्गानन्दाः पञ्चकर्माणि। तथाच श्रुतयः—वागध्यात्मं, वक्तव्यमधिभूतं, अग्निस्तत्राधिदैवतं, हस्तावध्यात्मम्। आदातव्यमधिभूतं, इन्द्रस्तत्राधिदैवतम्। पादावध्यात्मम्, गन्तव्यमधिभूतम्, विष्णुस्तत्राधिदैवतम्। पायुरध्यात्मम्, विसर्गयितव्यमधिभूतम्, मृत्युस्तत्राधिदैवतम्। उपस्थोऽध्यात्मम्, आनन्दयितव्यमधिभूतम्, प्रजापतिस्तत्राधिदैवतमित्याद्याः

सुबालोपनिषत्पठिताः । तानि चाणूनि प्रतिशरीरं भिन्नानीति यावद्‌अत्यन्तप्रल-यमवस्थितिस्वाभाविकानि।

### कुञ्चिका

वागिन्द्रियाणां कार्यं निर्दिशति । वचनेति । सुबालोपनिषत्प्रमाणेनोक्तार्थं द्रढयति । तथाचेति । ज्ञानेन्द्रियकर्मेन्द्रियाण्यणुपरिमाणकानि प्रतिदेहं भिन्नानि आत्यन्तिकप्रलयपर्य्यन्तं स्थास्यन्तीत्याह । तानिचेति ।

### भावानुवाद

उपदर्शित पाँच कर्मेन्द्रिय के वचन ग्रहण और पालन उत्सर्ग आनन्द यह पञ्च कर्म हैं वाक् इन्द्रिय का देवता अग्नि है हस्त का देवता इन्द्र हैं चरणों का देवता विष्णु हैं पायु का देवता मृत्यु है उपस्थ का देवता प्रजापति है यह वार्ता सुबालोपनिषद में स्पष्ट हैं । सब इन्द्रियों का अणु परिमाण है प्रत्येक देह में पृथक् २ इन्द्रिय हैं और प्रलय पर्यन्त इन्हों की स्थिति है ।

### वेदान्तरत्न मंजूषा

भूतादिलक्षणतामसाहङ्काराच्छब्दादिपंचतन्मात्राणि आकाशादि पंचमहाभूतानि चोत्पद्यन्ते । तामसाहङ्कारस्य भूतानांचान्तरालिको व्यवहित-सूक्ष्मपरिणामात्मकं द्रव्यं तन्मात्रशब्दाभिधेयम् । दुग्धदध्नोरान्तरालिककलिला-दिपरिणामवत् । तदेवस्थूलावस्थापन्नं भूतशब्दवाच्यं भवति । एवञ्च भूतादि-संज्ञकाहङ्काराच्छब्दतन्मात्रम् । शब्दतन्मात्रादाकाशः । आकाशात् स्पर्शतन्मात्रम् स्पर्शतन्मात्राद्वायुः । वायोः रूपतन्मात्रम् तस्मात्तेजः तस्मादापः तेजसोरस-तन्मात्रम् तस्मादापः । अद्भ्योगन्धतन्मात्रम् । तस्मात् पृथिवीत्युत्पत्तिक्रमः ।

### कुञ्चिका

भूतादिलक्षणतामसाहङ्कारस्य कार्यमाह भूतादीति पञ्चतन्मात्राणां स्वरूपमाह। तामसादिति आन्तरालिक इति मध्यइत्यर्थः । उक्तार्थं दृष्टान्तेन द्रढयति दुग्ध इति " तदेव " तन्मात्रशब्दाभिधेयम् यत्फलितं तदाह एवञ्चेति भूतादि संज्ञकाहङ्कारस्यकार्यं शब्दतन्मात्रमित्यर्थः शब्दतन्मात्रायाः कार्य्यं निर्दिशति शब्देति एवमग्रेपिबोध्यम् । तस्मा-दिति रसतन्मात्रादित्यर्थः "तस्मात्" गन्धतन्मात्रात् ।

### भाषानुवाद

तामस अहङ्कार से शब्दादिक पञ्च तन्मात्र और आकाशादि पञ्च महाभूतों की उत्पत्ति होती है। तत्र तामस अहङ्कार से प्रथम शब्द तन्मात्रा उत्पन्न होती हैं उससे आकाश उत्पन्न होता है उससे स्पर्श तन्मात्रा उत्पन्न होती हैं उससे वायु, वायु से रूप तन्मात्रा उससे तेज, तेज से रस तन्मात्रा उससे जल, जल से गन्ध तन्मात्रा गन्ध तन्मात्रा से पृथिवी उत्पन्न होती हैं।

### वेदान्तरत्नमंजूषा

**तेषां गुणाश्च शब्दस्पर्शरूपरसगन्धाः पंचैव। तत्र सर्वेऽपि पृथिव्यागुणाः। अपां गुणाश्चत्वारो रसपर्यन्ताः। तेजोगुणास्त्रयोरूपावसानाः। वायोः शब्दस्पर्शौ। नभसःशब्दमात्रम्। तत्र श्रुतयः—शब्दस्पर्शरूपरसगन्धाः पृथिव्याः गुणाः। तेषु गन्धहीनाश्चत्वारोऽपांगुणाः। तेषुगन्धरसहीनास्त्रयोगुणाः अग्नेः शब्दस्पर्शा-वितिवायोः। शब्द एक आकाशस्येति लौकिकोपनिषदि पठ्यमानाः। आकाश-वायुतेजांसि सलिलं पृथिवी तथा। शब्दादिभिर्गुणै ब्रह्मन् संयुक्तान्युत्तरोत्तरै-रिति, वैष्णवपुराण वचनं च। एतेनतेषां लक्षण मप्युक्तं भवति। तथाहि—**

### कुञ्चिका

"तेषाम्" पृथिव्यादि पञ्चभूतानाम्। पृथिव्यां शब्दस्पर्शरूपरसगन्धाः गुणा-सन्तीत्याह तत्रेति। शब्दादिषु मध्यइत्यर्थः। शब्दस्पर्शरूपरसाश्चत्वारो गुणाजलस्येत्याह-अपामिति। उक्तार्थं श्रुति प्रमाणमुखेन स्पष्टयति तत्र श्रुतयइति "तत्र" प्राक्तननिरूपणे। विष्णु पुराण वचनमुदाहरति आकाश इति। पञ्चभूतानां लक्षणमाह तथाहीत्यादिना।

### भाषानुवाद

तामस अहङ्कार और भूतों की मध्य अवस्था का नाम तन्मात्रा हैं जैसे दुग्ध दधी के मध्य परिणाम कललादि और स्थूल अवस्था का नाम महा भूत है। यह उत्पत्ति क्रम श्री विष्णु पुराण में श्रीपराशर महर्षि ने कहा है। शब्द स्पर्श रूप रस गन्ध ये पञ्च भूतों के गुण हैं पृथिवी में पाँच गुण हैं जल के शब्द स्पर्श और रूप रस ये चार गुण हैं। तेज में शब्द स्पर्श रूप ये तीन गुण हैं। वायु में शब्द स्पर्श ये दो गुण हैं। अकाश में एक शब्द गुण हैं। यह वार्त्ता लौकिक उपनिषद और विष्णु पुराण में स्पष्ट हैं। यद्यपि तन्मात्रा भूतों की सूक्ष्म अवस्था है और गुण उन्हों से पृथक् है यह भेद जानना। पाँच भूतों का लक्षण इस प्रकार हैं।

## वेदान्तरत्नमञ्जूषा

स्पर्शाद्यनाधारत्वेसति विशिष्टशब्दाश्रयत्वमाकाशत्वम् विशिष्टशब्दाधारत्वेसति अवकाशहेतुत्वञ्च। विशिष्टस्पर्शाश्रयत्वेसति रूपशून्यत्वम्। अनुष्णाशीतस्पर्शवत्त्वे सति गन्धशून्यत्वं वायुत्वम्। तत्र शरीरधारणादिहेतुर्वायुविशेषः प्राणः स च पञ्चविधः। प्राणापानव्यानोदानसमानभेदात्। उर्ध्वगतिमान् नासादिस्थानवृत्तिः प्राणः। अधोगति पाय्वादिस्थानवृत्तिरपानः। विश्वग्गतिरखिलशरीरवृत्तिर्व्यानः। पीताऽशितपानाद्युद्गारक्रियाहेतुः कण्ठस्थानवृत्तिरुदानः। अशितपीतादिसमीकरणहेतुः समानः सर्वाङ्गवृत्तिः। अन्यथा सर्वत्र समीकरणानुपपत्तेः।

## कुञ्चिका

कार्याकाशं लक्षयति। स्पर्शेति। सत्यन्तमात्रोपादाने ब्रह्मादिष्वतिव्याप्तिरतो-विशेष्योपादानम् तावन्मात्रोक्तौ पृथिव्यादिष्वतिव्याप्तिरतोविशेषणोपादानम्। तन्मात्रेषु कारणभूतेष्वतिप्रसक्तिनिराकरणाय विशिष्टेति। तेन कार्यभूतस्थूलशब्दस्य परिग्रहः। भूतानां छिद्रदातृत्वमित्याकाशस्य लक्षणान्तरमाह। विशिष्टेति। विशिष्टशुद्धः स्थूलशब्दस्तदाश्रयत्वेसतीत्यर्थः। अत्र विशेष्यभागेन पृथिव्यादीनां निरासः विशेषणभागेन कारणभूतस्य तामसाहङ्कारस्य तन्मात्रस्य च व्यावृत्तिः। वायुं लक्षयति विशिष्टेति। स्थूलशब्दाश्रयत्वं तदर्थः तेन तत्कारणस्य सूक्ष्मस्य वायोर्व्युदासः।

## भाषानुवाद

कि स्पर्श का आधार न हो कार्य भूत स्थूल शब्द का आधार हो उसे आकाश कहते हैं। अथवा स्थूल शब्द का आधार हो भूतों को छिद्र प्रदान करने वाला आकाश कहलाता है। यद्वा विशिष्ट शब्दों का आश्रय हो रूप शून्य हो वह आकाश है। अनुष्णा शीत स्पर्श वान हो गन्ध शून्य हो वह वायु कहलाता है। शरीर के धारण का हेतु वायु प्राण कहा जाता है प्राण अपान व्यान उदान समान भेद से प्राण वायु पाँच प्रकार का है ऊपर को चलने वाला नासा में रहने वाला प्राण वायु कहा जाता है। अधोगति मान अपान वायु है पायु आदि स्थानों में रहता है। जो वायु सब शरीर की नाड़ियों में व्याप्त होरहा है वह व्यान है जो खाये पीये अन्नजल को उद्गार करे सो वायु उदान कहा जाता है। स्थूल अन्न को पचाय कर सूक्ष्म रस अङ्गों में ले जाने वाले वायु को समान कहते हैं।

### वेदांतरत्नमंजूषा

तथाच श्रुतयः । अथ योऽयमूर्ध्वमुत्क्रामत्येष वाव स प्राणः, अथ योऽयमवांचमुत्क्रामत्येव वाव सोऽपानः येनेताः शिरा अनुव्याप्ता एष वाव सव्यानः । अथ योऽयं पीतमशितमुद्गिरत्येषवा व स उदानः । अथ योऽयं स्थविष्टमन्नं पातुमपाये स्थापयति, अणिवष्टं चाङ्गे समानयति एष वा व स समान इत्याद्या मैत्रेयोपनिषत्पठिताः । केचित्तु नाग् कूर्म कृकल देवदत्तधनञ्जयाख्याः पञ्चान्ये वायवः तत्र नाग उद्गिरणकरः । कूर्म उन्मीलन-करः कृकलः क्षुधाकरो देवदत्तो जृम्भणकरो, धनञ्जयः पोषणकर इति व दन्ति तच्चिन्त्यम् । एषां प्राणादिस्वेवान्तर्भावान्न पृथग्ग्रहः । उष्णस्पर्शवत्वे सति भास्वररूपाधारत्वं विशिष्टरूपाश्रयत्वे सति गन्धशून्यत्वंच तेजस्त्वम् ।

### कुञ्चिका

सत्यन्तेनाकाशस्य व्युदासः । विशेष्यभागेन पृथिव्यादीनां निरासः वायो र्लक्षणान्तरमाह । अनुष्णेति पृथिव्यादावतिव्याप्तिवारणाय विशेष्यभागः । तावन्मा-त्रोक्तौ आकाशे ऽतिव्याप्ति स्तन्निरासाय विशेषणभागः । प्राणं लक्षयति तत्रेति तं विभजते सचेति यदि उर्ध्वगतिमत्वं प्राणस्य लक्षणं तदोदाने ऽतिव्याप्तिः तत्राप्युत्क्रान्तिकाले उर्ध्वगतिमत्वस्य सत्वात् । मैवं । सर्वदोर्ध्वगतिमत्वस्य विवक्षितत्वात् उदानस्योत्क्रान्ति काले उर्ध्वगतिमत्वे ऽपि सर्वदा तदभावात् । न च प्राणस्योर्ध्व गतिमत्वे प्रमाणाभाव इति वाच्यम् । अथ योयमूर्ध्वमुत्क्रामति एष वा व स प्राण इति मैत्रेयोपनिषदि तथै वप्राणस्याभिधानात् तस्यासाधारणस्थानमाह नानादीति ।

### भाषानुवाद

यह लक्षण मैत्रयोपनिषद में स्पष्ट है । प्राण प्रायु का स्थान कण्ठ है । अपान का स्थान पायु है । सर्व शरीर व्यान का स्थान है । कण्ठ उदान का स्थान है । समान वायु का स्थान नाभि है । नाग कूर्म कृकल देवदत्त धनञ्जय ये पांच वायु को ही पृथक् मानते हैं । इन्हों में उद्गार कराने वाला वायु नाग कहा जाता है । कूर्म उन्मीलन करने वाला है । कृकल वायु क्षुधा कारक हैं देवदत्त जृंभण कारक है । धनंजय वायु पोषण करता है । इन पांच वायुओं का प्राण में अन्तर्भाव है । उष्णस्पर्शवान हो भास्वर रूप का आधार हो और स्थूल रूप का आश्रय हो गन्ध रहित हो वह तेज कहलाता है ।

## वेदान्तरत्नमञ्जूषा

शीतस्पर्शवत्त्वं, गन्धाभावत्वे सति विशिष्टरसवत्वम्। अपां लक्षणम्, विशिष्टगन्धाश्रयत्वम्। अनुष्णाशीतस्पर्शत्वे सति रूपाद्याश्रयत्वञ्च शब्दाश्रयत्वे सति स्पर्शादिमत्त्वं, रसवत्वे सति गन्धादिमत्वञ्च पृथिव्यालक्षणमिति बोध्यम्, इत्थं प्रकृतिमहदहङ्काराः मनोदशेन्द्रियाणि तन्मात्राणि पंचकं, भूतपंचकञ्चेति चतुर्विंशतितत्वानि। अत्र केचिन्महाभूतोत्पत्तिक्रमं वर्णयन्ति। अन्ये च भूतादेः पंचतन्मात्राणि तेभ्यः क्रमात् पंचमहाभूतोत्पत्तिमाहुः।

इतरे तु भूतादेः शब्दतन्मात्रं तत आकाश स्पर्श तन्मात्रं च जायते स्पर्शतन्मात्राद् वायुः रूपतन्मात्रं च जायते।

## कुञ्चिका

वायुप्राणोभूत्वा नासिके प्राविशदित्यैतरीयश्रुतिरत्रमानमन्यथा तदधिष्ठातृवायुदेवताय। नासादिस्थानवर्त्तित्वं नस्यादिति बोध्यम् अपानलक्षणमाह। अधोगतिरिति पाय्वादीति नाभिमारभ्य पायुपर्य्यन्तं तिष्ठतीत्यर्थः। नत्वपानः पायुप्रदेशमात्रवृत्तिः तथा सति मृत्युरपानो भूत्वानाभिं प्राविशदिति नाभिवृत्तिमृत्युदेवताधिष्ठेयत्वप्रतिपादिकैतरेयश्रुतिभिर्विरोधापत्तेरितिभावः। व्यानलक्षणमाह। विश्वगिति नानाविधासर्वत इति यावत् अशितेति। अशितपीतान्नपानीययोरित्यर्थः। स्थविष्टभागं—पुरीषमूत्रोपादानं बहिर्नियापयितुमपाने स्थापयति मध्यमं भागं मांसलोहितोपादानं सूक्ष्मञ्च मनः प्राणोपकारकमङ्गोपाङ्गेषु समानयति समान इत्यर्थः। अन्यथेति समानस्वशरीरान्तः सकलाङ्गवर्त्तित्वानङ्गीकारेत्यर्थः।

## भाषानुवाद

शीत स्पर्शवान को जल कहते हैं और गन्ध रहित हो स्थूल गन्ध का आश्रय हो यह दूसरा जल का लक्षण है। स्थूल गन्ध का आधार पृथ्वी है और अनुष्णा शीत स्पर्श का आश्रय हो रूप का आधार हो यह भी पृथ्वी का लक्षण है। शब्द का आश्रय हो स्पर्शादि मान हो और रस का आधार हो गन्ध का आश्रय पृथ्वी है। प्रकृति महत्व और अहंकार मन दश इन्द्रिय पंचतन्मात्रा पञ्च महाभूत ये चौवीस तत्व प्राकृत हैं। कोई विद्वज्जन भूतों से पंचतन्मात्राओं की उत्पत्ति मानते हैं. कोई अहंकार से पञ्चतन्मात्रा उत्पन्न हुई पञ्चतन्मात्र महाभूतों की उत्पत्ति मानते हैं। कोई भूतों से शब्द

तन्मात्रा उत्पन्न होती हैं उससे आकाश और स्पर्शतन्मात्रा उत्पन्न होती हैं। शब्दतन्मात्रा से वायु और रूपतन्मात्रा उत्पन्न होती है।

## वेदान्तरत्न मञ्जूषा

इत्यादिक्रमेण सृष्टिमाहुः। तच्चिन्त्यम् प्रलयक्रमविरोधात्। नचैवं सृष्टिश्रुतीनां परस्परविरुद्धक्रमपरत्वेनैकतमस्य क्रमस्यापि प्रामाण्यं न स्यात्। सर्वासामपि श्रुतित्वेन तुल्यप्रामाण्यादिति वाच्यम्। गुणोपसंहारन्यायेन सर्वस्यापि वाक्यजातस्य सामञ्जस्यमेव तस्मादुक्तक्रमस्य वरीयस्त्वम् स्मृत्युपबृंहितश्रुतिविषयत्वात्। तथाच श्रुतिः—महोवाचतं हि वै पूर्वं ह्येकमेवाद्वितीयं ब्रह्मासीत् तस्माद्व्यक्तमेवाक्षरं तस्मादक्षरान्महत्तत्वं महतो वै अहंकारस्तस्मादेवाहंकारात् पञ्च तन्मात्राणि, तेभ्यो भूतानीति। गोपालोपनिषत्पठिता व्याख्याता चैवा श्रीपराशरेण प्रधानं पुरुषं चैव प्रविश्यात्मेच्छया हरिः। क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाऽव्ययौ। स एव क्षोभको ब्रह्मन् क्षोभ्यश्च परमेश्वरः।

## कुञ्चिका

उक्तार्थंश्रुतिप्रमाणेनद्रढयति। तथा चेति। "येन" वायुना शिरा नाड्यइत्यर्थः। तेजसोलक्षणमाह। उष्णेति सत्यन्तेन जलस्य व्यावृत्तिः। लक्षणान्तरमाह विशिष्टेति स्थूलरूपाश्रयत्वेसतीत्यर्थः। सत्यन्तभागेनाकाशस्यव्यावृत्तिः विशेष्यभागेनक्षितेर्निरासः जलं लक्षयति शीतेति पृथिवीव्युदासाय सत्यन्तम् गगनव्यावृत्तयेविशेष्यम्। पृथिवींलक्षयति। विशिष्टगन्धेति स्थूलगन्धाश्रयत्वमिति तदर्थः तेनतत्कारणस्य सूक्ष्मगन्धाश्रयस्यव्युदासः लक्षणान्तरमाह अनुष्णेति सत्यन्तेन जलादीनां निरासः विशेष्यभागेन वायोर्व्युदासः। आदिना रसगन्धादीनां परिग्रहः। शब्दाश्रयत्वमात्रोक्तावाकाशादावतिव्याप्तिस्तन्निरासाय स्पर्शवत्वमभिहितम्। अत्रापिगन्धवत्वे सतीति विशेषणंदेयमन्यथावाय्वादावतिव्याप्तिस्स्यात् रसवत्वेति। विशेषणमात्रोक्तौ जलादावतिव्याप्तिरतोविशेष्यभागः। तत्त्वानां परिगणनेन चतुर्विंशतित्वमाह इत्यमित्यादिना भूतोत्पत्तिक्रमेकेषांचिन्मतं दर्शयति अन्येचेति। भूतादिलक्षणतामसाहङ्कारादित्यर्थः "पञ्चतन्मात्राणि" सूक्ष्मभूतानि "तेभ्यः" पञ्चतन्मात्रेभ्यः "पञ्चमहाभूतोत्पत्तिमिति" स्थूलभूतोत्पतिम्, अत्रैवमतान्तरमाह इतरेत्विति नतु छान्दोग्ये तेज आदिकासृष्टिः श्रूयते तत्तेजोऽसृजतेति प्रश्नोपनषदि प्राणादिका "सप्राणमसृजत" इति एतरेयेत्वेकदैव "सइमाँल्लोकानसृजता-

म्भोमरीचिमरमाप इति श्रुतीनां परस्परविरुद्धत्वादप्रामाण्यं स्यादित्याशङ्क्य निराकरोति । न चेति ।

गुणोपसंहारइति । गुणोपसंहारोनाम एकस्यामनेकाशाखासुपठितायां विद्यायां । तत्र तत्र पठितानां गुणानां न्यूनाधिकानामितरेतरंनिष्कृष्य संयोजनम् । यथा वाजसनेयके ऽग्निरहस्ये शाण्डिल्यविद्या श्रूयते "मनोमयः पुरुषः भाः सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्तीति" उभयत्र विद्याभेदाद्विद्यैक्यं निश्चित्य सत्यसङ्कल्पत्वादीनां सर्ववशित्वादीनाञ्चोभयत्रोपसंहरणमेवं प्रकृतेऽपि बोध्यम् । तथाहि ( तस्माद्वाएतस्मादात्मन आकाशः सम्भूत इति तैतरीयश्रुतौ श्रुतानां क्रमस्यावश्यंकल्पनीयत्वम् । नापि "तत्तेजोऽसृत" इति छान्दोग्य श्रुतेर्विरोधः तस्यास्तेजोजनिप्रधानत्वेन श्रुत्यन्तरावगताकाशादित्वनिवारणसामर्थ्याभावात । एकस्य वाक्यस्य व्यापारद्वयासम्भवात् तत्तेजोऽसृजतेत्यत्राकाशाद्वायुरितिवत् क्रमवाचकशब्दाभावाच्चेति । इदानीं व्यक्तस्वरूपं प्रपञ्चयिष्यन् परमेश्वरात् प्रकृतिपुरुष क्षोभकारणमाह तत इत्यादि पञ्चभिः ततः सर्गकाले प्राप्ते परमेश्वरो हरिः स्वेच्छया प्रधानं पुरुषञ्च प्रविश्य क्षोभयामासेतिद्वयोरन्वयः । आत्मेच्छया बहुस्यामिति संकलपात्मिकया-प्रविश्य विषयी कृत्य क्षोभयामास सर्गोन्मुखीचकार प्रधानक्षोभो गुणवैषम्यं प्रवृत्युन्मुखञ्च, पुंसो ज्ञानविकाशः संस्कारोद्बोधश्च । व्ययाव्ययो व्येतीति व्ययः । अव्ययो व्ययरहितः विकारकूटस्थावित्यर्थः यथासन्निधिमात्रेण गन्धक्षोभाय जायते । मनसोनोपकर्तृत्वात्तथासौ परमेश्वरः । ईश्वरः प्रकृति पुरुषयोः क्षोभणेऽपिस्वयमविकार इत्याह यथेति यथागन्धः : किञ्चिद्विकाररहितोऽपि सन्निधिमात्रेणमनसः क्षोभाय सुखदुखादिविकाराय-भवतीत्यर्थः । गन्धदृष्टान्तेन तस्यनिमित्तत्वमेव किमित्याशङ्कायामुपादानमपि स एवेत्याह स एवेति ।

## भाषानुवाद

ब्रह्मा के प्रति श्रीनारायण की उक्ति सृष्टि के पूर्व एक ही अद्वितीय ब्रह्म था, उससे अव्यक्त अक्षर उत्पन्न हुआ अक्षर से महतत्व हुआ उससे अहङ्कार हुआ अहङ्कार से तन्मात्रा उन्हों से महाभूत हुये यह प्रागुपदर्शित श्रुति का अर्थ है। उपदर्शित श्रुति का अर्थ श्रीपराशर महर्षि जी ने श्री विष्णु पुराण सृष्टि प्रकरण में कहा है। प्रधानं पुरुषञ्चैवेति । प्रविश्यात्मेच्छयाहरिः इस श्लोक का अर्थ पूर्व में प्रकाशित हो चुका है।

वेदान्त रत्नमञ्जूषा

पुरोषत्तमः । ससङ्कोच विकासाभ्यां प्रधानत्वेऽपि च स्थितः ॥३

कुञ्चिका

क्षोभकः सन्प्रधानं पुरुषात्मकं स्वयमेव क्षोभयति नहिस्वस्माद्बहिर्भूतं कुलालोमृत्पिण्डमिव "तदात्मानं स्वयमकुरुत आत्मकृतेः 'सो भिध्याय शरीरात्स्वात्" इत्यादिभ्यः न केवलं जगदुपादानं कार्यभूतं जगदपि स एवेत्याह। ससङ्कोचेति सङ्कोचविकासाभ्यां युक्तः प्रधानत्वेऽपिस्थितः सएवेत्यर्थः, विकासाणु स्वरूपैश्च ब्रह्मरूपादिभिस्तथा। व्यक्त स्वरूपञ्च तथा विष्णुः सर्वेश्वरेश्वरः। तथा विकाशाणु स्वरूपैर्व्यष्टि समष्टि रूपैश्च तथा ब्रह्मादि रूपैर्युक्तः सएवव्यक्त स्वरूपः महदादि स्वरूपश्च सृष्टिमाह गुणसाम्यादिति।

वेदान्तरत्न मञ्जूषा

गुणसाम्यात्ततः तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने।
गुण व्यंजन सम्भूतिः सर्गकाले द्विजोतमः ॥ अ० २ श्लो० ३३
प्रधान तत्वमुद्भूतं महान्तं तत्समावृणोत्।
सात्विको राजसश्चैव तामसश्चत्रिधा महान् ।३४।
प्रधान तत्वे न समं त्वचाबीज मिवावृतम्।
वैकारिक स्तैजसश्च भूतादिश्चैव तामसः । ३५ ॥

कुञ्चिका

ततः क्षोभानन्तरं क्षेत्रज्ञ कर्म प्रेरिताद् गुणसाम्यात्, गुण शक्ति साम्य रूपात्प्रधानात्, व्यज्यन्तेऽनेन गुणा इति गुण व्यंजनं महत्तत्वं तस्यसम्भूतिरुद्भवः अभूत्॥३३ प्रधानतत्वमिति उद्भूतं महान्तं तत्प्रधानं समावृणोत् यद्वोद्भूतमितिप्रधानविशेषणं सात्विकमित्यादि सात्विकत्वादिकं प्रदेशभेदेनोद्भूतं गुणत्रयम् ॥ ३४ ॥ प्रधानतत्वेनेति सममन्यूनातिरेकं यथा भवत्येवं त्वचाबीजं यथा आवृतं तथा सात्विकादिस्त्रिविधोद्गतो महान् समन्तादावृत इत्यर्थः वैकारिकः सात्विकःतैजसो राजसः,भूतादिः तामसः वैकारिकपदेनाविकाररूपस्य परमसत्वस्य व्यावृतिः "कामं देवाश्चमुनयः सत्वस्थानृपसत्तम ॥ हीनासत्वेन सूदनेण ततो वैकारिकाः स्मृताः" इति मोक्ष धर्मोक्तः ॥३५॥

वेदान्तरत्न मंजूषा

त्रिविधोयमहङ्कारो महतत्त्वादजायत। भूतेन्द्रियाणां हेतुस्स त्रिगुणत्वा-

न्महामुने। यथा प्रधानेन महान्महता स तथा वृतः॥३६॥ भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकंततः। ससर्ज तन्मात्रादाकाशं शब्दलक्षणम्॥३७। शब्दमात्रं तथाकाशं भूतादिः स समावृणोत्। आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्जह॥३८

## कुञ्चिका

त्रिविध इति भूतेन्द्रियाणां हेतुः स इत्यत्र तामसांशेन भूतानांहेतुः सात्विकांशेनेन्द्रियाणां राजसांशेनोभयोरनुग्राहकः॥३६॥ भूतादि रित्यादि ततो भूतादिर्विकुर्वाणः क्षुभ्यन्ननभिव्यक्तविशेषशब्दगुणकं शब्दतन्मात्रं ससर्ज। शब्दतन्मात्राच्छब्द विशेष लक्षणं स्थूलाकाशमभूदित्यर्थः॥३७॥ शब्दमात्रमिति शब्दमात्रं शब्दतन्मात्रं तथा आकाशं स्थूलाकाशञ्च स भूतादिरावृणोत्। एतेनपूर्वपूर्वतन्मात्रमुत्तरोत्तर तन्मात्रं तद्विशेषञ्चावृणोतीति दर्शितम्। आकाशस्त्विति तन्मात्ररूपं स्थूलाकाशमिव स्पर्श तन्मात्रञ्च ससर्ज॥ ३८॥

## वेदान्तरत्न मञ्जूषा

बलवानभवद्वायुस्तस्यस्पर्शगुणोमतः। आकाशं शब्दमात्रन्तु स्पर्शमात्रं समावृणोत्॥ ३९॥ ततोवायुर्विकुर्वाणो रूपमात्रं ससर्जह। ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते॥ ४०॥ स्पर्शमात्रन्तु वै वायू रूपमात्रं समावृणोत्। ज्योतिश्चापि विकुर्वाणं रसमात्रं ससर्ज॥ ४१॥

## कुञ्चिका

बलवानिति बलवानभवद्वायुः स्पर्शमात्रादितिशेषः स्पर्शः स्पर्श सहितः॥३९॥ तत इति वायुस्तन्मात्ररूपः रूपमात्रं ससर्ज ज्योतिरिति वायो रूपतन्मात्रसहिताद्वायोः स्पर्शतन्मात्ररूपात्स्थूलं ज्योतिरुत्पद्यत इत्यर्थः। अतोऽत्रेदमनुसन्धेयम्। पूर्वपूर्वतन्मात्र सहितादेवोत्तरोत्तरतन्मात्रस्य विशेषोत्पत्तिर्नकेवलातथासति वाय्वादिभूतविशेषाणां तत्तद्गुणाधिक्ययोगात्कारणक्रमेण हि कार्ये गुण सम्भव इति। अत्र पुराणान्तर वचनम् "आकाशं शब्दतन्मात्रं स्पर्श मात्रं समाविशत्। रूपं तथैवाविशतः शब्दस्पर्श गुणावुभौ। शब्दः स्पर्शश्च रूपञ्च रसमात्रं समाविशत्। तस्माच्चतुर्गुणाह्येते विशेषाश्चेन्द्रियग्रहाः" इत्यादि॥ ४०॥ स्पर्श मात्रमिति ज्योतिः रूपतन्मात्रम्॥४१॥

## वेदान्तरत्नमंजूषा

सम्भवन्ति ततोऽम्भांसि रसाधाराणि तानिच। रसमात्राणि चाम्भांसि

रूपमात्रं समावृणोत् ॥ ४२ ॥ विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे। सङ्घातो जायते तस्मात्तस्यगन्धोगुणोमतः ॥ ४३ ॥ तस्मिँस्तस्मिँस्तुतन्मात्रं तेन तन्मात्रतास्मृता ॥ ४४ ॥ तन्मात्राण्य शेषाणि अविशेषास्ततोहिते ॥४५॥

## कुञ्चिका

सम्भवन्तीति। ततोम्भांसि ततो रसतन्मात्रात्पूर्वतन्मात्रत्रयसहितान् ॥ ४२ ॥ विकुर्वाणानीति अम्भांसि रसतन्मात्राणि संघातो भूमिः संहत शब्दादि सर्वगुणकत्वात् काठिन्याद्वा ॥ ४३ ॥ तस्मिन्निति तस्माद्गन्धतन्मात्रापूर्वतन्मात्रचतुष्टयसहितात् तस्मिन्व्योमादौ विशेष रहित शब्दस्पर्शादिगुणमात्रं तेन तस्मिनतत्वे तन्मात्रता सूक्ष्मरूपमितियावत् ॥ ४४ ॥ तदेवाह तन्मात्राणीति। अविशेषाणि विशेषरहितानि ततस्तेन तेशब्दादयोऽविशेषसंज्ञाः ॥ ४५ ॥

## वेदान्तरत्नमञ्जूषा

तैजसानीन्द्रियाण्याहुर्देवा वैकारिकादश। एकादशं मनश्चात्रदेवा वैकारिकाः स्मृता ॥ ४७ ॥

## कुञ्चिका

तैजसानीति। सरसाहङ्कारकार्याणीन्द्रियाणीति केचिदाहुः। देवा मनः सहितानि दशेन्द्रियाणि वैकारिकाः सात्विकाहङ्कारकार्याणीत्यपरे। स्वपक्षमाह। अत्र देवा इति। इन्द्रियाणां देवशब्दवाच्यत्वं तदधिष्ठातृदेवताभिप्रायेण तैजसाहङ्कारस्तु वैकारिकतामसयोः स्वकार्यकारणे प्रवर्त्तकः सत्वतमसोः केवलं रजः प्रवर्त्तकं तत्रेति वायूक्तेः। अहङ्कारस्येन्द्रियाणि प्रति निमित्तत्वमेव भूतानामेवोपादानत्वम्। "अन्नमयंहि सौम्यमनः, आपोमयः प्राणः तेजोमयी वाक्" इत्यादि श्रुतेरिति केचिदाहुस्तदयुक्तम्, अहङ्कारस्यैवोपादान त्वेऽपि भूतानामाप्यायकत्वेनापि तथानिर्देशोपपत्तेः। अयमत्रेन्द्रियस्य सृष्टि क्रमः ॥ ४७ ॥

## वेदान्तरत्नमंजूषा

इह च तन्मात्राणां विषयाणाञ्च समान संज्ञास्मरणादभेदशङ्का नकार्या। पूर्वेषां भूतकारणत्वेन द्रव्यत्वम्। उत्तरेषाञ्च तदाश्रितत्वेन तद्गुणत्वमितिविवेकः। अन्यथा तेषामेव भूतोपादानत्वं तद्गुणत्वञ्चमहद्विरुद्धमेव। तत्र प्रकृतिमहदहङ्काराः, पंचभूतानि च स्थूलदेहस्योपादानकारणानि। इन्द्रियाणि भूषणे रत्ना-

नीव तदाक्रम्य स्थितानि पंचतन्मात्राणि, मनोदशेन्द्रियाणि प्राणश्च सूक्ष्म देहस्योपादानानि । तत्र प्राणस्य स्पर्शतन्मात्रकार्य्यत्वात् तेनैकीकृत्य ।

### कुञ्चिका

प्रागुक्तोदाहृत विष्णुपुराणवाक्येषु तन्मात्राणां विषयाणाञ्च रूपरसगन्ध-स्पर्शादीनां समानसंज्ञा श्रवणात्तयोरभेदस्स्यादित्यत आह । इहचेति । " पूर्वेषां " तन्मात्राणाम् ) " उत्तरेषां " रूपरसादि विषयाणाम् विपक्षे बाधक तर्कमाह अन्यथेति विपक्षेबाधकतर्कमाह अन्यथेति पूर्वेषां द्रव्यत्वमुतरेषान्तुतद्गुणत्वानङ्गीकारइत्यर्थः । शरीरंद्विविधं स्थूलं सूक्ष्मञ्चेति तत्राद्यस्यकारणान्याह तत्रेति "तत्र" प्रकृतनिरूपणी-यार्थेषु । तत्रदृष्टान्तयति, इन्द्रिाणीति, शरीरस्यकारणान्याह, मनो दशेद्रियाणीति तदुक्तं । पञ्चप्राणमनोबुद्धि दशेन्द्रियसमन्वितम् ॥ अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति ।

### भाषानुवाद

प्रकृति महतत्व और अहंकार पञ्चमहाभूत इन्हों से स्थूल शरीर उत्पन्न होता है । इस शरीर में भूषणों में रत्न की तरह दश इन्द्रिय खचित हैं । पञ्चतन्मात्रा मन दश इन्द्रिय प्राण इन्हों से सूक्ष्म शरीर उत्पन्न होता है ।

### वेदान्तरत्न मंजूषा

श्रुतौ षोडशसंख्यात्वव्यपदेशः । इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तंगच्छन्तीत्यादि । शरीर लक्षणञ्च चेतननियताधेयत्वेसतितद्भो-गायतनत्वं, चेतन नियताश्रयत्वेसति तदपृथक् सिद्धत्वं चेतननियतशेषत्वंच । शरीरं द्विविधं–नित्यानित्यभेदात् । तत्र नित्यं सर्वमंगलाश्रयं ध्यानविषयं ध्या-तृणां सर्व पुरुषार्थ कारणं श्रीरमाकान्तस्य विग्रहम् । नित्यमुक्तानां. विष्वक्सेन-नन्द सुनन्दनादिपार्षदानां स्वाभाविकं गरुडाद्याकारं च तच्चोपरिष्टान्निरूप-यिष्यामः । अनित्यं द्विविधं, अकर्मजं तज्जञ्चेति । आद्यमीश्वरस्य विराडादि-रूपं, गरुडादीनां मुक्तानामीश्वरेच्छातन्त्रस्वेच्छयातत्तदाकारंच । कर्मजन्यं च कर्म तारत्तस्यादनेक विधम् । स्थावर जंगमादिभेदात् । स्थावरं भूधरवृक्षादिरूपम् । जंगमं देवतिर्य्यङ्मनुष्य नारक्यादि रूपम् । तदेव सामान्यतो जरायुजाण्डजोद्भिज्जादिभेदभिन्नं च बोध्यम् । किञ्चमहदादिशरीरा-

न्दं सर्वमपि तत्तदवस्थापन्नं तदभिन्नमेव। तत्कार्यत्वात्। यथामृत्पिण्डजन्यं-मृण्मयं घटाद्यवस्थापन्नमपि मृदभिन्नमेव तद्वत्। अवस्थान्तरभाक्त्वेनैव नाम-रूप संख्याव्यवहारादि भेदसिद्धिः। कार्यकारणयोरभेदात्। तदनन्यत्वमारम्भण शब्दादिभ्य इति न्यायात्। कारणद्रव्यमेवावस्थान्तरमापन्नं सद्रूपश्च कार्यत्वे-नाभिधीयते।

## कुञ्चिका

नन्वत्रश्रुति विरोधः शङ्कनीयइत्याह आह तत्र प्राणस्येति श्रुतिमुदाहरति इमा इति अस्यपरिद्रष्टुरनुभवितुर्भोक्तुर्जीवस्य भोगोपकरणभूता इमा षोडशापिकलाः सप्राण-मसृजत प्राणाच्छ्रिद्धंखं वायुर्ज्योतिरापपृथ्वीन्द्रियंमन इति श्रुत्युपदिष्टाः निरूपाधिक पुरुषशब्दवाच्यं पुरुषं वासुदेवं प्राप्यास्तं गच्छन्ति तत्र हेतुमाह, पुरुषायणा इति सङ्कल्पाधीनस्थिति प्रवृत्तिका इति श्रुत्यर्थः।

शरीरस्यलक्षणमाह शरीरेति। चेतनेति भोगायतनत्वं भोगसाधनविशेषत्वम्। विशेष्यमात्रोक्तौ भोगायतनेषु प्रासादादिष्वतिव्याप्तिस्तद्वारणाय विशेषणोपादानम्। नियतत्वं व्याप्यत्वं तच्चचेतनत्वाभाववदवृत्तित्वम् चेतनत्वाभाववति घटादौ शरीर-निष्ठाधेयत्वस्यावृतित्वाल्लक्षणसमन्वयः। भूतलनिष्ठाधारतानिरूपिताधेयत्वस्य चेतन-भोगायतनत्वस्य च घटमठादिषु सत्वात्तत्रशरीरलक्षणस्यातिव्याप्तिवारणाय चेतन-व्याप्यत्वमाधेयत्वविशेषणम्। तन्निवेशे तु चेतनत्वाभाववति घटादौ घटनिष्ठा-धेयत्वस्य वृत्तित्वान्नदोषः। विशेषणमात्रोक्तौ चेतननियताधेयत्वस्यात्मनोधर्मभूतज्ञाने-सत्वात्तत्रापि शरीरव्यवहारापत्तिस्तन्निरासाय विशेष्योपादनम्। एतेन चेतनशरीर-योराधाराधेयभावः सूचितः। लक्षणान्तरमाह चेतनेति। चेतनापृथक्सिद्धत्वस्य तदीयधर्म भूतज्ञानादौ सत्वात्तत्रातिव्याप्तिस्तद्व्युदासाय सत्यन्तम्। नहि ज्ञानाश्रयत्वं ज्ञानेऽस्ति येन तत्रातिव्याप्तिः स्यादतः सत्यन्तेनतद्युदासः। गुणापृथक्सिद्धेगुणिनिघटादावति व्याप्ति-वारणाय चेतनेखंडशरीरादावतिव्याप्ति वारणायनियतेति।

चेतनशरीरयोः शेषिशेषभावमभिप्रेत्य लक्षणान्तर माह। चेतनेति। नित्या-नित्यभेदेन शरीरस्य द्वैविध्यमाह। शरीरमिति तमुदाहरतिनित्यमिति।

अनित्यशरीरं विभजते। अनित्यमिति तज्जञ्चेति कर्मजञ्चेत्यर्थ आद्यमुदा-हरति ईश्वरस्येति द्वितीयमुदाहरति कर्मजन्यञ्चेति। स्थावरमुदाहरति। भूधरेति।

जङ्गमंदर्शयति देवेति स्थावरजङ्गमादीनां प्रकारान्तरेण संज्ञान्तरमाह तदेवेमि, स्थावरं जङ्गमञ्चेत्यर्थः ।

जरायुजमिति । गर्भवेष्टनचर्मपुटकं जरायुः तज्जन्यं मानुषादीनाम् । अण्डजं सर्पादीनाम् । उद्भिज्जास्तरुगुल्माद्याः महदहङ्कार तन्मात्रभूतेन्द्रियतदारब्धं चतुर्दशभुवनात्मकंकार्यजातं सर्वमपि ब्रह्माभिन्नमित्याह, किञ्चेतितत्रहेतुमाहतत्कार्य्येति उक्तार्थं दृष्टान्तेन द्रढयति यथेति । अवस्थान्तरभाक्त्वेन नामत्वेनरूपत्वेनब्रह्मणोभिन्नत्वमपिनिखिलप्रपञ्चस्येत्याह । अवस्थान्तरेति । नामरूपेति घटपटइतिनामा मृत्तन्तव इतिनामान्तरं प्रतीयते सङ्ख्येति, पिण्डाकारमेक सङ्ख्याकं कारणं कम्बुग्रीवपृथुवध्नोदरादिकारमनेकसङ्ख्याकं चकार्यम् । कार्यकारणयोरनन्यत्वं सूत्रमुखेनप्रमाणयति । तदनन्यत्वमिति । तस्मात्परमकारणाचिदचिच्छक्तिमतोऽपरिच्छिन्नादेकाद्वितीयादिशब्दार्थात्कारणावस्थयाकार्यावस्थयाच स्वेच्छयैवास्थातुंसमर्थात् सर्वप्रपञ्चपूर्ववर्तिनो ब्रह्मणः सकाशाच्चिद ।

## भाषानुवाद

इन्हों में प्राण का स्पर्श तन्मात्र में अन्तर्भाव करने से पंचतन्मात्र मन और दश इन्द्रिय ये षोडश कला कह लाती हैं। ये षोडशकला भगवान् को प्राप्त होकर अस्त हो जाती हैं। क्योंकि ये पुरुषायणाः अर्थात् इन षोडश कलाओं की प्रवृत्ति और स्थिति भगवान् के सङ्कल्पाधीन हैं। चेतन नियताधेयत्वे सति तद्भोगायतनत्वं यह शरीर का लक्षण हैं। इसका यह अर्थ है कि चेतन के नियत ( व्याप्य ) अधेयतावान हों और चेतन के भोग का स्थान हो चेतन आधार हैं शारीर आधेय है। शरीर का दूसरा लक्षण यह है कि चेतन नियताश्रयत्वे सति तदपृथक्सिद्धत्वमिति। चेतन का नियम से आधार हो चेतन के बिना जिसकी स्थिति प्रवृत्ति न हो, चेतन के सर्वदा अधीन हो, वह शरीर कहलाता है। चेतन शेषी है अर्थात् अंशि है शरीर शेष है अर्थात् अंश है। इस भाव से यह शरीर का तृतीय लक्षण हैं चेतन नियतशेषत्वमिति जो चेतन का नियम से शेष हो वह शरीर कहलाता है। शरीर दो प्रकार के हैं एक नित्य है दूसरा अनित्य है। सर्व मङ्गलों के आश्रय योगिजनों के ध्यान का विषय ध्यान करने वाले भक्तों के सकल पुरुषार्थप्रद रमाकान्त श्रीभगवान् का दिव्यमंगल विग्रह नित्य हैं और नित्यमुक्त पार्षदो का भी विग्रह नित्य हैं और गरुड़ आदिकों का आकार नित्य

सिद्ध स्वाभाविक हैं। अनित्य शरीर दो तरह के हैं। एक अकर्मज अर्थात् कर्मजन्य नहीं हैं। दूसरा कर्मजन्य हैं। परमेश्वर का विराट् शरीर कर्मजन्य नहीं हैं और मुक्तों का शरीर भी अकर्मज है उन्हों का शरीर भगवान् की इच्छा के अधीन जो मुक्तपुरुषों की इच्छा उसके अधीन हैं और कर्म जन्य शरीर कर्मों के तारतम्य से अनेक तरह के हैं वृक्ष आदिकों का शरीर स्थावर हैं। देवमनुष्य प्रभृति का शरीर जङ्गम हैं।

## वेदान्तरत्नमञ्जूषा

**सदेव सोम्येदमग्रआसीदित्यादिसत्कार्य्य वादिनी श्रुतिः। अन्यथा कार्य्योत्पत्तिरेव नस्यात्। नहि गगनकुसुमादेरुत्पत्तिः क्वापि केनचित् दृष्टा श्रुता वा नासतो विद्यते भावः। असतः सम्भवः कुत इत्यादि स्मृतेः तस्मात्सदेव कार्य्यमुत्पद्यते कारणात्मकञ्चेतिसिद्धान्तः।**

## कुञ्चिका

चिद्रूपस्य परिच्छिन्नस्यानेकनामरूपस्य परतन्त्रस्य कार्य्यस्यानन्यत्वमित्यर्थः तत्रप्रमाणमाह "आरम्भणशब्दादिभ्य" इति। आरम्भणः शब्द आदि येषां वाक्यानां तान्यारम्भणशब्दादीनि वाक्यानि तेभ्य "वाचारम्भणं बिकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिभ्य इति सूत्रार्थः कारणस्य सद्रूपत्वात् कार्य्यमपिसद्रूपं कारणमेवावस्थान्तरापन्नं कार्यमित्युच्यते इत्याह। कारणद्रव्यमिति तत्र श्रुतिं प्रमाणयति सदेवेति॥ यथा कारणं ब्रह्म त्रिपुकालेपु सत्वं न व्यभिचरति तथा कार्य्यरूपं विश्वमपि त्रिपु कालेपु न व्यभिचरतीति परैरपितथोक्तेः। कारणस्यसद्भावे सत्येव कार्योपलब्धिर्दृष्टचरा यथा मृदादिभाव एव घटादिकार्योपलम्भो नान्यथेति भावः॥ विपक्षे वाधकतर्कमाह। अन्यथेति। कार्यस्यासत्व इत्यर्थः। एतेन कार्यं मिथ्याऽनिर्वचनीयं वा असद्रूपम्वेति पक्षो निरस्तः। उक्तार्थं प्रमाणेन द्रढयति। नासत इति। असतः वस्तुनः भावः सत्ता न विद्यत इत्यर्थः। नच सत्कार्यवादे कारकव्यापारं वैयर्थ्यं शंक्यम् कारणस्य कार्य्याकारव्यवस्थापकत्वेनैव तस्य सार्थकत्वात् कारणमेव हि कार्य्याकारं प्रतिपद्यमानं कार्यमित्युच्यते कार्य्याकाराणां कारणात्मकत्वनियमात्। "ऐतदात्म्यमिदं सर्वमिति श्रुतेः" वासुदेवात्मकान्याहुरिति स्मृते रित्यादिभ्यः कार्यस्य प्रागुत्पत्तेः सत्वनिश्चयादिति भावः॥ निगमयति तस्मादिति।

तान्यारम्भणशब्दादीनि वाक्यानि तेभ्य "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिभ्य इति सूत्रार्थः कारणस्य सद्रूपत्वात् कार्य्यमपिसद्रूपं कारणमेवावस्थान्तरापन्नं कार्यमित्युच्यते इत्याह। कारणद्रव्यमिति तत्र श्रुतिं प्रमाणयति सदेवेति ॥ यथा कारणं ब्रह्म त्रिषु कालेषु सत्वं न व्यभिचरति तथा कार्य्यरूपं विश्वमपि त्रिषु कालेषु न व्यभिचरतीति परैरपितथोक्तेः। कारणस्यसद्भावे सत्येव कार्योपलब्धिर्दृष्टचरा यथा मृदादिभाव एव घटादिकार्योपलम्भो नान्यथेति भावः ॥ विपक्षे बाधकतर्कमाह। अन्यथेति। कार्यस्यासत्व इत्यर्थः। एतेन कार्यं मिथ्याऽनिर्वचनीयं वा असद्रूपम्वेति पक्षो निरस्तः। उक्तार्थं प्रमाणेन द्रढयति। नासत इति। असतः वस्तुनः भावः सत्ता न विद्यत इत्यर्थः। नच सत्कार्यवादे कारकव्यापारं वैयर्थ्यं शंक्यम् कारणस्य कार्य्याकारव्यवस्थापकत्वेनैव तस्य सार्थकत्वात् कारणमेव हि कार्य्याकारं प्रतिपद्यमानं कार्यमि युच्यते कार्य्याकाराणां कारणात्मकत्वनियमात्। "ऐतदात्म्यमिदं सर्वमिति श्रुतेः" वासुदेवात्मकान्याहुरिति स्मृते रित्यादिभ्यः कार्यस्य प्रागुत्पत्तेः सत्वनिश्चयादिति भावः ॥ निगमयति तस्मादिति।

## वेदांतरत्नमंजूषा

प्रकृत्यादीनि च जीवानां भोग्यं भोगोपकरणं भोगस्थानानि तत्र भोग्यं शब्दादिकं तद्विशिष्टद्रव्यमन्नपानादिकं च भोगोपकरणं शरीरेन्द्रियमनोबुद्ध्यादि भोगस्थानानिब्रह्माण्डान्तर्गतचतुर्दशभुवनानि तान्येव प्रकृत्यादीनि श्रीपुरुषोत्तमस्य क्रीडा तदुपकरण तत्स्थानानि, भोग्यानुकरण तदुपकरण तत्स्थानानि इति विवेकः ब्रह्माण्डञ्च कपित्थफलाकारं पञ्चीकृत पंचमहाभूतारब्धं चतुर्दशलोकगर्भकं प्राकृतं द्रव्यं मुमुक्षुहेयंव तथाच सन्यासप्रकरणपठितारण्यश्रुतिः। भूर्लोक भुवर्लोक स्वर्लोक महर्लोक जनलोक तपोलोक सत्यलोकं चातल वितल सुतल तलातल रसातल महातल पाताल ब्रह्माण्डञ्च विसर्जयेदिति तस्य वैचित्र्यसंस्थानप्रकारस्तु वैष्णवे।

## भाषानुवाद

कदापि नहीं हो सकती हैं। यथा आकाश के पुष्पों की उत्पत्ति श्रवण और दृष्टि गोचर नहीं होती हैं। इसमें "नासतो विद्यते भावः। असतः सम्भवः कुतः" यह स्मृति प्रमाण है असत वस्तु का भाव नहीं होता है। असत वस्तु का सम्भव नहीं हो

सकता है। इससे साबित हो चुका है कि कार्य सत्य है और कार्य को मिथ्या अनिर्वचनीय जो मानते हैं उन्हों का मत भी खण्डन हो चुका है। प्रकृति का कार्य जीवों के भोग्य और भोग्य का उपकरण भोग स्थान अनेक प्रकार के हैं। उन्हों में शब्द स्पर्श आदि पाँच विषय और अन्न वस्त्र अलंकारादि भोग्य हैं। शरीर इन्द्रिय और मन बुद्धी आदि भोग के उपकरण हैं ब्रह्माण्ड में चतुर्दश लोक भोग के स्थान हैं। प्रकृति आदि भगवान की क्रीडा के उपकरण हैं। और भोग अनुकरण के स्थान हैं। जिसके मध्य भाग में चौदह लोक हैं और कैंथ फल के समान आकार वाला पञ्चिकृत महाभूतों से निर्मित प्राकृत द्रव्य को ब्रह्माण्ड कहते हैं। उन लोकों के यह नाम हैं—१ भूलोक २ भुवलोक ३ स्वर्लोक ४ महर्लोक ५ जनलोक ६ तपोलोक ७ सत्यलोक और १ अतल २ वितल ३ सुतल ४ तलातल ५ रसातल ६ महातल ७पाताल हैं इन्हों के भोग्य वस्तुओं में आसक्ति मुमुक्षु पुरुषों की नहीं होनी चाहिए और सर्वथा हेय हैं।

## वेदान्तरत्न मञ्जूषा

श्रीपराशरेण पठितः। तथाहि—"जम्बूद्वीपः समस्तानामेतेषां मध्यमः स्थितः। तस्यापिमेरुर्मैत्रेय मध्ये कनकपर्वतः। भूपद्मस्य स शैलोऽसौ कर्णिका इव संस्थितः। जम्बूद्वीपं समावृत्य लक्षयोजनविस्तरः। मैत्रेयवलयाकारः स्थितः क्षारोदधिर्वहिः ॥१॥ संवेष्टय क्षारमुदधिं प्लक्षद्वीपः तथा स्मृतः। तथैवेक्षुरसोदेन परिवेषानुकारिणा। शाल्मलेन समुद्रोऽसौ द्वीपेनेक्षुरसोदकः। विस्तारद्विगुणेनाथ सर्वतः संवृतः स्थितः। एषद्वीपः समुद्रेण सुरोदेन समावृतः। विस्तारः शाल्मलस्यैव समेन तु समन्ततः ॥३॥ सुरोदकः परिवृतः कुशद्वीपेन सर्वतः। शाल्मलस्यचविस्ताराद्द्विगुणेन समन्ततः। तत्प्रमाणेन द्वीपोसौ घृतोदेन समावृतः ॥४॥ घृतोदश्च समुद्रो वै क्रौञ्चद्वीपेन संवृतः। कुशद्वीपस्यविस्तारात् द्विगुणोयस्य विस्तरः। क्रौञ्चद्वीपः समुद्रेणदधिमण्डोदकेनच। आवृतः सर्वतः क्रौञ्चद्वीपतुल्येनमानतः ॥५॥

## कुञ्चिका

"एतेषां" प्लक्षशाल्मलिकुशक्रोञ्चशाकपुष्कराख्यानाम् भूपद्मस्येति। अतएव-मूर्ध्निविस्तृतत्वान्मूलेसङ्कुचितत्वाच्च भूमध्यावस्थानाच्च भूरूपस्य पद्मस्य कर्णिका कारेण संस्थित इत्यर्थः।

## भाषानुवाद

इस प्रकार सन्यास श्रुति में कहा है। जगत की विचित्र रचना श्रीपराशर महर्षिजी ने श्रीविष्णु पुराण में वर्णन करी हैं वह यह हैं कि पद्म के समान आकार वाला पद्म शत कोटि योजन भूलोक है उसमें लक्ष योजन जम्बू द्वीप है उसकी कर्णिका के स्थान में समेरु पर्वत है वह जम्बू द्वीप नव खण्डों से आवृत हैं। उसके दक्षिण भाग में भरत आदि तीन खण्ड हैं। उत्तर भाग में रम्य कादि तीन खण्ड हैं। पूर्व भाग में भद्राश्व खण्ड है उसके पश्चिम भाग में केतुमाल हैं। मध्य में इलावृत खण्ड हैं। इस प्रकार नव खण्ड सहित लक्ष योजन परिमित जम्बू द्वीप हैं। जम्बू द्वीप के चारों तरफ वलय के आकार लक्ष योजन परिमित क्षार समुद्र हैं। १ जम्बू द्वीप से द्विगुण दो लक्ष योजन परिमित प्लक्ष द्वीप हैं। इसमें भी सप्त खण्ड हैं। वह दो लक्ष योजन परिमित इक्षुरस समुद्र से घिरा हुआ है। २। चार लक्ष योजन परिमित सप्त खण्ड से विभूषित शाल्मलि द्वीप है। ३। वह चार लक्ष योजन परमित सुरा के समुद्र से घिरा हुआ है। यह आठ लक्ष योजन परिमित घृत के समुद्र से वेष्टित हैं। ४। षोडश लक्ष योजन परमित सप्त खण्ड का क्रौंच द्वीप है। यह द्वीप के समान दधि मंड समुद्र से व्याप्त हैं ॥५॥

## वेदान्तरत्नमञ्जूषा

दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः। क्रौञ्चद्वीपस्यविस्तारात् द्विगुणेनमहामुने। शाकद्वीपस्तु मैत्रेय क्षीरोदेन समावृतः। शाकद्वीपप्रमाणेन वलयेनेव वेष्टितः ॥६॥ क्षीराब्धिः सर्वतो ब्रह्मन् पुष्कराख्येन वेष्टितः। द्वीपेन शाकद्वीपात्तु द्विगुणेनसमन्ततः। स्वादूदकेनोदधिना पुष्करः परिवेष्टितः। समेन पुष्करस्यैव विस्तारान्मण्डलं तथा ॥७॥ स्वादूदकस्य परितोदृश्यतेऽलोकसंस्थितिः। द्विगुणाकाञ्चनीभूमिः सर्वजन्तुविवर्जिता। लोकालोकस्ततः शैलो योजनायुतविस्तरः। ततस्तमः समावृत्य तं शैलं सर्वतः स्थितम्।

## कुञ्चिका

स्वादूकस्येति। लोकस्य जननिवासभूतस्य सप्तद्वीपात्मकस्य संस्थितिर्मर्यादाभूतस्वर्णभूमिः। अलोकसंस्थितिरितिपदच्छेदे लोकसंस्था न रहिता दर्पणाकारा सा च लोकान्मेरोरभितः स्थितान्सप्तलक्षपञ्चकोटिमितादद्विगुणा सचतुर्दशलत्रदशकोटिरित्यर्थः। लोकालोक इति। ततो लोकालोकाद्रिः। एवं संहत्यमेरोरेकतो लोकालोकान्तं

कोट्योद्वादशलक्षाणि सप्तषष्टिः । पञ्चाशत्सहस्राणि एतेनालोकपरिमाणं व्याख्यातमिति भागवतोक्त्या किञ्चिदूनसार्द्धद्वादशकोट्याधिकमालोकाख्यम् ।

### भाषानुवाद

३२ बत्तीस लक्ष योजन का शाक द्वीप हैं इसमें सप्त खण्ड हैं यह द्वीप अपने जमान क्षीर सागर से घिरा हुआ है ॥६॥ ६० लक्ष योजन का पुष्कर द्वीप है यह अपने तुल्य मधुर जल समुद्र से परिवेष्टित हैं ॥७॥ वह लोकालोक पर्वत से घिरी हुई हैं। यह पर्वत तम से घिरा हुआ है। तम अण्डक टाह से घिरा हुआ है।

### वेदान्त रत्नमञ्जूषा

तमश्चाण्डकटाहेन समन्तात् परिवेष्टितम् । पञ्चाशत् कोटिविस्तारा सेयमुर्वीमहामुने । दशसाहस्र मेकैकं पातालं चापिसत्तम । अतलं वितलं चैव तितलं च गभस्तिमत् । महाख्यं सुतलं चापि पातालं चापिसप्तमम् । ततश्च नरका विप्र भुवोधः सलिलस्य च । पापिनो येषु पात्यन्ते ताञ्छृणुष्व महामुने । अधःशिरोभिर्दृश्यन्ते नारकैर्दिविदेवताः । देवाश्चाधोमुखान् सर्वानधः पश्यन्ति नारकान् । रविश्चन्द्रमसोर्यावन्मयू खैरवभास्यते । ससमुद्र सरिच्छैला तावतीपृथिवीस्मृता । यावत्प्रमाणं पृथिवी विस्तार परिमण्डलात् । नभस्तावत् प्रमाणं वै व्यास मण्डलतो द्विज । भूमेर्योजनलक्षे तु सौरं मैत्रेय मण्डलम् । लक्षाद्दिवाकरस्यापि मण्डलंशशिनः स्थितम् ।

### भाषानुवाद

इस पृथिवी का विस्तार पञ्चाशत कोटि योजन हैं। यह दक्षिण उत्तर पूर्व पश्चिम की रचना है। पृथिवी के नीचे अतल वितल आदि सप्त लोक हैं। उन्हों के नीचे रौरव आदि इक्कीस नरक हैं। यह पापी जनों के पाप फल भोगने के स्थान हैं। इन्हों से परै अन्धकार है उससे परै गर्भोदक हैं उससे परै अण्डकटाह हैं। यह नीचे की रचना है। जहां तक मनुष्यों की पाद गति हैं वहाँ तक भूलोक हैं। भूलोक के ऊपर लक्ष योजन सूर्य मण्डल हैं। भूमि सूर्य के मध्य देश अन्तरीक्ष भुवलोक हैं। वहाँ पर सिद्ध रहते हैं। उसके ऊपर चन्द्र मण्डल है।

### वेदान्तरत्न मंजूषा

पूर्णेदशसहस्रे तु योजनानां निशाकरात् । नक्षत्रमण्डलं कृत्स्नमुपरिष्टात्

प्रकाशते। द्वे लक्षे चोत्तरे ब्रह्मन् बुधोनक्षत्रमण्डलात्। तावत्प्रमाणभागे तु बुध स्याप्युशनास्थितः। अङ्गारकोऽपिशुक्रस्यतत्प्रमाणे व्यवस्थितः। लक्षद्वयेतु भौमस्य स्थितोदेवपुरोहितः। सौरिर्बृहस्पतेश्चोर्ध्वं द्विलक्षे सम्यगास्थितः। सप्तर्षि मण्डलंतस्माल्लक्षमेकं द्विजोत्तम। ऋषिभ्यस्तु सहस्राणांशतादूर्ध्वं व्यवस्थितः। मेढ़ीभूतः समस्तस्य ज्योतिश्चक्रस्यवैध्रुवः। ध्रुवादूर्ध्वं महर्लोकोयत्रते कल्पवासिनः। एक योजनकोटिस्तु यत्रतेकल्पवासिनः। द्वेकोटीतुजनोलोको-यत्रतेब्रह्मणः सुताः। सनन्दनाद्याः कथितामैत्रेयामलचेतसः। चतुर्गुणोत्तरेचोर्द्ध्व-जनलोकात् तपः स्मृतम्। षड्गुणेन तपो लोकात् सत्यलोको विराजते।

भाषानुवाद

उसके ऊपर नक्षत्र मण्डल हैं। उसके ऊपर बुध है उसके ऊपर शुक्र है उसके ऊपर मंगल उसके ऊपर वृहस्पति उसके ऊपर शनीचर है उसके ऊपर सप्त ऋषि हैं। उसके ऊपर ध्रुवजी ज्योनि चक्र की मढ़ी हैं। सूर्य से ध्रुव लोक तक चौदह लक्ष योजन देश स्वर्ग लोक है। उसके ऊपर दो कोटि योजन ऊँचा जनलोक हैं। उसके ऊपर चतुर्गुण ऊँचा तपो लोक हैं।

वेदान्तरत्नमंजूषा

पदगम्यं तु यत्किञ्चिद्वस्त्वपि पृथिवीमयम्। सभूर्लोकः समाख्यातो विस्तरोऽस्यमयोदितः। भूमिसूर्यान्तरंयत्तु सिद्धादिमुनिसेवितम्। भुवर्लोकस्तु सोऽप्युक्तो द्वितीयोमुनिसत्तम। ध्रुवसूर्यान्तरं यच्च नियुतानि चतुर्दश। स्वर्लोकः सोऽपिगदितोलोक संस्थान चिन्तकैः। त्रैलोक्यमेतत्कृतकं मैत्रेय परिपठ्यते। जनस्तपस्तथा सत्यमितिचाकृतकं त्रिकम्। कृतकाकृतकयोर्मध्ये महर्लोक इति स्मृतः। शून्योभवतिकल्पान्ते योऽत्यन्तं न विनश्यति। एते सप्तमयालोका मैत्रेय कथितास्तव। पातालानि च सप्तैव ब्रह्माण्डस्येव विस्तरः। एतदण्डकटाहेन तिर्य्यक्चोर्द्ध्वमधस्तथा। कपित्थस्य यथा वीजं सर्वतोवै समावृतम्। दशोत्तरेण पयसामैत्रेयांण्ड च तद्वृतम्। स चाम्बुपरिधानोऽसौवह्निनावेष्टितोवहिः।

वह्निश्च वायुनावायुर्मैत्रेय नभसावृतः। भूतादिनानभः सोपिमहतापरि-वेष्टितः। दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्तवै। महान्तं च समावृत्यप्रधानं

समवस्थितम्। अनन्तस्य न तस्यान्तः संख्यानं चापिविद्यते। तदनंतम संख्यातं प्रमाणं चापिवै यतः। हेतुभूतमशेषस्य प्रकृतिः सामहामुने। अण्डानान्तु सहस्राणां सहस्राण्ययुतानिच। ईदृशानां तथातत्रकोटिकोटिशतानिच इति

अस्यायमर्थः पद्माकारा पञ्चाशत्कोटि योजन परिमाणिकाभूः। तत्रलक्ष योजन परिमाणको जम्बूद्वीपः। तन्मध्ये कर्णिकाकारोमेरुः। स परितो नवभिर्वर्षैरावृतः। तस्यदक्षिणतो भारतादीनि त्रीणिवर्षाणि। उत्तरतोरम्यकादीनित्रीणि। पूर्वतोभद्राश्वम्। पश्चिमतः केतुमालम्। मध्ये चेलावृतवर्षम्। एतत्स्य वर्षात्मको लक्षयोजन परिमाणकोऽयं जम्बूद्वीपस्तत्परिमाण केनक्षारोदकार्णवेनवृतः।

## कुञ्चिका

श्रीपराशर पठितानांश्लोकानां भावाथमाह अस्यायमथ इत्यादिना।

## वेदान्तरत्न मञ्जूषा

सोऽर्णवो द्विगुणेन सप्तवर्षात्मकेन प्लक्षद्वीपेन। सोपितत्परिमाणकेने क्षुरसार्णवेन ॥ २ ॥ सोऽर्णवो द्विगुणेन सप्तवर्षात्मकेन शाल्मलद्वीपेन। सचतत्परिमाणकेन सुरार्णवेन ॥ ३ ॥ सोऽर्णवस्तद्द्विगुणेन सप्तवर्षात्मकेन कुशद्वीपेन। सोपितत्परिमाणकेन घृतार्णवेन ॥ ४ ॥ सोपि द्विगुणेन सप्तवर्षात्मकेन क्रौंचद्वीपेन। सोपितत्परिमाणकेन दधिमण्डोदार्णवेन ॥ ५ ॥ सोर्णवो द्विगुणेन सप्तवर्षात्मकेन शाकद्वीपेन। सोपितत्परिमाणकेन क्षीरार्णवेन ॥ ६ ॥ क्षीराब्धिश्चतद्द्विगुणेन द्विवर्षात्मकेन पुष्करद्वीपेन। सचतत्परिमाणकेन मधुर जलार्णवेन वेष्टितः ॥ ७ ॥ सप्तद्वीपात्मकोयम् भूभागः सार्णवः स्वस्माद् द्विगुणीकृतया कांचनभूम्यावृतः। साचलोकालोकेन भूधरेण। सचान्धेन तमसा। तत्तमोगर्भोदकेन। तदुदकं चाण्डकटाहेनेति तिर्यक् संस्थानप्रकारः। तस्या अधस्तात् पूर्वोक्ता अतलादयः। सप्तलोकास्तेषां मध्ये रौरवादय एक विंशति नरकाः पापात्मक कर्मफलभोग भूमयस्ततोऽधोऽन्धं तमस्ततोगर्भोदकं, ततोऽण्डकटाह इत्यधःसंस्थानप्रकारः ॥

अथ पादगम्यपृथिवीमयः प्रदेशो भूर्लोकः ॥ १ ॥ तदुपरि लक्षयोजनात् सूर्यमण्डलम्। तावत्पर्यन्तप्रदेशः सिद्धादिमुनिसेवितो भुवर्लोकः ॥ २ ॥

तदुपर्युपरिचन्द्रनक्षत्रबुधशुक्रभौमबृहस्पतिसप्तर्षिमण्डलानि । तदुपरि ध्रुवो ज्योतिश्चक्रस्य मेढीभूतः सूर्यमण्डलात् ध्रुवपर्यन्तो देशश्चतुर्दशलक्षयोजन-बिस्तीर्णः स्वर्लोकः ॥ ३ ॥ तदुपरि कोटियोजनोच्छ्रायो महर्लोकः ॥४॥ तदुपरि द्विगुणोच्छ्रायो जनलोकः ॥ ५ ॥ तदुपरि तच्चतुर्गुणस्तपोलोकः ॥ ६ ॥ तदुपरि द्वादशकोटयुच्छ्रायः सत्यलोकः ॥ ७ ॥ तत्तस्तमस्ततोगर्भोदकं ततोऽण्डकटाहः । सप्तसागरमानस्तु गर्भोदकस्तदनंतरम् । कोटियोजनमानस्तु कटाहः संव्यवस्थितः इत्यादिवचनात् कोटियोजनोच्छ्रायोऽण्डकटाहः । तच्च ब्रह्माण्डं दशगुणोत्तरोत्तरावरणैः सप्तभिरावृतम् । इत्थं ह्येकाण्डसन्निवेश उक्तः ।

ईदृशान्यनन्तकोटिब्रह्माण्डानि ईश्वरविभूत्यात्मके प्रधाने अर्णवोदके जलबुद्बुदानीव भ्रमन्ति । अतएव तस्याप्यनन्तत्वम् । तत्र चतुर्मुखावासना-सृष्टि साक्षादीश्वरकृता तदुरा च चतुर्मुखादिपरम्परयेति विवेकः । महदादिपृथिव्यन्तं समष्टिशब्दाभिधेयम् । यथा सेना वन राश्यादिव्यवहारः तेष्वेकैकदेशमादाय क्रियमाणं कार्य्यमस्मद्बुद्धीन्द्रियशरीरादि व्यष्टिशब्दवाच्यम् । यथा वृक्ष-

## भाषानुवाद

उसके ऊपर द्वादश कोटि योजन ऊँचा सत्यलोक हैं। उससे ऊपर अन्धकार है। उसके ऊपर गर्भोदक हैं। उसके ऊपर एक कोटि योजन ऊँचा अण्डकटाह हैं। यह एक ब्रह्माण्ड की रचना हैं। यह ब्रह्माण्ड दशगुण जल से वेष्टित हैं। जल से दश गुण तेज का आवरण हैं। तेज से दश गुण वायु का आवरण हैं। वायु से दश गुण अकाश को आवरण हैं। अकाश से दश गुण महतत्त्व का आवरण हैं। उसके ऊपर प्रधान का आवरण है उसकी सङ्ख्या नही हैं। इस प्रकार के अनन्त कोटि ब्रह्माण्ड भगवान् की विभूति रूप प्रकृति में सावकाश भ्रमते रहते हैं। समुद्र में जैसे बुलबुला है इससे प्रकृति का अन्त नहीं है। महदादि चतुर्मुख पर्यन्त सृष्टि की रचना साक्षात् भगवान् ने की है। उसके पश्चात् ब्रह्मा आदि द्वारा सृष्टि की रचना हुई हैं। महदादि से पृथिवी पर्यन्त सृष्टि को समष्टि कहा जाता है। जैसे सेना और वनराशि समष्टि कहलाते हैं। समष्टि के प्रत्येक देश का नाम व्यष्टि है और हमारी बुद्धि और इन्द्रिय शरीर प्रभृति भी व्यष्टि कहलाते हैं। वन शब्द समष्टि का वाचक है। उसका देश वृक्ष व्यष्टि कहलाता है।

वेदान्तरत्नमञ्जूषा

धान्यादिव्यवहारः। पंचीकरणप्रक्रिया च भगवान् श्रीपुरुषोत्तमः पृथिव्यादि-पंचभूतानि सृष्ट्वा एकैकं महाभूतं द्विधा विभज्य द्वयोर्भागयोः स्वभागमेकं पृथङ्निधाय द्वितीयं भागं पुनश्चतुःकृत्य ताँश्च भूतान्तरेषु चतुर्षु संयोजयति एवं चिकीर्षितेषु पंचस्वपि भूतेष्वेकैकस्य भूतस्यार्द्धं स्वभागो, द्वितीयार्द्धं चतुर्णां भूतानां भागेषु योजनमिति। तदुक्तं-विभज्यद्विधा पंचभूतानि देवस्तदधीनि।

पश्चाद् विभागानि कृत्वा तदन्येषु मुख्येषु भागेषु तत्तन्नियुञ्जन् सपंचीकृतं पश्यतिस्मेति। तथाच स्वभागस्य भूयस्त्वेनान्तभागानामल्पत्वेन पृथिव्यादिपृथग्व्यवहारो पि समञ्जसः। त्रिवृत्करणश्रुतिश्च पञ्चीकरणस्याप्युपलक्षणत्वादत्रापिमानम्। पञ्चीकरणत्वादेव शब्दादीनां सर्वत्रोपलम्भः सूपपन्नः। महदादिशरीरपर्य्यन्तेषु मध्ये, शरीरम् अन्नविकारत्वादन्नमयः पुरुषउच्यते। मन एव कर्मेन्द्रियैः सहितं सन्मनोमयः पुरुषः। प्राणादिपंचकं कर्मेन्द्रियसहितं सत्प्राणमयः पुरुषः। विज्ञानमयः पुरुषो जीवात्मा। आनन्दमयश्च पुरुषः परमात्मा परब्रह्मेति। तद्विस्तरश्चानन्दमयाधिकरणे श्रीश्रीनिवासाचार्य्यचरणै निंपुणं प्रतिपादितः। स वा एष पुरुषो अन्नरसमय इत्यादिश्रुतयस्तैत्तरीयके आम्नाताः॥ अथ सृष्टिव्युत्क्रमेण लयो, न तु कारणनाशक्रमेण। कारणनाशानन्तरमाश्रयाभावेन कार्य्यावस्थितेरसंभवात्। क्रमश्च।

भाषानुवाद

अब पञ्चीकरण प्रक्रिया, बतलाते हैं। प्रथम भगवान् पृथिवी आदिक पञ्च महाभूतों को रचता है पश्चात् प्रत्येक भूतों के दो-दो भाग भगवान् करता है। उन दोनों भागों में से एक भाग को पृथक् रख दिया जाता है। दूसरे भाग के चार भाग किये जाते हैं। उस एक एक भाग को चारों भूतों में अपने भाग को छोड़ कर संयोजन भगवान् करता है पृथिवी में चार भूतों के भाग मिले हुए हैं परन्तु पृथिवी का भाग अधिक है इससे वह पृथिवी कहलाती हैं। इसी प्रकार जल प्रभृति में भी समझ लेना चाहिए। पञ्चीकरण प्रक्रिया से पाँच भूतों में पञ्च गुण विद्यमान हैं। जब आकाश में रूप विद्यमान है उसमें नील प्रत्यय कदापि भ्रान्ति नहीं हो सकती हैं। महदादि शरीर पर्यन्तों के मध्य में स्थूल शरीर अन्न का विकार है इससे यह अन्नमय पुरुष कहलाता है। कर्मेन्द्रियों के सहित पाँच प्राणों को प्राण मय पुरुष कहते हैं। विज्ञान मय पुरुष जीव

कहलाता है। आनन्द मय पुरुष परब्रह्म परमात्मा श्रीपुरुषोत्तम हैं। यह विषय तैत्तरीय उपनिषद् में स्पष्ट हैं। इसकी व्याख्या आनन्दमयाधिकरण में भाष्यकार पूज्यपाद श्री श्री निवासाचार्य्यजी ने ब्रह्मसूत्र के भाष्य वेदान्त कौस्तुभ में की है। सृष्टि क्रम से लय क्रम विपरीत है। कारण के नाश से कार्य का नाश मानने पर कार्य की स्थिति नहीं हो सकती है क्योंकि कार्य की स्थिति का आधार कारण है वह नष्ट होचुका है।

वेदान्तरत्नमञ्जूषा

पृथिवीगन्धतन्मात्रद्वारेणाप्सुलीयते। आपो रसतन्मात्रद्वारा तेजसि तेजो रूपतन्मात्रद्वारा वायौ। सच स्पर्शतन्मात्रद्वारा व्योम्नि। तच्च शब्दतन्मात्रलयपूर्वकं भूतादितामसाहंकारे इन्द्रियाणि राजसाहङ्कारे। मनोदेवाश्च वैकारिके। त्रिविधोप्यहङ्कारो महति। सचाव्यक्ते। सोपिपुरुषे। सच ब्रह्मणि पुरुषोत्तमाख्ये इति। तथैव सुबालोपनिषद्याम्नायते, पृथिव्यप्सुलीयते, आपस्तेजसि, तेजो वायौ प्रलीयते, वायुराकाशे प्रलीयते, आकाश इन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ लीयन्ते, भूतादिर्महति, महानव्यक्ते, अव्यक्तमक्षरे, अक्षरं तमसि, तमः परे देव एकीभवती ति। वैष्णवे च-जगत् प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते। तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते। वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते इति। प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी पुरुषश्च उभावेतौ लीयेते परमात्मनि। परमात्मा च सर्वेषामाधारः परमेश्वरः। विष्णुनामा स देवेषु वेदान्तेषु च गीयते इत्यादिना इत्थं त्रिविधेष्वचेतनेषु प्राकृतं निरूपितम्।

भाषानुवाद

लय क्रम इस प्रकार है। पृथिवी गन्धतन्मात्रा के द्वारा जल में लीन होती हैं। जल रस तन्मात्रा के द्वारा तेज में लय होता है तेज रूप तन्मात्रा के द्वारा वायु में लय होता है। वायु स्पर्श तन्मात्रा के द्वारा आकाश में लय होता है। आकाश शब्द तन्मात्रा के द्वारा तामस अहङ्कार में लय होता है। दस इन्द्रियाँ राजस अहङ्कार से लय होती हैं। मन और इन्द्रियों के देवता सात्विक अहङ्कार में लय होते हैं। अहङ्कार त्रय महत्तत्व में लय होते हैं। महत्तत्व अव्यक्त में लय होता है। अव्यक्त पुरुष में पुरुष परब्रह्म श्री वासुदेव पुरुषोत्तम में लय होता है। यह सृष्टि काल चक्र सुबालोपनिषद् में स्पष्ट है। और विष्णु पुराण में भी यह सृष्टि काल चक्र है।

## वेदान्तरत्नमञ्जूषा

अथ द्वितीयमाह—कालस्वरूपमिति। प्राकृताप्राकृतोभयभिन्नत्वेसत्य-चेतनद्रव्यविशेषः कालशब्दवाच्यः। स च नित्यो विभुश्च। अथ ह वा नित्यानि पुरुषः प्रकृतिः काल इति श्रुतेः। सदेव सोम्येदमग्र आसीदित्यादिषु सृष्टेरत्प्राक् प्रलयसमयेऽपि कालस्य सत्यत्वाभ्युपगमात्। अनादिर्भगवान् कालो नान्तोऽस्य द्विजविद्यते इति वैष्णव वचनात्। न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते इत्यादेश्च। स च भूतभविष्यद्वर्तमान युगपच्चिरक्षिप्राऽऽदिव्यवहार-हेतुः सर्गप्रलययोर्निमित्तश्च।

## कुञ्चिका

अथेति, प्राकृतद्रव्यनिरूपणानन्तरमितितदर्थः अचेतनं त्रिविधं तत्र प्राकृतं निरूपितं द्वितीयमचेतनं कालस्वरूपं निरूपयतीत्यभिप्रेत्याह। द्वितीयमितिकालं लक्षण-प्रमाणाभ्यां निर्णेतुकामः प्रथमं तल्लक्षणमाह—प्राकृतेति, घटपटादीनां व्यावृत्यर्थं सत्यन्तं तावन्मात्रोक्तौ प्रत्यगात्मन्यतिव्याप्तिस्तद्वारणाय विशेष्यपदम्। स च नित्यो विभुश्चेति। उक्तार्थे श्रुतिं प्रमाणयति। अथ नित्यानि ह वै पुरुष इति। ननु सदेव सोम्येदमग्र आसी-दित्यत्र कालस्य भूतत्व निर्देशात् अनित्यत्वमेव ध्वंसाभावप्रतियोगिनएव वस्तुनो भूतत्व-निर्देशान्नोक्तसिद्धिरितिचेत्तत्र श्रुत्यन्तरमुदाहरन्नुपपत्तिं दर्शयति तन्मुखेनैव सदेवेति। नहि ध्वंसाभावप्रतियोगिनएव भूतत्वनिर्देशार्हत्वमिति नियमः, तस्मिन्नेव कवचे नित्य-शुद्धस्य ब्रह्मणो भूतत्वनिर्देशश्रवणात् तस्यापि ध्वंसाभावः।

## भाषानुवाद

अथ काल निरूपणम्। काल का यह लक्षण है कि प्राकृत और अप्राकृत से भिन्न हो अचेतन द्रव्य हो काल नित्य और विभु है। प्रकृति और पुरुष काल यह तीनों वस्तु नित्य हैं इसमें अथहवा नित्यानि प्रकृतिः पुरुषः कालः यह श्रुति प्रमाण है। सदेव सोम्येदमग्र आसीत् यह श्रुति प्रलय काल में भी काल का अस्तित्व प्रतिपादन करती है। क्योंकि श्रुति में अग्र शब्द काल का वाचक है। अनादि भगवान् कालोनान्तोऽस्य-द्विजविद्यत इस श्री विष्णु पुराण के वचन से साबित होता है कि काल अनादि है उसका अन्त नहीं हैं। जिसमें काल की प्रतीति न हो ऐसा कोई भी व्यवहार नहीं हैं। भूत भविष्यत वर्त्तमान और तुरत एक बेर बारम्बार इत्यादि प्रतीति का कारण काल ही है।

## वेदान्तरत्नमञ्जूषा

परमाण्वादिपरार्द्धावसानव्यवहारासाधारणकरणं च । तत्र यावता दिवाकरःपरमाणुपरिमाणकं देशमाक्रामति सकालः परमाणुशब्दाभिधेयः । द्वौ परमाणू द्व्यणुक स्त्रयो द्व्यणुकास्त्रसरेणुः । त्रसरेणुत्रयं त्रुटिः । त्रुटिशतं वेधः । त्रिभिर्वेधैर्लवः । तैस्त्रिभिर्निमेषः । पञ्चदशनिमेषाः काष्ठा । त्रिंशत्काष्ठाः कला । कलास्त्रिशन्मुहूर्तः । मुहूर्तैस्त्रिशद्भिर्मानुषमहोरात्रम् ।

## कुञ्चिका

भवद्भिरङ्गीकार्य एव तथा सति ब्रह्मणो मिथ्यात्वसाम्यमेव । अयं भावः । कालस्य नित्यत्वादखण्डत्वेऽपि औपाधिक कार्यरूपेणानित्यत्वस्यापीष्टत्वात्सर्वं समञ्जसम् उपाधिश्च सूर्यपरिभ्रमणरूपाक्रियैव तेनैवोपाधिना परमाण्वादिपरार्द्धावसानसमयनिर्दिशो ह्यवरुद्धः । अनुपदमेव विवेचयिष्यतेऽयं विषयः । तदेवार्थतः स्मृतिमुखेनोपाद्बलयति । अनादिर्भगवान् काल इति वैहमवे तस्यानाद्यनन्तत्व विधानात्तत्रैव वाक्यान्तरं प्रमाणयति नसोऽस्तीति । तस्य कार्यं संग्रहेण दर्शयति सचेति । उक्तलक्षणः कालः भूतभविष्यदादि-व्यवहारहेतुत्वात् तद्व्यवहारस्तस्योपाधिकार्यभूत इत्यर्थः दिवाकर, परिस्यन्दरूपोपाधिना परमाण्वादिपरार्द्धावसानसमयो भवतीति विशेषरूपेण पुराणादिषु । प्रसिद्धस्तदेवात्र दर्शयति तच यावतेति ।

## भाषानुवाद

और जगत की सृष्टि और प्रलय का निमित्त कारण काल है । और परमा-ण्वादि परार्द्धपर्यन्त सङ्ख्या का असाधारण कारण काल है । जितने काल में परमाणु मात्र देश को सूर्य उल्लङ्घन करता है उतने काल को परमाणु कहते हैं । दो परमाणु को द्यणुक होता है । तीन द्यणुक मिलन से त्रसरेणु होता है । तीन त्रसरेणु मिलन से त्रुटि होता है । सौ त्रुटियों का एक वेध होता है । तीन वेध का एक लव कहलाता है तीन लव का एक निमेष होतो है पञ्च दशनिमेय की काष्ठा होती है । तीस काष्ठा की एक कला होती है । तीस कला का एक महूर्त काल होता है । तीस महूर्त का मनुष्यों का रात्रि दिन होता है ।

## वेदान्तरत्नमञ्जूषा

तैः पञ्चदशभिः पक्षः । द्वौ पक्षौ मासः । द्वौ मासावृतुः । षड्भिर्मासै

रयनम् । द्वेऽयने वर्षम् । तत्र दक्षिणायनं देवानां रात्रिरुत्तरायणश्च दिनम् । दिव्यै वर्षसहस्रैर्द्वादशभिः कृतादियुगचतुष्टयम् । तत्राष्टशतोत्तरचतुःसहस्र-परिमितं कृतयुगं ससन्ध्यम् । षट्शतोत्तरत्रिसहस्रपरिमितं त्रेतायुगम् । चतुश-तोत्तरद्विसहस्रपरिमितं द्वापरयुगं ससन्ध्यं । चतुशतोत्तरसहस्रवर्षपरिमितं कलि-युगं ससन्ध्यश्च भवति चतुर्युगसहस्रपरिमितं चतुर्मुखस्य दिवसम् । तत्रैकस्मिन् दिवसे मनवश्चतुर्दश जायन्ते तथैवसप्तर्षयो महेन्द्रादयश्च । चतुर्युगाणां साधि-कान्येकसप्ततिः मन्वन्तरं मनोः काल उच्यते तस्य चतुर्दशगुणं ब्रह्मदिवसस्तत्प-रिमाणिका च रात्रिः । ईदृशाहोरात्राणां मानेन वर्षशतं चतुर्मुखायुः । तदर्द्धं परार्द्धं । तत्रैकं व्यतीतम् द्वितीयपरार्द्धस्य वर्तमानस्य प्रथमोऽयं कल्पो वाराह-संज्ञकः । सर्वमपिप्राकृतं कालाधीनम् । कालस्य सर्व नियामकत्वेऽपि परमेश्वर नियम्यत्वमेव । ज्ञः कालकालो गुणी सर्वविद्य इतिश्रुतेः । लीलाविभूतौ तु परमेश्वरस्य कालपारतन्त्र्यानुकरणमात्रमेव । नित्यविभूतौ तु न तत्प्रभावशङ्कापि कालामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुरित्यादिवचनात् । स च कालोऽखण्डत्वात् । स्वरूपेण नित्यः । कार्य्यरूपेणानित्यः । तत्कार्य्यमौपाधि-कम् । उपाधिश्च सूर्य्यपरिभ्रमणरूपा क्रियैवेति विवेकः ।

## भाषानुवाद

पञ्च दश रात्रि दिन को एक पक्ष होता है। दो पक्षों का एक मास होता है। दो मास का एक ऋतु होता है षट् मास का एक अयन होता है। दो अयन का सम्वत्सर होता है उसमें दक्षिणायन काल देवताओं की रात्रि कहलाती हैं। उतरायण काल देव-ताओं का दिन कहा जाता है। दिव्य द्वादश सहस्र वर्ष कृत युगादिकों की संख्या है उसमें दिव्य चार हजार वर्ष सत्ययुग की संख्या है। अष्ट शत सन्ध्या कि सङ्ख्या है। तीन हजार वर्ष त्रेता युग की संख्या है षट्शत सन्ध्या है। दिव्य दो सहस्र वर्ण द्वापुर युग की संख्या चार शत सन्ध्या है एक हजार वर्ष कलियुग की संख्या हैं दो शत सन्ध्या है ब्रह्मा के एक दिन में चार युगों की सहस्र चौकड़ी व्यतीत होजाती हैं। इतना हो परिमाण ब्रह्मा की रात्रि का है। ब्रह्मा के एक दिन में चौदह मनु और चौदह इन्द्र सप्त ऋषियों का भोग होजाता है। एक मनु का कुछ अधिक बहात्तर चौकड़ी युग काल संख्या हैं। उससे चतुर्दश गुण ब्रह्मा का एक दिन होता है। उतना ही परिमाण ब्रह्मा की रात्रि

का है। इस प्रकार दिन रात्रि की गणना से शत वर्ष परिमित ब्रह्मा की आयु है। उसको दो परार्द्ध कहते हैं। ब्रह्मा का एक परार्द्ध व्यतीत हो चुका है दूसरे परार्द्ध का यह प्रथम कल्प हैं। बाराह कल्प इसका नाम है। सब प्राकृत वस्तु काल के अधीन हैं। काल सर्व का नियामक हैं। परन्तु ईश्वर से नियम्य है। क्योंकि ईश्वर ज्ञाता और काल का भी काल है। यह वार्ता "ज्ञः कालकालो गुणी सर्व विद्यः" इस श्रुति में स्पष्ट है। इस लीला विभूति में ईश्वर काल के अधीन हैं। यह अनुकरण मात्र हैं। नित्य विभूति में काल का अणु मात्र भी प्रभाव नहीं है। कला महूर्तादि मयश्च कालो न यद्विभूतेः परिणाम हेतुः। यह विष्णु पुराण में कहा है—वह काल अखण्ड होने से स्वरूप से नित्य हैं। और कार्य रूप से अनित्य है। कार्य औपाधिक है उसकी उपाधि सूर्य की भ्रमण रूप क्रिया हैं। इति काल निर्णयः।

## वेदान्तरत्न मञ्जूषा

**अथाप्राकृतं निरूप्यते। अप्राकृतमिति। तत्वं नाम त्रिगुणाश्रयप्रधान कालविलक्षणं प्रकाशात्मकनावरकस्वभावमचेतनद्रव्यत्वम्। आदित्यवर्णं तमसः परस्तादित्यादिश्रुतेः तमः शब्दाभिधेयाभ्यां प्रधानकालाभ्यां परं विलक्षणम्। आदित्यवत् प्रकाशरूपमित्यर्थः। एतेन त्रिगुणात्मकद्रव्यभिन्नमपि शुद्धमाया-कार्यमिति मत निरासः। तत्र च प्रकृतिमण्डलाद्भिन्नदेशीयमपरिच्छिन्नं प्राकृतदेशीयन्तु परिच्छिन्नमिव दृश्यमानमप्यपरिच्छिन्नमेव। तच्चैकादशाध्याये विश्वरूपदर्शने स्वयमेव श्रीभगवतागीतं दर्शितश्चार्जुनाय।**

## कुञ्चिका

इत्थं कालं निरूप्याप्राकृतं संग्रहीतुमुपक्रमते उद्देशलक्षणप्रमाणैः, अथेत्यादिना। अथानन्तरं कालवस्तुनिरूपणानन्तरं तत्राप्राकृतं नामेत्युद्देशः। उद्दिष्टस्य लक्षणमाह। तत्वमिति। अप्राकृतत्वञ्चेत्यर्थः। उक्तार्थे श्रुतिं प्रमाणयति। आदित्यवर्णं मिति। तमसः परस्तादित्यनेन तमःशब्दवाच्यप्रकृतिकालाभ्यां विलक्षणत्वमित्याह, तमःशब्दाभिधेया-भ्यामिति। आदित्यवर्णमित्यनेन प्रकाशरूपत्वमनावरकत्वञ्चोक्तमित्याह। आदित्यवदिति अनावरकस्वभावमिति। आवरकस्वभावशून्यमित्यर्थः एतेनेति। श्रुतिसिद्धाप्राकृतार्थ-निर्वचनेनेत्यर्थः। प्राकृतमण्डलबहिर्वृतिनित्यविभूति परमव्योम विष्णु।

## भाषानुवाद

अथ अप्राकृत निरूपणम्। गुण त्रयात्मक प्रधान और काल से अत्यन्त विलक्षण प्रकाश रूप अनावरक स्वभाव और अचेतन द्रव्य का नाम अप्राकृत हैं। उक्त अर्थ में 'आदित्य वर्णं तमसः परस्तात्" यह श्रुति प्रमाण हैं। इस श्रुति में जो तम शब्द हैं उसका अर्थ प्रधान और काल हैं इन दोनों से परे हैं। आदित्य वर्ण शब्द का अर्थ अनावरक स्वभाव प्रकाश रूप हैं। त्रिगुण प्रकृति से भिन्न शुद्ध माया का कार्य अप्राकृत है इस प्रकार कोई कहते हैं उनका यह कथन सर्वथा असङ्गत है क्योंकि इस अर्थ में कोई भी प्रमाण उपलब्ध नहीं होता है पूर्व अर्थ में उक्त श्रुति प्रमाण हैं। तहाँ प्रकृति मण्डल से भिन्न नित्य विभूति अपरिच्छिन्न हैं। प्राकृत देश वर्त्ती अवतार विभूति परिच्छिन्न के समान दीखती है किन्तु अपरिच्छिन्न है यह वार्त्ता श्री भगवान ने गीता के एकादश अध्याय में कही है।

## वेदान्तरत्न मंजूषा

**अनन्दाभिव्यञ्जकत्वादानन्दसंज्ञकम्। नित्यविभूति परमात्मलोक परमव्योम विष्णुपदपरमपदादिशब्दाभिधेयञ्च। योऽस्याध्यक्षः परमे व्योमन् तिष्ठति तद्विष्णोः परमं पदम्। एते वै निरयास्तात लोकस्य परमात्मन इत्यादिवचनेभ्यः। तच्च भगवदीयानादिसङ्कल्पात् तस्य तदीयानां नित्युमुक्तानां च भोग्यादिरूपेणानेकरूपम्। तत्र भोग्यं भगवद्विग्रहादि, भोगोपकरणंच भूषणायुधयानासनालङ्कारकुसुमस्त्रक्‌स्त्रादिस्थानञ्च। गोपुरचत्वरप्राकारमणिपण्डपवनोपवनसरोवरादिकम्।**

## कुञ्चिका

यदाभिधेयमपरिच्छिन्नमेव प्राकृतदेशवृति ह्यवतारविभूत्याख्यन्तु लीलार्थं भगवत्सङ्कल्पात्परिच्छिन्नमिव दृश्यमानमप्यपरिच्छिन्नमेवाचिन्त्यशक्तियोगादित्याह। तत्र प्रकृतिमण्डलादिति। एवं सामान्यतो निरूप्य तस्य विशेषं संग्रहिष्यन् तत्पर्य्याय विशेषानाह। नित्यविभूतिरिति। उक्तपर्य्यायेषु श्रुतिमुदाहरति। योऽस्याध्यक्षइति। तस्य विशेषान्तरमाह तच्चेत्यादिना। भगवदीयो य आत्मवदनादिसङ्कल्पस्तस्मात्कारणात्। "तस्य" भगवतः "तदीयानां" पार्षदादीनाम्। तेषां द्वैविध्यमाह। नित्यमुक्तानाञ्चेति नित्याश्च-मुक्ताश्च तेषामितिद्वन्द्वसमासो ऽत्रानुसन्धेयः। तत्र नित्यानां विग्रहस्यानादित्वमनादियोगश्च। मुक्तानान्तु।

### भाषानुवाद

उस अप्राकृत धाम के नित्य विभूति और परमात्म लोक परम व्योम विष्णु-पद परमपद नाम हैं। यह नाम श्रुति तथा स्मृतियों में प्रसिद्ध है। वह अप्राकृत धाम भगवान् के अनादि संकल्प से भगवान् और नित्यमुक्तों के भोग्य रूप से अनेक प्रकार का है। उसमें भोग्य भगवद्विग्रहादि हैं भोगोपकरण भूषण आयुध और पान आसन अलङ्कार कुसुम पत्र फलोदिक हैं। स्थान गोपुर चौक महल मणि मण्डप वन उपवन सरोवरादिक हैं।

### वेदान्त रत्नमञ्जूषा

तत्रेश्वरस्य नित्यमुक्तानांच विग्रहसंस्थानं तदीयानाद्यनन्तेच्छासिद्धं स्वाभाविकमेव। बद्धमुक्तानान्तुविग्रहं भगवत्प्रसादनिवृत्तप्रकृतिसम्बधानामनादि-सिद्धैरेव विग्रहादिभिर्योगः। न तत्र जन्यत्वादिर्विकारशङ्कापि निर्विकारत्वात्। यथोत्सवादिसमये प्राक्सिद्धा वस्त्रभूषणालङ्कारादयो राजभिः स्वभृत्येभ्यो दीयन्ते तथैव प्रकृतिवियोगसमये पूर्वसिद्धा नित्याः सर्वविकारशून्या विग्रहादय-स्तत्सेवोपकरणरूपाः श्रीपुरुषोत्तमेन भृत्येभ्यो दीयन्त इति। तन्मङ्गलविग्रहश्च स्वरूपवदनन्तकल्याणगुणाश्रयो गुणश्च निरतिशयसौन्दर्यमार्दवलावण्यसौ-गन्ध्यसौकुमार्यादयोऽपरिमिता।

### कुञ्चिका

विग्रहस्यानादित्वेऽपि तद्योगमात्रस्य मोक्षावस्थायां भगवत्प्रसादैकलभ्यत्वं प्रकृतिसम्बन्धनिवृत्तिकालीनत्वमिति विवेकः। तच्चाग्रे स्फुटीभविष्यति। भोग्यादिरूपेणे-त्यत्रादिपदेन भोगोपकरणं भोगस्थानञ्च गृह्यते। तत्र भोग्यमुदाहरति तत्रेति भोगोपकर-णानि दर्शयति भूषणेति भोगस्थानान्याह। गोपुरइत्यादिना श्रीभगवतः नित्यमुक्तानां विग्रहविशेषः स्वाभावसिद्धएवेत्याह। तत्रैश्वरस्येत्यादिना तत्र परिणामादिविकारशङ्कां वारयति न तत्रेति तत्र प्रमाणन्त्वग्रे वक्ष्यते। दृष्टान्तेनोक्तार्थं द्रढयति। यथोत्सवादि-समय इति।

### भाषानुवाद

नित्य धाम में परमेश्वर और नित्य मुक्तों के विग्रह भगवान् के अनादि अनन्त इच्छा सिद्ध स्वाभाविक विराजमान हैं। भगवान् के अनुग्रह से माया के बन्धन से

निर्मुक्त जो वद्ध मुक्त जीव है उन्हीं को अनादि सिद्ध दिव्य मङ्गल विग्रह की प्राप्ति होती है वह दिव्य विग्रह जन्य नहीं हैं। क्योंकि परिणाम आदि विकार से रहित हैं। जैसे उत्सव में बने बनाये वस्त्र और भूषण अलङ्कार आदि राजसेव को प्राप्त होते हैं। तैसे प्रकृति बन्धन के निवृत्ति समय में पूर्व सिद्ध नित्य निर्विकार दिव्य मङ्गल विग्रह भगवान् की सेवा के उपकरण भगवान् निज सेवकों को प्रदान करते हैं। श्री भगवान् का नित्य मङ्गल दिव्य विग्रह स्वरूप की तुल्य अनन्त कल्याण गुण सागर हैं।

## वेदान्तरत्नमञ्जूषा

अनन्ताश्च । सर्वगन्धः सर्वरसः, आप्रणखात् सुवर्ण इत्यादिश्रुतिभ्यः श्रीभगवतः सर्वदर्शन स्पर्शन गमनादिशक्तिमत्वान्न तत्रेन्द्रियादि विभागकल्पनापेक्षा । गौरवात् । तथाच श्रुतिः "अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः सश्रृणोत्यकर्णः । यस्मादतीन्द्रियोऽपि सर्वतः पश्यति सर्वतः श्रृणोति सर्वतो गच्छति सर्वतआदत्ते" इत्यादि । तत्साम्यं भजतामपि तथैव व्यवहारः । निरञ्जनः परमं साम्यमुपैतीतिश्रुतेः मम साधर्म्यमागता इतिस्मृतेश्च । कालातीतवस्तुत्वान्न तत्र कालप्रभावः । कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुरिति चतुर्थांशे ब्रह्मवचनादिति त्रिविधाचेतनसंग्रहः ॥३॥

## कुञ्चिका

तन्मङ्गलविग्रहश्चेति । यथा कल्याणगुणादयः परस्यब्रह्मणः श्रीपुरुषोत्तमस्य स्वरूपत्वेन निर्दिष्टाः स्वरूपभूतगुणाः तथा विग्रहेऽपीत्यर्थः गुणानेव दर्शयति गुणाश्चेति उक्तार्थं श्रुतिप्रमाणेन द्रढयति सर्वगन्धः । तत्र परिमाणादिविकारशङ्का वारयति । कालतीतवस्त्विति ॥ इति तृतीय श्लोकव्याख्यानम् ।

## भाषानुवाद

निरतिशय सौंदय और मार्दव लावण्य सौगन्ध्य सौकुमार्य्य आदि अपरिमित अनन्त गुण हैं। सर्व गन्धः सर्वरसः। आप्रणखात्सुवर्णः यह श्रुति उक्त अर्थ में प्रमाण हैं। भगवान् में सब गन्ध और सर्व रस है नखशिख पर्य्यन्त सुवर्ण की तुल्य देदिप्यमान हैं। भगवान् श्रीवासुदेव सर्व दर्शन स्पर्श न श्रवण गमनादि शक्तिमान हैं उसमें स्वरूप से भिन्न प्राकृत इन्द्रियों की कल्पना योग्य नहीं हैं। अपाणिपादो जवनोगृहीता यह श्रुति उक्त अर्थ में प्रमाण हैं। निरञ्जनः परमं साम्यमुपैति इस श्रुति तथा ममसाधर्म्य-

मागता इस भगवद्वचन से सावित होता है कि भगवान् के समानता को यह जीव प्राप्त होता है ऐक्य प्राप्ति मुक्ति का स्वरूप नहीं है। क्योंकि उक्त श्रुति से यह अर्थ विरुद्ध हैं। भगवान् का लोक कालातीत है। इससे तहाँ काल का प्रभाव नहीं है। कला मुहूर्त्तादि मय काल भगवान् की विभूति के परिणाम का कारण नहीं हैं यह वार्ता विष्णु पुराण के चतुर्थ अंश में ब्रह्माजी ने कही है।

इति त्रिविध अचेतन निरूपण।

---

## वेदान्तरत्नमञ्जूषा

अथ परमात्मतत्त्वं निरूपयति—

स्वभावतोऽपास्त समस्तदोषमशेषकल्याणगुणैकराशिम् । व्यूहाङ्गिनं ब्रह्मपरं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम् ॥४॥ स्वभावत इत्यादिना तत्रोऽथाऽतो ब्रह्मजिज्ञासा इत्युपक्रम सूत्रार्थमाह—वयं ब्रह्म ध्यायेमेतियोजना ब्रह्म शब्दस्य चतुर्मुख वेदादावपि वृत्तित्वात् तत्रातिप्रसङ्गं वारयन्नाह–परमिति। ब्रह्मपदार्थमाह—कृष्णमिति। परत्वं च क्षराक्षराभ्यामुत्कृष्टत्वम् । तस्याश्रयो भगवान् श्रीकृष्णएव। तथा च स्वयमेवगीतः। "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः। यो मामेवमसंमूढो जानाति पुरुषोत्तम् ससर्वविद्भजतिमां सर्वभावेन भारत॥" इति श्रीकृष्णं पुरुषोत्तमत्वेन जानतः सर्ववित्त्वं प्रतिपादितम्। तस्मात् स एवात्र परब्रह्म शब्दाभिधेय इति सिद्धम्।

### कुञ्चिका

अथेति प्राकृतादितत्वनिरूपणानन्तरमित्यर्थः। प्रतिपत्त्यनुकूलव्यापारो निपूर्वकरूपधात्वर्थः। द्वितीयायाः विषयत्वञ्चार्थः तस्य निरूपकत्वसम्बन्धेन धात्वर्थैकदेशे प्रतिपत्तावन्वयस्तथाच परात्मतत्वविषयकज्ञानानुकूलव्यापारानुकूलकृत्याश्रयीभूतैकत्वविशिष्टो ग्रन्थकार इति वोधः। अस्य श्लोकस्य व्याससूत्रैकसममेकवाक्यत्वमिति स्फुटीकुर्वन्नाह। तत्राऽथात इति तथाहि जिज्ञासा नाम जिज्ञास्यस्य वस्तुततत्स्वरूपशक्त्यादिभिर्निरतिशयवृहत्वानुसन्धानरूपो विचारविशेषः स एवात्र ध्यान शब्दार्थः। सोऽन्वेष्टव्यः सविजिज्ञासितव्यः, आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुत्यर्थ–

स्यान्तर्भावात्। ब्रह्मस्वरूपगुणादीनामेवात्राग्योगान्ययोगव्यवच्छेदाभ्यां निर्णीयमानत्वा-दितिभावः तत्र ब्रह्मशब्दस्यान्यत्रापि यदि वृत्तिमाशङ्केत तदाप्याह परमितीत्याह ब्रह्म-शब्दस्येति परत्वमेव स्पष्टयति परत्वञ्चेति "तस्य" क्षराक्षराभ्यामुत्कर्षाश्रयस्येत्यर्थः। उक्तार्थं श्रीमुखवचसा द्रढयति तथाचेति।

## भाषानुवाद

यहां पर्यन्त 'अप्राकृतं प्राकृत रूपकञ्च" इस तृतीय श्लोक का अनुवाद समाप्त हुआ। अब चतुर्थ श्लोक से परमात्मतत्त्व निरूपण करते हैं। स्वभावतोऽपास्तसमस्तदोष-मिति। वयं ब्रह्म ध्यायेमेति योजना अब श्लोक का अर्थ प्रदर्शन करते हैं। पर ब्रह्म का हम ध्यान करते हैं। इन शब्दों से यह सूचन किया कि "अथातो ब्रह्म जिज्ञासा। यह महर्षि श्री वादरायण का प्रथम सूत्र है इसका अर्थ प्रदर्शन आद्याचार्य्य भगवान् श्रीनिम्बार्का-चार्यजी ने किया। ब्रह्म शब्द से चतुर्मुख और वेद का भी बोध होता है इन्हों की व्यावृति के लिये श्लोक में पर शब्द का प्रयोग किया है पर शब्द का यह अर्थ क्षर और अक्षर से उत्कृष्ट हैं। ब्रह्म पद का अर्थ श्रीकृष्ण है इस वार्ता को "कृष्णं" इस शब्द से सूचित किया है। क्षर और अक्षर से उत्कृष्ट परब्रह्म श्रीकृष्णही है। श्री भगवान् ने गीता में इस वार्ता को स्वयं प्रतिपादन किया है। यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः। अतोऽस्मि लोकेवेदे च प्रथितः पुरुषोत्तमः इति। इससे सावित हो चुका कि परब्रह्म शब्द का अर्थ पुरुषोत्तम श्रीकृष्ण ही हैं

## वेदान्तरत्न मञ्जूषा

ध्यायेमेत्यत्रविध्यर्थकप्रथमपुरुषे प्रयोक्तव्येऽपि स्वेषां स्वाभाविकदास्य-त्वेन तद्ध्यानाश्रयत्वनिश्चयादुत्तमपुरुषप्रयोगः-प्रधानक्षेत्रज्ञपतिः, पति पतीना-मित्यादिश्रुतेः—तस्य तत्स्वामित्वे प्रमाणम्। वहुवचनाद्धयेकजीववादिमतनि-रासः। स च पूर्वमेव व्याख्यातः। "नित्योनित्यानां चेतनश्चेतनानामेकोबहूनां योविदधाति कामान्। अंशो नानाव्यदेशात्। न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः। नचैव न भविष्यामः सर्वेवयमतः परम्" इत्यादिभ्यस्त्रैकालिक वहुत्वप्रतिपादक वचनेभ्यः ध्यैधातु प्रयोगादुक्तसूत्रे इष्यमाणज्ञानस्य ध्याना-त्मकत्वं सूत्रकृताऽभिप्रेतमिति निश्चीयते। आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति विषयवाक्ये ध्यानस्यैव विधेयत्वश्रवणात्। अत्र दर्शनमुद्दिश्य निदिध्यासनं विधीयेत। एवं विधीयमानं।

## कुञ्चिका

ध्यायेदितिविध्यर्थकप्रथमपुरुषमुपेक्ष्योत्तमपुरुषप्रयोगोपादानस्यस्वारस्यं निर्वक्ति। ध्यायेमेति। "स्वेषां" प्रत्यगात्मनाम् तद्ध्यानाश्रयत्वेति स्वस्वामिश्रीकृष्णविषयकध्याना-श्रयत्वनिश्चयादित्यर्थः। श्रीकृष्णस्य स्वामित्वं स्वेषां स्वाभाविकदास्यत्वं श्रुतिप्रमाणेन द्रढयति। प्रधानक्षेत्रज्ञपतिरिति। प्रधानं प्रकृतिः क्षेत्रज्ञोजीवस्तयोःपतिःपालकइत्यर्थः। "तस्य" जीवस्य "तत्स्वामित्वे" श्रीकृष्णस्यस्वामित्वे ध्यायेम इत्यत्र बहुवचनस्य प्रयोजनं निर्वक्ति। बहुवचनेति "सच" एक जीववादमतनिरासः पूर्वमेवेति। एकजीववादे चैत्रमैत्रा-दीनां भोगसाङ्कर्यं स्यात् नचौपाधिकभेदस्यतन्नियामकत्वान्नोक्तदोष इति वाच्यम्। हस्तपादाद्युपाधिभेदेऽप्यनुसन्धानदर्शनादित्यर्थः। प्रत्यगत्मनां नानात्वं श्रुतिसूत्रस्मृतिमुखेन प्रमाणयति।

नित्य इति। नित्यानां चेतनानामितिवहुवचनेन वहुनामित्युक्त्याचजीवानांवहुत्वं श्रुतिसिद्धमिति भावः। ध्यैधातुप्रयोगादिति। उक्तश्लोक इतिशेषः।

## भाषानुवाद

ध्यायेम यहाँ विध्यर्थक प्रथम पुरुष का प्रयोग करना उचित था किन्तु अपने को स्वाभाविक दास्य होने से तद्ध्यानाश्रित निश्चय करके उत्तम पुरुष ध्यायेम यह प्रयोग किया है। प्रधान क्षेत्रज्ञपतिः "पतिंपतीनाम्"। इत्यादि श्रुतियाँ भगवान् के स्वामि-त्वमे प्रमाण हैं। ध्यायेम इस बहुवचन से एक जीव वाद खण्डन हो चुका है। इस विषय की मीमांसा प्रमाण सहित पहिले कर चुके हैं। यहाँ पर ध्यायेम यह प्रयोग करने से यह निश्चित होता है कि अथातो ब्रह्म जिज्ञासा इस व्यास सूत्र में जिज्ञासा पद से वांछित जो ज्ञान है सो ध्यान रूप हैं यह सूत्रकार का तात्पर्य है क्योंकि आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यः इस विषय वाक्य में आत्म साक्षात्कार को उद्देश्य करके निदिध्यासन को विधेय बतलाया है।

## वेदान्तरत्न मञ्जूषा

निदिध्यासनमेव ज्ञानापर पर्यायभूतं ज्ञानशब्देन सूत्रयामास भगवान् वादरायण इत्यर्थः। सूत्रविषयवाक्ययोरेकार्थत्वनियमात्। तत्रापिविषयवाक्यस्य-मूलरूपत्वेन स्वतः प्रामाण्येन वलीयस्त्वात् तदनुसारेणैव सूत्रार्थोऽप्यवश्यं नेय इति सर्ववादिसाधारण न्यायात्। अन्यथा सूत्रविषयवाक्ययोर्विरुद्धार्थपर-

त्वाभ्युपगमे विषयविषयिभावानुपपत्तेः । एतत्सर्वमभिप्रेत्य, ध्यानप्रयोगोक्तिः ॥

किं विषयकंध्यानमत्रविधेयमित्यपेक्षायामाह—कृष्णमिति कृष्ण विषयकमित्यर्थः ॥

प्रसंगाद् विधिर्मीमांस्यते । प्रयोजनत्वावच्छिन्नवदर्थविधायकत्वेनार्थवान् शब्दो विधिः । यथा स्वर्गकामो यजेदित्यत्र स्वर्गात्मक प्रयोजनवतोऽर्थस्य यजधात्वर्थस्य यजनस्य विधायकोलिङ्प्रत्ययः । तेन यजनस्य प्रयोजनवत्तया विधीयमानत्वात् ।

## कुञ्चिका

अथातोब्रह्मजिज्ञासेतिसूत्र अचिन्त्यानन्तनिरतिशयस्वाभाविकबृहत्तमगुणाद्याश्रयसर्वशक्तिसर्वकारणरूपश्रीकृष्णविषयकेष्यमाणज्ञानविषयिकेच्छाजिज्ञासाशब्दार्थः। तच्च ज्ञानं ध्यानापरपर्य्यायमित्याह । इष्यमाणज्ञानस्येत्येति । भिद्यते हृदयग्रन्थिः च्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे । निरञ्जनः परमं साम्यमुपैति तन्महिमानं पश्यति वीतशोकः । ततो मां तत्वतो ज्ञात्वा विशते तदनन्तर मित्यादिवाक्यैर्मोक्षान्तरङ्गोपायतयासिद्धत्वेन ब्रह्मसाक्षात्कारस्यविधेयत्वाभावातथाच वाक्यान्तरप्राप्तं ब्रह्मसाक्षात्कारलक्षणं मोक्षासाधारणोपायं दर्शनमुद्दिश्य तदन्तरङ्गोपायभूतं निदिध्यासनमत्रविधीयते तदेवध्यानज्ञानपराभक्तिध्रुवास्मृत्यपरपर्य्यायभूतं ज्ञानशब्देनोच्यत इत्याह— "आत्मावाऽरेद्रष्टव्य इति प्रसङ्गसङ्गतिमभिप्रेत्य विधिर्निरूप्यत इत्याह । प्रसङ्गादिति स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । विधेलक्षणमाह । प्रयोजनेति । तत्समन्वयमाह । यथेति ।

## भाषानुवाद

वह निदिध्यासन ध्यान रूप है । वह ध्यान सूत्रकार ने ज्ञान शब्द से कहा है । उस ध्यान का विषय परब्रह्म श्रीकृष्ण हैं । ध्यायेम यह विधि लिङ्ग है इस प्रसङ्ग सङ्गति से विधि शब्द के अर्थ की समालोचना यहाँ ,पर करते हैं । प्रयोजवान् अर्थ को जो विधान करैं सो शब्द विधि कहलाता है । जैसे स्वर्ग वाम पुरुष यजन करैं । यहाँ स्वर्ग प्राप्ति रूप प्रयोजवान् जो अर्थ याग उसका विधायक लिङ्ग प्रत्यय हैं ।

## वेदान्तरत्नमंजूषा

तद्विधायक शब्दस्य विधित्वमितिलक्षण समन्वयः । सच त्रिविधः– अपूर्व–नियम–परिसंख्याभेदात् । तत्रात्यन्ता प्राप्तार्थविधायकत्वमपूर्व विधित्वम्।

यथा—व्रीहीन् प्रोक्षतीति। प्रोक्षणात्मकसंस्कारकर्मणो विधिमन्तरेण माना-न्तरेणात्यन्ताप्राप्तत्वात् तत्फलकोऽयं प्रोक्षणविधिरित्यर्थः ॥ १ ॥ पक्षे प्राप्तस्या प्राप्तांशपूरको नियमः। यथा—व्रीहिनवहन्तीति। अत्र विध्यभावेऽपि पुरोडा-शीयद्रव्यात्मकानां व्रीहीणां तण्डुलनिष्पत्याक्षेपादेवावहननप्राप्तिर्भविष्यतीति नतत्फलकोऽयंविधिः, किन्त्वाक्षेपादेवलोकावगतं कारणत्वसाम्यान्नख विदलनादि-रपि प्राप्नुयादित्यवहननांशस्याप्राप्तिस्तदंश परिपूर्तिफलकोऽयं विधिः। अवहन्यादेव, नतुप्रकारान्तरेण वैतुष्यमात्रं कुर्यादित्यर्थः ॥२॥ उभयप्राप्तावितर-व्यावृत्तिफलकः परिसंख्याविधिः। यथा, इमामगृभ्णन्।

## कुञ्चिका

विधिं विभजते। सचेति। विधिरित्यर्थः। प्रमाणान्तरेण यदर्थत्वेनाप्राप्तस्यतद-र्थत्वेनप्रापको यो विधिःसापूर्वविधिरिति यथास्वर्गार्थकत्वेन प्रमाणान्तरेणाप्राप्तस्ययागस्य-तदर्थत्वेन 'यजेत स्वर्गकाम' इत्यनेन विधानाद्भवत्ययमपूर्वविधिरित्याह। तत्रात्यन्ताप्राप्ता-र्थेति। तस्योदाहरणमाह। यथेति। नियमविधेर्लक्षणमाह। पक्ष इति। ननुव्रीहीनवहन्त्य-स्यावघातविधेः कथं पक्षेऽप्राप्तस्यावघातस्यप्रापकत्वं स्वीक्रियते। वैतुष्यार्थत्वेन प्रमा-णान्तरेणप्राप्तस्यतस्य तदर्थत्वेनानेनविधिनोपपत्तेरित्याशङ्क्यानेनविधिनोपघातस्य वितुता-र्थत्वं न प्रतिपाद्यते तस्य तदर्थत्वेनान्वयव्यतिरेकसिद्धत्वात्। अवघातादिसत्वेव्रीहीणां वैतुष्यं जायते तदसत्वेतदभावमितिसार्वजनीनमित्याशङ्कते। अत्रेति अवहनने इत्यर्थः। नास्यविधेरनुवादकत्वेन वैयर्थ्यं सम्भवनियमविधायकत्वेनाप्युपपत्तेरिति परिहरति। अव-हन्यादेवेति व्रीहीणां वैतुष्यंमवघातेनैव सम्पादनीयमिति नियमविधिरित्यर्थः।

## भाषानुवाद

वह विधि तीन विभागों में विभक्त हैं। एक अपूर्व विधि दूसरी नियम विधि तृतीय परिसङ्ख्या विधि हैं। अत्यन्त अप्राप्त अर्थ को जो विधान करैं वह अपूर्व विधि कहलाती है। यथा "व्रीहीन् प्रोक्षतीति" धानों का प्रोक्षण करैं यह विधि हैं। यहाँ प्रोक्षण रूप संस्कार कर्म विधि के बिना प्रमाणान्तर से अत्यन्त अप्राप्त हैं उसका विधान यह वाक्य करता है। १। एक पक्ष में प्राप्त हो अप्राप्त अंश को जो पूरण करैं वह नियम विधि कहलाती हैं। यथ व्रीहीनवहन्तीति। जैसे धान कूटैं। यहाँ पर विधि के बिना ही आक्षेप से धानों का कूटना प्राप्त होता है क्योंकि यज्ञ में देवता के लिये पुरोडास

द्रव्य दिया जाता है घोड़े के खुर के समान चावलों की वारी का नाम पुरोडास है। वह पुरोडास धानों के कूट ने बिना नहीं बन सकता है इस अर्थापत्ति प्रमाण से धानों का कूटना प्राप्त है उसका विधान इसमें नहीं हैं। किन्तु नखों के द्वारा भी धानों में से चावल निकल सकते हैं। इससे धानों का कूटना यह अंश प्राप्त नहीं हो सकता है इस अंश को पूरण नियम विधि करती हैं कि धान को कूट कर ही चावल निकालैं नखों के द्वारा धान को वैतुष्य न करैं ( धानों का छिलका नख से न उतारे ) यह नियम विधि है।२। दोनों की प्राप्ति में एक का निषेध करने वाली विधि परिसंख्या कहलाती हैं।

### वेदान्तरत्नमञ्जूषा

**रशनाम् ऋतस्येत्यश्वाभिधानीमादत्ते इति। अत्राऽश्वरशनाग्रहणम् गर्दभरशनाग्रहणं चानुष्टेयम्। तत्रेमामगृभ्णन्निति मन्त्रो रशनाग्रहणप्रकाशनात्मकसामर्थ्यरूपाल्लिङ्गादेव गर्दभरशना ग्रहणवदश्वरशनाग्रहणेऽपि प्राप्त एवेति न तत्प्राप्तिफलकोऽयं विधिः। प्राप्तस्य प्राप्ते पिष्टपेषणवन्निष्फलत्वाद् वैयर्थ्यापत्तेः। अपितु लिङ्गाविशेषाद् अश्वरशनाग्रहणवद् गर्दभरशना ग्रहणेऽपि मन्त्रः प्राप्नुयादिति तन्निवृत्तिफलकोऽयं विधिरित्यर्थः ॥ ३ ॥ सच दूषणत्रयवत्त्वाद् दुष्टः। दूषणानिच स्वार्थत्यागः, परार्थकल्पना प्राप्तबाधश्च। अत्र स्वार्थोऽश्वरशनाग्रहः तस्य त्यागः। परार्थो गर्दभरशनाग्रहनिषेधस्तस्य कल्पनं, प्राप्तश्चात्र स्वार्थरूपोऽश्व रशनाग्रहस्तस्यबाधश्चेति विवेकः। "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिकेत्सति। तत्रत्वन्यत्र च प्राप्तौ परिसंख्येतिगीयते।" इतिवचनाद्। तत्र वेदान्त वाक्यानां भगवत्स्वरूप।**

### कुञ्चिका

उभयोश्चयुगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिस्तमुदाहरति। यथेति। 'इमामगृभ्णन्निति" मन्त्रसामर्थ्यादेव प्राप्तं रसनादानं तच्चाश्वरसनादानमहोस्वित् गर्दभरशनादानंवेति सन्दिह्य पूर्वपक्षमाह अत्रेति मन्त्रेणानेनादानं कुर्यादिति वाक्यं कल्पते अनेन चवाक्येन मन्त्रादानयोः सम्बन्धे सिद्धे सति परवाक्यविषयकमादानमितिवीक्षायां लिङ्गाद्रसनामात्रस्यादानमुपेत्याश्वरसनाग्रहणवद्गर्दभरशनायाः प्राप्तिर्वक्तव्येति प्राप्तो गर्दभाभिधानीं नादत्त इति निषेधः परिसंख्येत्यर्थः। परिसंख्यायां त्रयोदोषा प्राप्नुयुः। आदत इति शब्दोऽश्वरसनादानलक्षणं स्वार्थं जह्यात्। तन्निषेधलक्षणः

पराऽर्थोऽस्यशब्दस्यकल्प्येत रसनात्वसामान्येन चप्राप्तं गर्दभरशनाया आदानं वाध्येत इत्याह सचेति परसंख्याश्चेत्यर्थः ।

## भाषानुवाद

उसका यह उदाहरण है यथा "इमामगृभ्णन् रसनां ऋतस्य" इस मन्त्र से यज्ञ के पशु की डोरी ग्रहण का विधान हैं। अश्व की डोरी ग्रहण करैं इसका बोधक "अश्वाभिधानीमादत्ते" यह द्वितीय मन्त्र है। यज्ञ में पशु दो होते हैं एक अश्व द्वितीय गर्दभ हैं द्वितीय मन्त्र से अश्व डोर ग्रहण का विधान नहीं है क्योंकि प्रथम मन्त्र से अश्व की डोरी का ग्रहण और गर्दभ की डोरी का ग्रहण भी प्राप्त हैं। "अर्थ प्रकाशन सामर्थ्यं लिङ्गम्।" अश्व रसना के ग्रहण प्रकाशन रूप लिङ्ग से गर्दभ की डोरी का ग्रहणवत् अश्व की डोरी का ग्रहण भी प्राप्त है अतएव द्वितीय मन्त्र को विधि नहीं मान सकते हैं क्योंकि पिष्टपेषणन्याय से निष्फल हैं। प्रथम मन्त्र से दोनों की डोरी का ग्रहण प्राप्त होता है तहाँ गर्दभ की डोरी का ग्रहण न करैं यह निषेध परिसंख्या विधि का अर्थ है। इस परिसंख्या विधि में तीन दूषण हैं। पहिला स्वार्थ का त्याग है दूसरा परार्थ कल्पना तीसरा प्राप्ति का बाध है। अश्व की डोरी के ग्रहण त्याग स्वार्थ त्याग हैं। गर्दभ रसना का निषेध परार्थ कल्पना है। प्राप्त हुआ जो अश्व रसना का ग्रहण उसका बाध (अभाव) प्राप्त बाध हैं।

## वेदान्तरत्नमञ्जूषा

गुणादिप्रतिपादनपरत्वं निश्चित्य तत्प्रतिपाद्यं ध्येयस्वरूपादिकं साक्षात्पश्यत आचार्य्यस्य मुखात् तदनुभूत वाक्यार्थस्य ग्रहणं श्रवणम्। श्रुतस्य चोपदिष्टार्थस्य स्वानुभवविषयीकरणाय शास्त्रानुकूलयुक्तिभिर्विचारविशेषो मननम्। मननविषयस्यार्थस्य साक्षात्कारकारणभूतमनवरतध्यानं निदिध्यासनम्। उक्तलक्षणस्यास्य श्रवणादे रत्यन्ताप्राप्तत्वादपूर्वविधिरेवायमितिज्ञातव्यम्। तत्र निदिध्यासनस्य साक्षाद्दर्शनान्तरङ्गत्वाद्विधेयत्वम्। श्रवणमननयोश्च तदपेक्षया-बहिरङ्गत्वात् परम्परयो ध्यानसाधनत्वमितिसिद्धान्तः॥

इदानीं लक्षणसूत्रादीन्यन्यान्यपि व्याचक्षाणो भगवत्पदार्थाऽभिन्न पदार्थमाह निर्वचनमुखेन—स्वभाव इति। स्वभावेनैवानादिप्रकृत्यैवापास्ता-निरस्ताः समस्ता दोषा यस्मात् तं दोषाश्चाविद्याऽस्मितारागद्वेषाभिनिवेशाः

क्लेशाः पञ्च। अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशा इति पातञ्जलसूत्रात्। ते एव तमो मोह महामोह तामिस्रान्धतामिस्र संज्ञकाः।

## कुञ्चिका

उक्तार्थं श्लोकेन संगृह्णाति विधिरत्यन्तमिति। अस्यार्थः प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिरपूर्वविधिः। पक्षेऽप्राप्तस्य प्रापकोंविधिर्नियमविधिः। श्लोकार्द्धेन विधिद्वयमभिहितमुत्तरार्द्धेन परिसंख्या निरूप्यते। तत्रचान्यत्रेति। उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधि रिति श्रवणस्य लक्षणमाह। तत्र वेदान्त इति मननं लक्षयति। श्रुतस्येति। निदिध्यासनस्य स्वरूपमाह। मननविषयस्येति। निरुक्तश्रवणस्य विधिमन्तरेण मानान्तरेणात्यन्ताप्राप्तत्वात् तस्यापूर्वविधित्वमित्याह। उक्तलक्षणस्येति। वाक्यान्तरप्राप्तं ब्रह्मसाक्षात्कारलक्षणं मोक्षासाधारणोपायं दर्शनमुद्दिश्य तदन्तरङ्गोपायभूत निदिध्यासनमत्र विधीयते तदेव ध्यानज्ञानपराभक्तिध्रुवास्मृत्यपरपर्य्यायभूतं ज्ञानशब्देन सूत्रयामास भगवान्वादरायण इत्याह। तत्रनिदिध्यासनस्येति। "तत्र" श्रवणादिषु। श्रवणमननयोर्निदिध्यासनोपायत्वेन विनियोगस्तयोरपि परम्परया मोक्षसाधनोपायत्वादित्याह। श्रवणमननयोश्चेति।

## भाषानुवाद

तहां वेदान्त वाक्य भगवान के स्वरूप और गुणों को प्रतिपादन करते हैं इस तरह के निश्चय वाला और वेदान्त प्रतिपाद्य पर ब्रह्म विषयक साक्षात्कार जिसको होता हो एसे सत्सम्प्रदाय निष्ठ आचार्य्य के मुखारविन्द से तदनुभूत वाक्यार्थ ग्रहण को श्रवण कहते हैं गुरुमुख द्वारा श्रुत जो उपदेश उसको अपने अनुभव करने के लिये शास्त्र और युक्ति द्वारा विचार करना मनन का लक्षण है मनन किया हुआ जो अर्थ उसके साक्षात्कार का असाधारण कारण निरन्तर ध्यान है उसको निदिध्यासन कहते हैं। इस प्रकार से श्रवणादि अत्यन्त अप्राप्त हैं इसी से अपूर्व विधि हैं। उन्हों में भगवान् के साक्षात्कार का अन्तरङ्ग उपाय होने से निदिध्यासन विधेय है श्रवण और मनन वहिरङ्ग साधन है ये भी परम्परया ध्यान के साधन हैं।

यहाँ तक विधि का विचार है।

अब लक्षण सूत्र की व्याख्या करते हुये भगवत् शब्द से अभिन्न ब्रह्म शब्द का निर्वचन करते हैं। स्वभावतोऽपास्त समस्त दोषमिति। भगवान् स्वभाव अनादि प्रकृति

अर्थात् स्वरूप शक्ति उससे ही समस्त दोषों से रहित हैं। दोष अनेक तरह के हैं क्लेश और विकार ताप हैं उन्हां में क्लेश पाँच हैं १ अविद्या २ अस्मिता ३ राग ४ द्वेष ५ अभिनिवेश रूप हैं।

## वेदान्तरत्न मञ्जूषा

तत्र स्वरूपावरकं तमः॥ १ ॥ देहादावहम्बुद्धिर्मोहः॥ २॥ भोगेच्छा महामोहः॥ ३ ॥ तामिस्रः क्रोधः॥४॥ अतन्नाशे स्वनाशबुद्धिरन्धतामिस्रः ॥५॥ "तमोऽविवेकोमोहः स्यादन्तः करणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखेषणा। मरणंह्यन्धतामिस्रस्तामिस्रः क्रोध उच्यते। अविद्या पञ्चपर्वैषा प्रादुर्भूतामहात्मनः" इति वैष्णवपुराण वचनात्॥ जन्मास्तित्वस्ववृद्धिपरिणामापक्षयमारणात्मका विकाराः षड्विधाः, सत्त्वरजस्तमांसि प्राकृत गुणास्तत्कार्यभूताश्चनन्ता बद्धक्षेत्रज्ञ धर्माः। तदत्यन्ताऽभावाश्रयम्। अशेषदोषात्यन्ताभावश्च सार्वज्ञादिवदभावरूपो धर्म विशेषः। तथाच श्रुतिः—य आत्मा अपहतपाप्मा विजरोविमृत्युर्विशोको।

## कुञ्चिका

तदपेक्षयेति। निदिध्यासनापेक्षयेत्यर्थः। स्वभावतोपास्तेति विशेषणं व्याख्यातुमवतारयति। इदानीमिति। भगवत्पदार्थ इति। षड्विधैश्वर्यसम्पन्न इति तदर्थः। तद्भिन्नो नित्याविर्भूतमपहतपाप्मत्वादिगुणको भगवत् पदार्थ स्तन्मुखनिर्वचनेनेत्यर्थः। श्लोकं व्याचष्टे स्वभावत इति। स्वभावशब्दार्थं विवृणोति स्वभावेनेति प्रकृतिशब्देनात्र स्वरूपशक्ति रुच्यते तन्महिम्ना प्राकृतदोषाणां गन्धलशोऽपि दूरतोत्सारितो भवति यस्य नामस्मरणमात्रात्प्रत्यगात्मनां दोषास्तत्क्षणादपयान्ति किमुत वक्तव्यं परब्रह्मणि दोषगन्धालेस्यापि सम्भवना। दोषानेव पञ्चधा विभज्य दर्शयति दोषाश्चेति उक्तार्थे मानमाह। अविद्येति। एते पञ्च विपर्याः पातञ्जले क्लेशशब्देनोक्ताः त एव श्रीविष्णुपुराणे महर्षिणा श्रीपराशरेण पञ्चपर्वैषाऽविद्याशब्देनाभिहिता इत्याह त एवेति ते प्रञ्चक्लेशादय इत्याह। श्रीविष्णुपुराणस्य वचनमुदाहरति तमो मोह इति। तमस्स्वरूपं निर्वक्ति तत्र तम इति "तत्र" तेषु अविशिष्टं श्रीविष्णुपुराणवचनं पठति। अविद्यापञ्चपर्वैषा इति पञ्च पर्वाणि वृत्तिविशेषा यस्या सेत्यर्थः। यास्कमुनिः किल महाभूतानामुत्पन्नानां स्थितिकाले भौतिकेषु प्रत्यक्षेण जन्मादिषट्कमुपलभ्य निरुक्तवाक्यं चकार तथाहि "जायते ऽस्ति

विपरिणमते वर्द्धतेऽपक्षीयते विनश्यति" तानैव षड्विकारान् दोषपदवाच्यानाह । जन्मास्तित्वेति । प्राकृतगुणकार्या अनन्तास्तेऽपि दोषपदवाच्या इति वक्तुं तावत् प्रकृतेर्गुणान् दर्शयति । सत्वरजस्तमांसीति । तत्कार्यभूता इति प्राकृतगुणकार्यभूता इत्यर्थः । ते च सुखदुःखमोहात्मकादयः ॥ एते च दोषा बद्धदशायां प्रत्यगात्मनि प्रसिद्धा स्तेषामत्यन्ताभावः परब्रह्मणि वर्त्तते नातः प्रतियोगिप्रमितिं विना निषेधानुपपत्तिरूप दोषावकाश इत्याशयेनाह । बद्धक्षेत्रज्ञधर्मा इति ॥

औपनिषदानां पक्षे ऽभावस्य भिन्नपदार्थत्वानङ्गीकारात् किन्तु भाव एव' विवक्षाविशेषतयाऽभावशब्देनाभिधीयते न तु निरूपाख्यं वस्तु । तथाहि घटप्रागभावो मृत्पिण्ड एव ध्वंसाभावश्च कपालरूपः । अन्योभावश्च प्रतियोगिरूपः । अत्यन्ताभावश्चाधिकरण रूप इत्याशयेनाह । अशेषदोषाभावश्चेति गुणबोधिकां श्रुतिमुदाहरति । तथाच श्रुतिरिति । आविर्भूतस्वरूपस्थितिपूर्वमनृततिरोहितापहतपाप्मत्वादिकस्वरूपः पश्चाद्विमुक्तकर्मबन्धः शरीरात्समुत्थितः परंज्योतिरूपसम्पन्न आविर्भूतस्वरूपः सन्नापहतपाप्मत्वादिगुणविशिष्ट स्तत्र प्रजापतिवाक्ये ऽभिधीयते । दहरवाक्येत्वतिरोहितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते । आविर्भूतस्वरूपस्यापि जीवस्यासम्भावनीयाः सेतुविधारत्वादयः सत्यशब्दनिर्वचनागतं चेतननियन्तृत्वञ्च दहराकाशस्य परब्रह्मतां साधयन्ति सेतुत्वसर्वलोकविधारणत्वादयो न मुक्तानां नित्यानां वा सम्भवतीति जगद्व्यापारवर्जमित्यत्र स्थितं । अतएव नित्याविर्भूतापहतपाप्मत्वादिगुणाष्टकतया तेष्वतिप्रसक्तस्य नित्याविर्भूतापहतपाप्मत्वादि मत्वं कथं ब्रह्मलिङ्गत्वमितिशङ्कापिनिरस्ता ।

## भाषानुवाद

इन्हीं को पुराणों में १ तम २ मोह ३ महामोह ४ तामिस्र अन्धता मिश्र शब्दों से कहे हैं । इन्हों में स्वस्वरूप को आवरण करने वाला तम है । अनात्म देह में आत्म बुद्धि मोह हैं । विषय भोग की इच्छा महामोह हैं । क्रोध तामिस्र हैं अन्य के नाश से अपना नाश मान लेना अन्धता मिश्र हैं । यह वार्ता विष्णु पुराण में स्पष्ट हैं । सत्व रज तम यह तीन प्रकृति के गुण हैं उनके कार्य अनन्त हैं । १ अस्ति २ जन्म ३ वृद्धि ४ परिणाम ५ अपक्षय ६ मरण ये षट् विकार हैं । ये सब बद्ध जीवों के धर्म हैं । इन सब दोषों का अत्यन्ताभाव ब्रह्म में हैं । यह दोषात्यन्ताभाव सार्वज्ञ्यादि धर्म के तुल्य असाधारण भाव रूप ब्रह्म का धर्म है । क्योंकि वेदान्त सिद्धान्त में अभाव को अधिकरण स्वरूप

मानते हैं। य आत्मापहतपाप्मा विजरो विमृत्यु यह श्रुति उक्तार्थ में प्रमाण हैं।

## वेदान्तरत्नमञ्जूषा

विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः, "कर्मक्लेशविपाकद्यैरस्पृष्टस्याखिलेशितुः ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्यताः। परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे" इति पराशरोक्तिश्च। अनेन निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जनमित्यादि निर्गुणवाक्यानि व्याख्यातानि भवन्ति। तेषां हेयगुणादिनिषेधपरत्वात्॥

नन्वेवं तर्हि गुणदोषवत्त्वाभावान्निर्विशेषत्वसिद्धिः; साचास्मत्संमतत्वादिष्टैवेतिचेत् तत्राह—अशेष कल्याण गुणैकराशिमिति। अशेषाणां कल्याणात्मकानां गुणानां एको मुख्यो यो राशिः पुञ्जभूतस्तम्, अशेषकल्याण गुणानामेके मुख्या राशयो यस्मिंस्तमितिवा, सर्व कल्याणानां मोक्षप्रदातृत्वादीना मनन्ताचिन्त्य स्वाभाविकगुणानां ज्ञानादीनां चैको मुख्यो राशिः।

## कुञ्चिका

सेतुत्वादीनां तदसम्भावितधर्माणामपिश्रवणात्। निर्गुणमिति गुणसामान्यनिषेधः निष्कलमिति शरीरसामान्यनिषेधः निष्क्रियमिति क्रियासामान्यनिषेधः यद्यपि नगुणनिषेधः सङ्कोचयितव्य आर्थगुणनिषेधबलेन सर्वगुणविरहावगमात् ज्ञानस्य ज्ञानादिगुणाश्रयत्वादर्शनाद्ब्रह्मणोज्ञानमात्रत्वप्रतिपादनेन निर्गुणत्वं फलितं तथापि यथा पशुना यजेत छागस्य वपायाः इत्यादिषु छागो वा मन्त्रवर्णात् इत्युक्तन्यायात्सामान्यशब्दो विशेषदर्शने सति तत्र पर्य्यवस्पति तथा गुणसामान्यनिषेधो विशेषगुणनिषेधे पर्य्यवस्यति किञ्च सामान्यशब्दानां विशेषपर्य्यवसायित्वं व्युत्पत्तिसिद्धम् यथा गामानय गां वधानेत्यादिषु सामान्यशब्दो विशेषकटाक्षेण प्रयोजकवृद्धेन प्रयुज्यते तत एव हि प्रयोज्यवृद्धश्च न सर्वा गोव्यक्तीरानयति किन्तु विवक्षितव्यक्तिविशेषमेवानयति तथैव हि तत्र व्युत्पत्तिः एवं ज्ञातृत्व प्रमुखान् कल्याणगुणैकराशिमित्यनेन स्वभावतोपास्तसमस्तदोषमित्यनेन च उत्सर्गापवादन्यायः सामान्यविशेषन्यायश्चाभिप्रेतः उपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य विरोधपरिहाराय सङ्कोच उत्सर्गापवादन्यायः अविरोधेऽपि वैयर्थ्यपरिहाराय सङ्कोचश्चेद्गोबलवर्दनीयायः उपात्तविशेषविषये

तस्य सङ्कोचस्सामान्यविशेषन्याय इति भिदा किञ्चाध्यात्मशास्त्रेषु गुणशब्दस्सत्वरज-स्तमस्सु प्रसिद्धः नहि तस्य गुणाः सर्वे सर्वैः मुनिगणै रपि वक्तुं शक्या वियुक्तस्य सत्वाद्यै-रखिलैर्गुणैः सत्वंरजस्तम इतिगुणाः प्रकृतिसम्भवाः निर्गुणस्याप्रमेयस्य गुणाः गुणेषुव-र्त्तन्ते कारणंगुणसङ्गोऽस्य । निर्गुणं गुणभोक्तृच नान्यं गुणेभ्यः कर्त्तारम् दैवी ह्येषा गुण-मयी मम मायादुरत्यया विनाहेयैर्गुणादिभिः गुणादिदोषाँश्च मुने व्यतीतः इत्यादिषु एवं केवलगुणशब्दस्य सत्वादिपरत्वेन प्रसिद्धिप्राचुर्य्यान्निर्गुणशब्दादयः सत्वादिनिषेधपराः इत्याशयेनाह । तेषां हेयगुणनिषेध परत्वमिति । गुणदोषराहित्यस्य ब्रह्मणोनिर्विशेषत्वं प्रसज्येत तथासति सविशेषवेदान्तविचारएवायुक्त स्तथाच जिज्ञासाशास्त्रारम्भोवैयर्थ्यमा-पद्येत इत्याशङ्कते । नन्विति ।

## भाषानुवाद

आत्मा पाप रहित है जरा और मृत्यु शोक रहित है । और सत्य काम सत्य सङ्कल्प हैं कर्म और क्लेश विपाक से रहित परमात्मा हैं ज्ञानादि षट्गुण की निधि हैं। और अचिन्त्यविभूतिमान् है और पर अवर को ईश हैं । परों के पर हैं जिसमें क्लेश आदि को की गन्ध भी नहीं हैं यह विष्णु पुराण में महर्षि पराशरजी ने कहा है । इस कथन से निर्गुण श्रुतियों की भी व्याख्या हो चुकी है उन श्रुतियों का हेय गुण निषेध विषय हैं । अर्थात प्राकृत गुण भगवान् में नहीं है किन्तु दिव्य मङ्गल गुण सागर है यदि इस प्रकार व्यवस्था नहीं की जाय तो सत्य कामत्व सत्यसङ्कल्पत्वादि गुण प्रतिपादक श्रुति वाक्यों का बाध होजायेगा । यहाँ पर वादि का प्रश्न उपस्थित होता है कि यदि ब्रह्म को गुण दोष रहित बतलाते हो तो निर्विशेष ब्रह्मवाद ही सिद्ध हुआ सो हमारे सिद्धान्त के अनुकूल है इस शङ्का को निवारण के लिये अशेष कल्याण गुणै कराशिम् । यह विशे-षण भगवान् आद्याचार्य श्रीम्वार्कदेवाचार्य्यजी ने दिया है । उसका यह अर्थ है कि सम्पूर्ण कल्याण गुणों की राशी भगवान् हैं ।

## वेदान्त रत्नमञ्जूषा

समुदायभूतस्तस्याधारस्तमितिवा । गुणाश्च ज्ञानशक्तिबलैश्वर्य तेजो वीर्य सौशील्य वात्सल्यार्जवसौहार्द सर्व शरण्यत्व सौम्यकरुणास्थिरत्वधैर्य्यदया माधुर्यमार्दवादयः । तत्र ज्ञानं सर्वदेशकालवस्तुविषयक प्रत्यक्षानुभवरूपम् । शक्तिश्च अघटघटनापटीयस्त्वरूपसामर्थ्यम् । बलं विश्वधारणादिशक्तिः ऐश्वर्यं

नियमनशक्तिः। श्रमहेतोरपरिमितत्वेऽपि श्रमशून्यत्वं तेजः। वीर्यं परैरनभिभूयमानत्वेसति पराभिभवनसामर्थ्यम्। एतेजगत्सृष्ट्याद्युपकारकाः षड् भगवच्छब्दवाच्यपरब्रह्माश्रिताः॥

जात्यादिमहत्त्वमनपेक्ष्यातिमन्दैरप्यमायया संश्लेषभाक्त्वं सुशीलत्वम्।

कुञ्चिका

गुणानेव दर्शयति गुणाश्चेति "तत्र" तेषु ज्ञानादिषु ज्ञानशब्दार्थं विवृणोति ज्ञानमिति। "एते" ज्ञानशक्तिबलैश्वर्यवीर्याणि यद्विषये तेषामुपकारकत्वं तदाह जगदिति। तेषामाश्रयमाह। भगवच्छब्द इति। सौशील्यपदार्थं व्याचष्टे। जात्यादिमहत्त्वमिति।

भाषानुवाद

वे गुण ज्ञान शक्ति और बल ऐश्वर्य्य तेज वीर्य्य सौशील्य वात्सल्य आर्जव सौहार्द सौम्य कारुण्य स्थिरता धैर्य्य दया मार्दवादि हैं। उन्हों में सर्व देश काल वस्तु का प्रत्यक्ष अनुभव ज्ञान है। अघट घटना करने कि सामर्थ्य को शक्ति कहते हैं। सम्पूर्ण विश्व को धारण करने की सामर्थ्य को बल कहते हैं। नियमन शक्ति का नाम ऐश्वर्य है। किसी से पराभव न होके सब को परा भव करना यह सामर्थ्य वीर्य है। अपरमित श्रम का कारण प्राप्त होने पर श्रम न हो उसे तेज कहते हैं। यह षट् गुण विश्व के सर्जनादि के उपयोगी हैं। और भगवान् शब्द के वाच्य हैं। और पर ब्रह्म में रहते हैं जाति प्रभृति का महत्व को छोड़ के निष्कपट हो मन्द (यानी) हीन जाति के पुरुषों से आदर के साथ मिलना सौशिल्य कहलाता है।

वेदान्तरत्नमञ्जूषा

भृत्यदोषाननुसंधानं वात्सल्यम्। आश्रितदुःखासहिष्णुत्वंमार्द्दवम्। मनोवाक्कायैः समत्वमार्जवम्। आत्मशक्तिमतिक्रम्य पररक्षणोद्यमः सौहार्दम्। ब्रह्मादिस्थावरान्तैः साधारणोपायत्वं सर्वशरण्यत्वं, तदेवसौम्य शब्दाभिधेयम्। परदोषक्षपणस्वभावः कारुण्यम्। युद्धादावचलत्वं स्थिरत्वम्। प्रतिज्ञापालनत्वं धैर्यत्वम्। निर्हेतुकपरदुःखदुःखित्वेसति तन्निराचिकीर्षा दया। अमृतपानवत् स्वादुदर्शित्वं माधुर्यमित्यादयः स्वाभाविका अनन्ताश्च। एते सौशील्यादयस्तु भगवदाश्रयणे आश्रितरक्षणे चोपयोगिन इति विवेकः। सूत्रिताश्चैते भगवता श्रीबादरायणेन—विवक्षित गुणोपपत्तेश्चेति। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेति।

### कुञ्चिका

वात्सल्यं निर्वक्ति-भृत्यदोषेति। एतेषामुपयोगमाह—एत इति। उक्ताथ सूत्रकारस्य संमतिमाह। सूत्रिताश्चेत इति। मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः।

### भाषानुवाद

जो जन आपके आश्रित है उन्हों के दोषों को विचार नहीं करना ही वात्सल्य है। भगवदाश्रित जनों के दुःख को सहन न करने का नाम मार्दव है मन—वाणी शरीर से समान आचारण करने का नाम सम हैं। अपनी शक्ति से अधिक पर को रक्षा का उपाय करना सौहार्द है। ब्रह्मा से लेकर स्थावर पर्यन्त के साधारण उपाय को सर्व शरण्यत्व कहतेहैं। उस ही का नाम सौम्य है। पर के दोषों को दूर करना ही कारुण्य है। युद्ध में चलायमान न होना इसे स्थिरत्व कहते हैं। अपनी प्रतिज्ञा का पालन करने का नाम धैर्यत्व है। निर्हेतुक पराये दुःख से दुःखित हो उसके दुःख निवारण की इच्छा को दया कहते हैं। अमृतपान के समान स्वादु भगवान् का दर्शन ही माधुर्य है। अपनी रक्षा करने का स्वभाव ही स्वामित्व है। सुख से प्राप्ति होना सौलभ्य है। सत्य भाषण का नाम प्रतिज्ञा है। उपकार की इच्छा नहीं करना इसे पूर्णत्व कहते हैं। अल्प करने को बहुत मान लेना कृतज्ञता है। अपने आत्मा का भी दान कर देने का स्वभाव औदार्य कहलाता है। और भी भगवान् में स्वाभाविक कल्याण गुण अनन्त हैं। ये सब सौशी-ल्यादि गुण प्रपन्न भक्त के रक्षण में उपयोगी हैं। ये सब गुण भगवान् के श्रीवेदव्यासजी ने विवक्षित गुणोपपत्तेश्च'। ब्र० १।२।२ इस सूत्र में प्रदर्शन किये हैं। आपकी स्वाभाविक परा शक्ति नाना प्रकार की है।

### वेदान्तरत्नमञ्जूषा

सत्यकामः सत्यसंकल्पः सर्वांल्लोकानीशत ईशनीभिः, सर्वस्य शरणं सुहृत्, विष्णोर्नु कं वीर्याणि प्रावोचत् यः पार्थिवानि विममे रजांसि न ते विष्णोर्जायमानो न जातो देवस्य महिम्नः परमं तमाप, सहस्रधा महिमानः सहस्र इत्यादिना श्रूयन्ते च। "ज्ञानशक्तिबलैश्वर्यतेजोवीर्याण्य-शेषतः भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभिः॥ स सर्व भूतप्रकृतिं विकारान् गुणांश्च दोषाँश्च मुने व्यतीतः। अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुव-

नान्तराले। समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशावृतभूतसर्गः। इच्छागृहीताऽभिमतोरुदेहः संसाधिता शेषजगद्धितोऽसौ। तेजोबलैश्वर्यमहावबोध-स्ववीर्यशक्त्यादिगुणैकराशिः।

## कुञ्चिका

सर्वमिदमभ्यात्तोऽवाक्यनादर इत्यादिश्रुत्यो वक्तुमिष्टानां मनोमयत्वगुणानां परमात्मन्येवोपपत्तेश्चेति सूत्रार्थः। श्रुत्यर्थस्तु मनोमयः शमदमादिसाधनसहकृतपरमात्मोपासननिर्मलीकृतेन मनसा ग्राह्यः, प्राणशरीरः सर्वप्राणधारकः प्राणो यस्य शरीरमाधेयं नियम्यभूतञ्च स, भारूपो भास्वररूपो दिव्याप्राकृतकल्याणरूपवत्तया निरतिशयौज्ज्वल्ययुक्तः, सत्यसङ्कल्पः अप्रतिहतसङ्कल्पः, आकाशात्माआकाशवत्स्वच्छरूपः सर्वप्रकाशको वा, सर्वं विश्वं कर्म यस्य सर्वाक्रिया वा यस्य स सर्वकर्मा, सर्वे कामा भोग्यादयः सर्वविधा यस्य सन्ति स सर्वकामः दिव्याप्राकृतस्वभोग्यभूतसर्वविधगन्धरसयुक्तः, सर्वमिदं रसपर्य्यन्तमङ्गीकृतवानित्यभ्यात्तः, "भुक्ता ब्राह्मणा इतिवत्कर्त्तरि क्तः यतोऽनादरः प्राप्तसमस्तकामत्वेनादरणीयाभावादादररहितः। अतो वाक् उक्तिर्यस्य नास्तीत्यवाकी परिपूर्णैश्वर्य्यत्वात् सर्वं तुच्छीकृत्य तूष्णीमासीन इत्यर्थः।

## भाषानुवाद

भगवान् का ज्ञान स्वाभाविक है। स्वाभाविक बल और क्रिया हैं। भगवान् सत्य काम और सत्य सङ्कल्प हैं। भगवान् अपनी नियमन—शक्ति द्वारा सब लोकों को नियमन करता है। सब का रक्षक और सुहृद है। विष्णु भगवान् के वीर्य को कोई भी नहीं कह सकता है। जो पृथिवी के परमाणु गणना कर सके ऐसे मनुष्य का जन्म न हुआ न आगे होगा जो देव भगवान् की महिमा का अन्त पावें। भगवान् की हजारों महिमा हैं उससे भी अनन्त महिमा हैं यह श्रुति में कहा है। १ सम्पूर्ण ज्ञान और २ शक्ति ३ बल ४ ऐश्वर्य ५ वीर्य ६ तेज ये षट् भग शब्द के अर्थ हैं। हेय गुणों के बिना भगवान् सर्व भूत और प्रकृति के विकारों से रहित हैं। और प्राकृत गुण और दोषों से भी रहित हैं। सब आवरणों से अतीत हैं, सब के आत्मा हैं। सब भुवनों में व्याप्त हैं सकल कल्याण गुणों के आश्रय भगवान् हैं। अपनी शक्ति के लेश से सब भूतों की सृष्टि को आवरण कर रक्खा है। भगवान् अपनी इच्छा से अनन्त रूपों को धारण करते हैं। और सर्व जगत् के हित करने वाले हैं। भगवान् तेज बल ऐश्वर्य ज्ञान और वीर्य्य शक्त्यादि गुणों की राशि हैं।

## वेदान्तरत्नमञ्जूषा

परः पराणां सकला नयत्र क्लेशादयः सन्ति परावरेशे। स ईश्वरो व्यष्टि समष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः। सर्वेश्वरः सर्वगः सर्ववेत्ता समस्तशक्तिः परमेश्वराख्य " इत्यादिस्मरणं च। कल्याणधर्माश्च जगज्जन्मादि-कारणत्व—शास्त्रयोनित्व—मोक्षप्रदत्व—सर्वकर्मफलप्रदत्व विश्वाधारत्व-सर्व-व्यापित्व—सर्वनियन्तृत्व—निरतिशयसूक्ष्मत्व— निरतिशयमहत्त्वेश्वरेश्वरत्व—सर्वा-नतिक्रमणीयत्वादयो ह्यसंख्याताः। जन्माद्यस्य यतः शास्त्रयोनित्वात्। तन्नि-ष्ठस्य मोक्षव्यपदेशात्। अन्तस्तद्धर्मोपदेशात्। आकाशस्तल्लिङ्गात्। फलमत उपपत्तेरित्यादिसूत्रेभ्यः। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति। यः कारणानि निखिलानि तानि कालात्मयुक्ता-न्यधितिष्ठत्येकः।

## कुञ्चिका

उक्तार्थे श्रुतिं प्रमाणयति परास्येति। सूत्रकारपितृश्रीपराशरसमत्याप्युक्तार्थं द्रढयति। ज्ञानशक्तिरिति। अशेषतः। अशेषैः स्वविस्तारभूतैर्गुणान्तरैस्सह भगवानितिशब्दघट-कभकारादीनामर्थं निरूप्य सम्प्रति न कारस्यार्थमाह। विनाहेयैरिति। गुणादिभिः त्रिगुण-तत्कार्यक्लेशादिभिः निखिलहेयप्रत्यनीकसमस्तकल्याणगुणात्मकत्वं एतेन श्रीमद्द्वाद-शारक्षमन्त्रे भगवच्छब्दार्थो निरूपितः दर्शितमर्थं प्रपञ्चयति। स सर्वेत्यादिचतुर्भिः। ससर्वेति। सर्वभूतप्रकृतिरव्यक्तं विकारा महदाद्याः गुणाः सत्त्वाद्याः। आदिशब्देन तत्कार्यदुःखाज्ञानादय उक्ताः व्यतीतः तेभ्यो विलक्षणः। अनेनाचिद्विलक्षणत्वं भगवत उक्त्या प्रत्यगात्मनोरपि वैलक्षण्यमाह। अखिलात्मेति। भुवनान्तराले यदस्ति तत्सर्वं तेनावृतं छन्नं व्याप्तमितियावत् अतीतसर्वावरणइति। वहिरङ्गमायाशक्तिस्तत्कार्यसंसर्ग-रहित इत्यर्थः। समस्तेति। वक्ष्यमाणाःसमस्ताः कार्त्स्न्येन कल्याणगुणाः आत्म स्वभावो यस्य सः तथा स्वशक्त्या लेशेनांशेनावृतभूतवर्गो येन सः जगद्धितायावतारकालेष्विच्छया गृहीततत्तत्कार्योचितानेकदेहः। कल्याणगुणानेवाह तेजोबलेति। भगवानिति। भगवा-नितिशब्दस्थनकारस्यार्थमपि विस्तरेणाह न यत्रेति। क्लेशाः अविद्यास्मितादयः। आदिश-ब्देन कर्मविपाकाशया उक्ताः। आशयो वासना। स इति। व्यूहविभवादिरूपेण च व्यष्टि-समष्टिरूपः पररूपेणाव्यक्तरूपः व्यूहादिरूपेण व्यक्तरूपः। एवं सर्वावस्थासु चिदचिद्भिन्नाभिन्न-

त्वेऽपि सर्वेश्वरः नतुपरवशः। सर्वदृक् "तच्चक्षुर्देवहितम्। चक्षुर्देवानां उत त्रैलोक्यस्यैकचक्षुषः" इतिवत्। यद्वा "यःसर्वज्ञस्सर्वविदितिवत्सर्वं वेत्ति सर्वप्रकारेण वेत्तीति विष्णुपुराणोक्तश्लोकानामर्थः।

कल्याणधर्मानाह। कल्याणधर्मांश्चेति। उक्तकल्याणधर्मान् क्रमशः सूत्रकारसंमत्या द्रढयति। जन्माद्यस्ययतः इति " अस्याचिन्त्यविचित्रसंस्थानसम्पन्नासङ्ख्येयनामरूपादिविशेषाश्रयस्याचिन्त्यस्वरूपस्य विश्वस्य सृष्टिलयाः यस्मात्सर्वज्ञाद्यनन्तगुणाश्रयाद्ब्रह्मेशकालादिनियन्तुर्भगवतो भवन्तीति। शास्त्रयोनित्वादिति। ब्रह्म नानुमानादिगम्यं किन्तु शास्त्रप्रमाणकं कुतः शास्त्रयोनित्वात् शास्त्रं वेदः योनिःकारणं ज्ञापकं प्रमाणं यस्मिस्तच्छास्त्रयोनिस्तस्यभावस्तत्त्वमित्यर्थः। नचाचेतनं प्रधानमात्मशब्दवाच्यं कुतः तस्मिन् सदादिशब्दाभिधेये ईक्षितरि तेजोऽवन्नादिकर्तरि निष्ठा निदिध्यासनापरपर्य्यायलक्षणा यस्य विदुषः सतन्निष्ठस्तस्य मोक्षोपदेशादिति। "अन्तस्तद्धर्मोपदेशात्"। १।१।२१॥ आदित्याक्षणोरन्तः श्रूयमाणः पुरुषः परमात्मैव कुतः तद्धर्मोपदेशात् तस्य पमात्मन एव खलु सर्वथाऽपहतपाप्मत्वस्वोपासकसर्वपापमोचयितृत्वादीनां "सैवऋक् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्मेति सर्वात्मकत्वादिधर्माणामस्मिन्वाक्ये समन्वयादिति। "आकाशस्तल्लिङ्गात्" अस्यलोकस्य का गतिरित्याकाश इति होवाचेत्यत्राकाशशब्दवाच्यः परमात्मा कुतः "सर्वाणि हवाइमानि भूतान्याकाशादेवोत्पद्यन्त इति सर्वस्रष्टृत्वादितल्लिङ्गमिति। फलमत-उपपत्ते रिति। ३।२।३८। फलदातृत्वं गुण विशेषं परस्य ब्रह्मण आह फलमिति तत्तदधिकारिणां तत्तदनुरूपफलं भोगलक्षणञ्च अतः परस्मादेव भवितुमर्हति कुतः। उपपत्तेः। श्रीपुरुषोत्तमस्यैव सर्वज्ञस्य सर्वशक्तेः सर्वनियन्तुः फलदातृत्वोपपत्तेरितिसूत्राणामर्थः" उक्तार्थं श्रुतिप्रमाणेन द्रढयति यतो वा इमानीति।

जीवन्ति। आत्मभूतेन जीवन्तीत्यर्थः। यत्प्रयन्ति सन्ति भूतानि यदाभिसंविशन्ति लीयमानानि सन्ति यदभिसंविशन्ति लीयन्ते समित्येकीकरणे एकीकृतयाप्रवेशः सम्वेशः। यद्वायन्तीति मोक्षः। अभिसम्विशन्तीति प्रलयः। अस्मिन्पक्षे यच्छब्दस्यावृत्तिरित्यर्थः।

## भाषानुवाद

परों से भी पर हैं। क्लेश आदि कों का लेश मात्र भी भगवान् में नहीं हैं। ईश्वर व्यष्टि रूप समष्टि रूप हैं। अव्यक्त और व्यक्तरूप हैं। सर्वेश्वर सर्व व्यापक सर्व बेत्ता परमेश्वर हैं। यह वार्ता विष्णु पुराण में स्पष्ट हैं। भगवान में जगत्कारणता शास्त्र

विषयत्व मोक्ष दान सर्व कर्म फल दान विश्वाधारता सर्व व्यापकता सर्व नियामकता अत्यन्त सूक्ष्मता अत्यन्त महत्व ईश्वरेश्वरता सर्वानतिक्रमणीयता प्रभृति असङ्ख्यात कल्याण गुण हैं। जन्माद्यस्ययत: ब्रह्म सू० ।१।१।२। इस जगत की उत्पत्ति स्थितिलय का कारण ब्रह्म शास्त्र द्वारा जाना जाता है। प्रत्यक्ष अनुमानादिकों से वह नहीं जाना जाता है। ब्रह्म निष्ठ की मोक्ष होती हैं। आदित्य और चक्षु के अन्दर श्रूयमाण भगवान् ममुक्षु से ध्येय हैं। क्योंकि अपहतपाप्मत्व और सर्वात्मत्वादिक धर्मों का इस श्रुति में श्रवण हैं। आकाशस्तल्लिङ्गात् १। १। २३। आकाशपद से परमात्मा का ग्रहण हैं। क्योंकि परमात्मा के असाधारण जगत्कारणत्व जायस्त्वपरायणादि धर्मों का श्रवण है इन सूत्रों से साबित होचुका कि जगत्कारणत्वादि कल्याण गुण भगवान् के हैं। कर्मों के फल देने वाले भी परमेश्वर ही है। सूत्रों के द्वारा उक्तार्थ का समर्थन किया।

## वेदान्तरत्नमञ्जूषा

स कारणं कारणाधिपाधिपः। सर्वे वेदा यत्पदमामनन्ति। तं त्वौपनिषदं पुरुषं पृच्छामः। तद्वेदगुह्योपनिषत्सुगूढः संसारबन्धस्थितिमोक्षहेतुः। कर्माध्यक्षः सर्वभूताधिवासः तस्मिँल्लोकाः श्रिताः सर्वे सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम्। यो देवोऽग्नौ योऽप्सु यांविश्वं भुवनमाविवेश ओषधीषु वनस्पतिषु तस्मै देवाय नमोनमः। एकोदेवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा सर्वांल्लोकानीशतईशनीभिः सर्वस्यप्रभुमीशानं तमीशानं वरदं भूतमीड्यम्। सूक्ष्माच्च सूक्ष्मतरं विभाति यस्मान्नाणीयो न ज्यायोऽस्तिकश्चित्। अणोरणीयान्महतोमहीयान्। तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्। तदु नात्येति।

## कुञ्चिका

शास्त्रैकप्रमाणगोचरत्वं श्रुतिप्रमाणेन व्यवस्थापयति। सर्वे इति। तस्य सर्वान्तरात्मत्वं शास्त्रसिद्धं श्रुतिमानेन दर्शयति। कर्माध्यक्ष इत्यादिना।

## भाषानुवाद

अब श्रुतियों से भी वह अर्थ साबित करते हैं। जिससे सर्व भूत उत्पन्न होते हैं। जिसके जिलाने से जीते हैं। उसमें प्रलय समय में लीन होते हैं उसे भगवान् कहते हैं। श्वेताश्वेततर उपनिषद में ब्रह्मवादि मुनियों की मीमांसा है कि जगत् का कारण

कौन है इस सृष्टि की रचना किससे हुई। और किस अदृष्ट से हम सब जीते हैं। मोक्ष अवस्था में हमारी स्थिति कहां होगी। और किसके नियम से हम सब सुख दुःख को भोग रहे हे। यह प्रश्न ब्रह्म वादियों का है। कोई काल और स्वभाव को कारण नहीं कह सकते हैं क्योंकि यह सब पराधीन हैं। जब मुनि गण कुछ निर्धारण नहीं कर सके तब उन्हों ने परमात्मा का ध्यान किया तब उन्हों ने परमात्मा की दो शक्ती ध्यान में देखी एक जीव रूप परा शक्ति दूसरी अपरा जड़ा शक्ति। और निखिलकालस्वभावकारणों का आदि अधिष्ठाना परात्मा को भी देखा। भगवान् कारणों के भी कारण है। वह स्वामियों के स्वामी हैं। सम्पूर्ण वेद जिसके पद को बतलाते हैं। उस उपनिषत्प्रतिपाद्य पुरुष को हम पूछते हैं। वेद गुह्य उपनिषद् में परमात्मा गूढ़ हैं। संसार बन्धन और स्थिति मोक्ष के हेतु भगवान् ही हैं। कर्मों के अधिष्ठाता और सर्व भूतों के वास स्थान भगवान् ही हैं। सर्व लोक भगवान् के आश्रय हैं। परमात्मा सब में व्यापक हैं। जैसे दुग्ध में घृत है। जो देवता अग्नि और जल सब भुवन में और औषधि वनस्पति में प्रविष्ट है उस देवता को नमस्कार है। एक देव परमात्मा सब भूतों में गूढ़ हैं। सर्व व्यापी सब का अन्तरात्मा हैं। भगवान् अपनी शक्ति के द्वारा सर्व लोकों का नियमन कर्ते हैं। भगवान् सबों के प्रभु अर्थात स्वामी हैं और सब के ईश्वर है और वर के देने वाले भगवान् ही है। सब प्राणी मात्र उसकी स्तुति करते हैं। भगवान् सूक्ष्म पदार्थों से भी अति सूक्ष्म भान होते है। उनसे कोई भी छोटा नहीं है। न कोई उनसे बड़ा ही है। वह अणु से भी अणु हैं और बड़े से भी बड़े है। देवताओं के भी देवता है। उनको कोई उल्लंघन नहीं कर सकता है।

## वेदान्तरत्नमञ्जूषा

कश्चनेत्यादिश्रुतिभ्यः। अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते, वेदैश्चसर्वैरह-मेववेद्यो वेदान्तकृत्। नतास्म सर्व वचसां प्रतिष्ठा यत्र शाश्वती। वेदे रामायणे चैव पुराणे भारते तथा। आदावन्ते चमध्ये च हरिः सर्वत्र गीयते। बन्धकोभव-पाशेन भवपाशाच्च मोचकः। कैवल्यदः परं ब्रह्म विष्णुरेवसनातनः। मोक्ष-यिष्यामि मा शुचः। यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः। ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया। मत्तः परतरं नान्यत् किञ्चिदस्ति-

धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रेमणिगणा इव । बुद्धिर्मनोमहद्वायुस्तेजोऽम्भः खं मही च या । चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ।

### कुञ्चिका

उक्तार्थं स्मृतिप्रमाणेनापि द्रढयति । अहं सर्वस्येति । अहं जिज्ञास्यभूतजगज्जन्मादिलक्षणलक्षितपरब्रह्मस्वरूपः । सर्वस्य ब्रह्मादिस्थावरान्तस्य जगतः प्रभव उत्पत्तिकारणम् । मत्त एवास्य सर्वंदेवमनुष्यादिलोकगमनागमनवृद्धिह्रासादिकं प्रवर्त्तते। एतेन जगत्कारणत्वं भगवत उक्तं भवति सर्ववेदवेद्यत्वं भगवतः स्मृतिवचसा प्रमाणयति वेदैश्चेति । इन्द्राग्निसूर्येन्द्राग्निमित्रावरुणवाय्वादिप्रतिपादकैरपि वेदैरहमेव वेद्यः मम सर्वात्मकत्वादित्यर्थः । सर्वस्य प्राणिनः परमेश्वराधीनत्वमाह—ईश्वर इति । ईश्वरः सर्वचेतनाचेतननियमनशीलो भगवान्वासुदेवः सर्वभूतानां हृद्देशे ।

### भाषानुवाद

ये सब श्रुतियाँ उक्त अर्थ में प्रमाण हैं। भगवान् में सर्व जगत्कारणत्वादि गुण कहे थे उनको श्रुति और सूत्रों के द्वारा प्रमाणित कर चुके अब स्मृति के द्वारा उक्त गुणों को प्रमाणित करते हैं । अहं सर्वस्य प्रभव इति । मैं सब की उत्पत्ति का कारण हूँ मेरे द्वारा ही सब प्रवृत्त होता है । सब वेदों से मैं ही वेद्य हूँ । जिस भगवान् में सब वेद वाक्यों का सम्बन्ध है उसको हमारा नमस्कार है । वेदों में रामायण और भारत पुराणों में आदि और मध्य अन्त में हरी ही का गान किया जाता है । संसारपाश से बन्धन कर्ता उससे छुड़ाने वाला और मोक्ष का दाता परब्रह्म सनातन विष्णु ही हैं । इससे यह सिद्ध हो चुका कि सर्व जगत्कारणत्व सर्व वेद वेद्यत्व भवपाश मोचकत्व मोक्ष प्रदत्व कल्याण गुण भगवान् में सर्वदा विद्यमान हैं । सब पापों से तुझको मैं छुड़ा दूंगा तू शोक मत करै । जिससे सब भूतों की प्रवृत्ति होती हैं । जिससे यह सर्व जगत् व्याप्त हो रहा है । स्ववर्णाश्रमोचित कर्म द्वारा भगवान् का पूजन करके नैष्कर्म्य सिद्धि को प्राप्त होता है । ईश्वर सबों के हृदय में विराजमान है । मेरे से परतर श्रोर कोई तत्त्व नहीं हैं । मेरे ही में सकल जगत ओत प्रोत है जैसे सूत्र में मणिगण प्रोत हैं । बुद्धि और मन महत्तत्त्व वायु तेज बल आकाश पृथिवी और चार प्रकार के प्राणी ये सब श्रीकृष्णचन्द्र भगवान् में प्रतिष्ठित हैं ।

### वेदान्तरत्नमञ्जूषा

इत्यादिस्मृतिभ्यः । एतेन स्वरूपेण बृहद्गुणयोगाच्च यद्बृहत्तमं वस्तु

तद् ब्रह्मशब्दवाच्यमिति निर्वचनसिद्धिः। बृंहति बृंहयति तस्मादुच्यते परं ब्रह्मेति श्रुतेः। एष प्रकृतिरव्यक्तः कर्त्ता चैव सनातनः। परं च सर्वभूतेभ्यस्तस्माद् वृद्धतमोऽच्युतः। बृहत्वाद् बृंहणत्वाच्च ब्रह्मेत्यादिस्मृतेश्च। तथाहि, बृहि बृंहिवृद्धावित्यस्माद्धातोरौणादिकगणपठितेन मनप्रत्ययेन ब्रह्मशब्दो व्युत्पन्नः। योगवृत्या ब्रह्मपदस्य निरतिशयबृहत्वपरत्वे सिद्धे तस्यासंकोचेन देशकालवस्तुपरिच्छेदशून्ये वस्तुनि पर्यवसानं निश्चीयते। तथाभूतश्च भगवच्छब्दवाच्यः पुरुषोत्तमो रमाकान्तः श्रीकृष्णएवेति फलितम्॥

## कुञ्चिका

अर्जुन तिष्ठति किं कुर्वन् सर्वभूतानि मायया निजशक्त्या भ्रामयन् तत्तदनादिबीजभूतकर्मानुसारेण शुभाशुभकर्मसु प्रवर्त्तयन् कथं भूतानि यन्त्रारूढानि प्रकृतिपरिणामदेहेन्द्रियरूपं यन्त्रमारूढान्यारोपितानि यथा दारूमययन्त्रमारूढानि कृत्रिमाणि पक्षिमृगादिभूतानि सूत्रबद्धानि सूत्रधारो लोके भ्रमयति तद्वदित्यर्थः। एतेनेति। अशेषकल्याणगुणैकराशिमिति विशेषणेनेत्यर्थः सचार्थः श्रुतिसिद्ध इत्याह। बृंहति बृंहयतीति। स्मृत्याप्युक्तार्थं द्रढयति। एष इति व्याकरणात्याप्युक्तर्थोनिश्चीयत इत्याह। तथाहीत्यादिना सा च वृद्धिर्निरवधिकमहत्वमित्याह। योगवृत्येति "तथाभूतङ्केशलगानानिरवधिकमहत्वाश्रयः देशकालवस्तुपरिच्छेदशून्यः।

## भाषानुवाद

अर्थात् भगवान् ही इन्हों का आधार है। यह सब स्मृतियों में प्रतिपादन किया है। जो स्वरूप और गुण शक्ति से बृहत्तम वस्तु हैं उसे ब्रह्म कहते हैं। वृद्धि अर्थक बृहि धातु से उणादिकमन् प्रत्यय से ब्रह्म शब्द की सिद्धि होती हैं अत्यन्त बृहद्वस्तुओं को ब्रह्म कहते हैं। देश और काल वस्तु परिछेद शून्य वस्तु में ब्रह्म शब्द का पर्य्यवसान होता है इससे सिद्ध हो चुका कि अपरिछिन्न वस्तु भगवत् शब्द का वाच्य श्रीपुरुषोत्तम लक्ष्मीकान्त श्रीकृष्णचन्द्र ही हैं। यहाँ पर्यन्त अशेष कल्याणगुणैकराशिम्। इस पद की व्याख्या हुई है।

## वेदान्तरत्नमञ्जूषा

परत्वादेव—व्यूहाङ्गिनमिति॥ उपलक्षणार्थोऽयं व्यूहशब्दोऽन्यावतार मूर्त्तीनाम्। तथाच व्यूहा अवताराश्चाङ्गानि तान्येवविद्यन्ते यस्य तम् अनन्त-

मूर्तिकम् । सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप इति श्रुतेः । उभयविभूतिपतिमितियावत् । अवतारावस्थायाम् अव्यक्तशक्तित्वेऽपि अजहद्गुणशक्तिकत्वादतिशयसाम्यशून्यत्वात् परिपूर्णमेव । तस्मात् कृष्ण एव परोदेवस्तं ध्यायेदित्यादिश्रुतेः । मत्तः परतरं नान्यत् किञ्चिदस्ति धनंजय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेति गीयमानाच्च । तत्र व्यूहो नाम श्रीपुरुषोत्तमो विश्वसृष्ट्याद्यर्थं तथाविधोपासनार्थं च व्यूहात्मनाऽवस्थितो-भवति, वासुदेव—संकर्षण—प्रद्युम्नाऽनिरुद्धभेदेन चतुर्विधः ।

## कुञ्चिका

यतः श्रीपुरुषोत्तमस्य सर्वस्मात्परतमत्वमतएव व्यूहाङ्गिनमित्याह । परत्वादेवेति । उपलक्षणार्थ इति । उपलक्षणत्वं स्वबोधकत्वे सति स्वेतरबोधकत्वं । अत्र व्यूहशब्देनेतरावतारमूर्तीनामपि बोध इत्याह व्यूहशब्द इति " तस्य विग्रहं दर्शयति तथाचेति । उक्तार्थे श्रुतिमानमाह । सर्वनामेति परिपूर्णत्वात् श्रीकृष्ण एव परो देव इति निगमयति तस्मादिति । व्यूहशब्दार्थमाह तत्र व्यूह इति । "तत्र ' व्यूहाङ्गिनमिति विशेषणे घटकत्वं सप्तम्यर्थः । तथाच व्यूहाङ्गिनमितिविशेषणघटकीभूतव्यूह इति बोधः ।

## भाषानुवाद

अब व्यूहाङ्गिनमिति । जिससे परब्रह्म श्रीकृष्ण है अतएव व्यूहन को अंगी है । वासुदेव और सङ्कर्षण प्रद्युम्न अनिरुद्ध ये चतुर्व्यूह हैं । इन्हों में अङ्गी वासुदेव श्रीकृष्ण हैं । व्यूहशब्द अन्य अवतारों का भी उपलक्षण हैं उपलक्षण उसे कहते हैं । स्वबोधकत्वेसत्यन्यबोधकत्वं अर्थात् अपना बोधक होकर अन्य का भी बोधक हो । इससे यह सिद्ध हुआ हि व्यूह और अवतार जिसके अंग हैं अतएव श्रीकृष्ण अनन्त मूर्ति हैं । इसमें सर्वनामा सर्वकर्मा यह श्रुति प्रमाण हैं । नित्यविभूति तथा अवतार विभूति के पति श्रीकृष्ण देव हैं । अवतारावस्था में सब गुणों का प्रकाशन होने पर भी अजहद्गुण शक्ति है अर्थात् उसके गुण शक्तियों का त्याग कदापि नहीं होता हैं । श्रीकृष्ण के समान और अधिक कोई नहीं हैं । इससे स्वयं भगवान् श्रीकृष्णचन्द्र परि-पूर्ण हैं । अतएव श्रीकृष्ण ही पर देवता हैं उसका ही ध्यान करना उचित हैं । यह सब वार्ता श्री गोपाल तापनी उपनिषद में व्यक्त हैं । मेरे से परतर कोई वस्तु नहीं है यह श्रीमुख का वचन है श्रीपुरुषोत्तम भगवान् विश्व की सृष्टि के लिये और उपासना के

वास्ते व्यूह रूप को धारण करते हैं। वे व्यूह चार हैं वासुदेव और सङ्कर्षण प्रद्युम्न अनिरुद्ध ।

### वेदान्तरत्नमञ्जूषा

"व्यूहात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः । सृष्ट्यादीनि करोत्येष विश्रुतात्मा जनार्दन" इत्यादिवचनात् ।, केशवाऽऽदयोऽपि द्वादशव्यूहमूर्तय, ऊर्ध्वपुण्ड्रविधायकमन्त्रदेवतास्तत्र ध्येयाः । अवतारोनाम-स्वेच्छयाधर्मसंस्थापनार्थम् , अधर्मोपशमनार्थं, स्वीयानां वाञ्छापूर्त्यर्थं च विविध विग्रहैराविर्भावविशेषः ॥

अवतारास्त्रिधाः—गुणावताराः, पुरुषावताराः, लीलावताराश्च । गुणनियन्तृत्वेन तदभिमानिदेवकालादिभिः सृष्ट्यादिकर्त्ता गुणावतारः । तत्र रजोगुणनियामको रजोमात्रेणाधिकस्तद्गुणाभिमानिचतुर्मुखकालदक्षादिद्वारेण जगत्स्रष्टा, सत्त्वनियन्ताच, स्वयमेव स्वात्मना सत्त्वमात्रोपहितेन कालमन्वादिद्वारेण पालकोरक्षिता च । तमोगुणनियामकश्च तदभिमानिरुद्रकालादिद्वारेण संहर्त्ताचेति । पुरुषावताराश्च ।

### कुञ्चिका

जगद्योनिभूतप्रकृतिद्वयाधिष्ठातृत्वादात्मनः सर्वोत्तमत्वं सर्वाधारत्वञ्चाह मत्त इति । यतः जगद्योनीभूते चेतनाचेतने मदाश्रये तस्मान्मत्तः सर्वेश्वरात परतरं श्रेष्ठं जगत्कारणभूतं स्वतन्त्रं किञ्चिदपि वस्तु नास्ति हे धनंजय न तत्समश्चाभ्यधिकश्चदृश्यते । सकारणं कारणाधिपाधिपः सर्वस्य वशी सर्वस्येशानः स विश्वकृदात्मयोनिः प्रधानक्षेत्रज्ञपतिर्गुणेश इत्यादि श्रुतिभ्यः "कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः" कृष्णस्य कृते भूतमिदं विश्वं चराचरमिति स्मृतेश्च सर्वस्याश्रयोप्यहमेवेत्याह । मयीति । सर्वमिदं चिज्जडजातं जगत् सर्वस्यात्मतया ऽवस्थिते मयि प्रोतमाश्रितम् । तत्र दृष्टान्तः सूत्र इति ।

### भाषानुवाद

इस विषय में "वासुदेवसङ्कर्षण यह स्मृति वचन प्रमाण हैं। और केशवादि द्वादश व्यूहमूर्ति हैं वे द्वादश व्यूह ऊर्द्ध पुण्ड्र के मन्त्र देवता हैं तिलक लगाने के समय में ध्येय हैं।

अब अवतार का निर्णय करते हैं। पृथिवी के अन्दर बढ़ा हुआ अधर्म है उसको निवारण के वास्ते धर्म की संस्थापना के अर्थ अपने भक्तों की इच्छा पूर्ति के लिये नाना प्रकार विग्रहों के द्वारा आविर्भाव विशेष को अवतार कहते हैं।

अवतार—तीन विभागों में विभक्त हैं एक गुणावतार दूसरा पुरुषावतार तीसरा लीलावतार हैं। गुणों का नियन्ता गुणाभिमानी देव द्वारा और कालादि द्वारा जो सृष्टि का कर्ता है वह गुणावतार कहलाता है। तहां रजोगुण का नियामक रजो गुणों से उपहित रजोगुण का अभिमानी चतुर्मुख द्वारा काल दक्षादि द्वारा जगत् कि सृष्टि कर्ता है। सत्व गुण का नियन्ता सत्व गुणोपहित अपने स्वरूप से काल मन्वादिकों के द्वारा भगवान् पालन और रक्षा करते हैं। तमोगुण का नियामक तम उपाधि युक्त तमोगुणाभिमानी रुद्र द्वारा और कालादि द्वारा जगत का संहार कर्ता भगवान् हैं। पुरुषावतार तीन हैं।

### वेदान्तरत्नमञ्जूषा

महत्स्रष्टृप्रकृतिनियन्ता कारणार्णवशायी प्रथमः। अथ गर्भोदशायी समष्ट्यन्तर्यामी द्वितीयः। क्षीरोदशायी व्यष्ट्यन्तर्यामी तृतीयः पुरुषः। "प्रथमं तु महत्स्रष्टृ द्वितीयं त्वण्डसंस्थिम्। तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति वचनात्। उपाधिभेदात् तत्तदवस्थापन्नस्तत् तत् संज्ञां भजत इत्यर्थः॥

अथ लीलावताराः। तेऽपि द्विविधाः। आवेशावताराः, स्वरूपावताराश्च। आवेशोऽपिद्विविधः, स्वांशावेशः शक्त्यंशावेशश्च। स्वांशावेशोनाम जीवव्यवधानाभावेन साक्षात् स्वांशेन प्राकृतविग्रहादावावेशः। यथा—नरनारायणादि रूपः। शक्त्यंशमात्रेण विश्वजीवादिव्यवहितस्तत्कार्यसाधकः शक्त्यंशावेशः। सच तारतम्यभेदात् प्रभवविभवसंज्ञको भवति। तत्राद्योधन्वन्तरिपरशुरामादयः। द्वितीयः कपिलऋषभचतुःसनकारदव्यासादिरूपः।

### कुञ्चिका

यथा मणीनां स्थितिप्रवृत्ती सूत्राधीने तथा सर्वस्य स्थितिप्रवृती मदधीने। यत्किञ्चिदस्मिन् दृश्यते श्रूयतेऽपि वा "अन्तर्वहिश्च तत्सर्वं व्याप्य नारायणः स्थितः इति श्रुतेः। बुद्धिर्मनो महद्वायु स्तेजोऽम्भः खं मही च या। चतुर्विधश्च यद्भूतं सर्वं कृष्णे प्रतिष्ठिमिति स्मृतेश्चेत्यर्थः।

द्वादश व्यूहमूर्तय इति तदुक्तम् पाञ्चरात्रे । तत्र वासुदेवत:केशवनारायणमाधवा इति त्रय: । सङ्कर्षणतो गोविन्दविष्णुमधुसूदनास्त्रय: । प्रद्युम्नतस्त्रिविक्रमवामनश्रीधरास्त्रय: ॥ अनिरुद्धतश्च हृषीकेशपद्मनाभदामोदरास्त्रय: । अवतारशब्दार्थमाह । अवतारो नामेति । अवतारान्विभज्य दर्शयति ॥ अवतारा इति । लीलावतारांश्चविभजते अथेति ।

## भाषानुवाद

उन्हों में महत्तत्व का स्रष्टा प्रकृति का नियन्ता कारणार्णवशायी प्रथम पुरुष हैं ।

गर्भोदशायी समष्टि का अन्तर्यामी द्वितीय पुरुष हैं ।

क्षीरोदशायी व्यष्टि का अन्तर्यामी तृतीय पुरुष हैं ।

इन तीन पुरुषों का ज्ञान करना उचित है क्योंकि इन्हों के ज्ञान से पुरुष बन्धन से निर्मुक्त होता है । यह कर्ता प्रथमन्तु महत्स्रष्टृ इस स्मृति वचन में प्रसिद्ध हैं । पुरुष उपाधि के भद से तत् २ अवस्थापन्न तत् २ नाम को प्राप्त होते हैं । लीला अवतार भी दो तरह के हैं एक आवेशावतार दूसरा स्वरूपावतार हैं । अवेशावतार भी दो प्रकार के हैं एक स्वरूप अंश का आवेश दूसरा शक्ति के अंश का आवेश है । अंशावेश उसे कहते हैं कि जीव के आवरण के बिना साक्षात् निज अंश से प्राकृत विग्रह में प्रवेश करना जैसे नर और नारायण अवतार हैं । शक्ति अंश मात्र से जीव में प्रवेश होय के कार्य कर्ता जो है वह शक्ति अंशावेश हैं । यह अवतार तारतम्य भेद से एक प्रभव कहलाता है दूसरा विभव कहा जाता है । धन्वंतरि और परशुराम आदि प्रभव हैं । कपिल और ऋषभ चतु:सन नारद व्यास आदि विभव हैं ।

## वेदान्तरत्नमञ्जूषा

अथ स्वरूपावतार: । स्वरूपेण सच्चिदानन्दात्मकेनाविर्भाव: । स्वरूपावतारश्च दीपाद् दीपान्तरवदभिन्नस्वरूपगुणशक्तिक: । सोऽपि द्विविधोंऽशरूप: पूर्णरूपश्च । तत्र पूर्णोऽपि अल्पगुणशक्त्याविष्करणात् अंश इत्युच्यते मत्स्यकूर्मवराहवामनहयग्रीवहंसादिरूप: । पूर्णशक्त्यादिव्यक्तीकरणात् पूर्ण: श्रीनृसिंहो दाशरथी राम: श्रीकृष्णश्चेति विवेक: ॥

एवं पूर्णत्वमुक्त्वा सर्वोपास्यत्वमाह—वरेण्यमिति ॥ स्वरूपेण तद्गुणैर्दिव्यमङ्गलविग्रहेण विग्रहगुणैश्च सौन्दर्यसौकुमार्यमाधुर्यलावण्यादिभि: साधारणत्वेन ब्रह्मादिश्वपाकान्तैर्वरणीयमित्यर्थ: । एष एवाचिन्त्य: पर: परमो

## भाषानुवाद

अथ स्वरूपावतार।

स्वरूप से सच्चिदानन्द मूर्त्ति के आविर्भाव को स्वरूपावतार कहते हैं। जैसे दीप से दूसरे दीपक का आविर्भाव होता है वैसे स्वरूप से अभिन्न स्वरूपगुणशक्तिक स्वरूपावतार हैं। उसके दो भेद हैं—एक अंश रूप है, दूसरा परिपूर्ण रूप है। पूर्ण रूप रहने पर भी अल्प गुणों के और अल्प शक्ति के आविर्भाव से अल्प कार्य करता अंशावतार कहलाता है। जैसे मत्स्य और कूर्म बाराह वामन हयग्रीवादिक हैं। पूर्ण गुण और पूर्ण शक्ति के प्रगट करने को पूर्णावतार कहते हैं। जैसे श्रीनृसिंहदेव और दाशरथि श्रीराम श्रीस्वयं भगवान श्रीकृष्णचन्द्र ये पूर्ण अवतार हैं। यह मीमांसा है श्रीकृष्णचन्द्र स्वयं भगवान् को पूर्णत्व कह कर अब सर्वोपास्यता बतलाते हैं। वरेण्यमिति भगवान् बासुदेव स्वरूप और स्वरूप गत गुणों से दिव्य मङ्गल विग्रह से विग्रह गत सौन्दर्य सौकुमार्य माधुर्य लावण्यादि गुणों के द्वारा चतुर्मुख से आदि लेकर चाण्डाल तक को साधारण होने से श्रीकृष्ण वरणीय हैं। आप अपने सौन्दर्य माधुर्य द्वारा प्राणि मात्र के मनको आकर्षण कर लेते हैं। अतएव श्रीकृष्णचन्द्रजी में प्राणि मात्र की प्रीति होती है। भगवान् अचिंत्य है और सर्व से उत्कृष्ट है प्राणिमात्र के पापादि हरण कर्ता है।

## वेदान्तरत्नमञ्जूषा

हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्त· रूप इत्यादि श्रुतेः।

सौन्दर्यं व्यनक्ति—कमलेक्षणमिति। कमलोपमे ईक्षणे यस्य तम्। "सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरं। नमः कमलनेत्राय नमः कमलमालिने" इति मन्त्रवर्णनात्॥ उपलक्षणश्चैतदन्येषामङ्गानाम्। एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यकेशः हिरण्यश्मश्रुः। आप्रणखात् सुवर्णः। आनन्दरूपममृतं यद् विभाति। यदात्मको भगवांस्तदात्मिका व्यक्तिः, किमात्मको भगवान्, ज्ञानात्मक ऐश्वर्यात्मको, विश्वतश्चक्षुरुत विश्वतोमुख इत्यादि श्रुतेः। यद्वा कमलया लक्ष्म्या ईक्ष्यते इति कमलेक्षणस्तं सौन्दर्यसीमानमित्यर्थः। रमामानसहंसाय गोविन्दाय नमोनम इति मन्त्रवर्णात्। अतएव हरिं ध्यातृणां मनोहरं।

## भाषानुवाद

सब के आदि भगवान् हैं और अनादि अनन्त है भगवान् के अनन्त शिर अनन्त नेत्र और अनन्त बाहु अनन्त गुण अनन्त रूप हैं। यह वार्ता श्रुति में निर्धारित हैं। अब भगवान् के सौन्दर्य गुण कहते हैं कमलेक्षणमिति। भगवान् के नेत्र कमल के समान है। श्रुति के द्वारा भी सौन्दर्य वर्णन करते हैं। सत्पुण्डरीक नयनमिति। सर्वोत्कृष्ट कमल के तुल्य भगवान् श्रीकृष्णचन्द्र के नयन हैं। नवीन घन के समान है कान्ति जिन्हों की विद्युत् के समान अम्बर वाले भगवान् को नमस्कार है यहाँ पर कमलनयन पद भगवान् के और अङ्गों का भी उपलक्षण है। और भी भगवान् दिव्य मङ्गल विग्रहात्मक है इस विषय में और भी श्रुति प्रमाण है सो दिखाते हैं "एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यत" इति सूर्य के अन्दर यह हिरण्यमय अति रमणीय स्वर्ण के समान देदीप्यमान पुरुष दिखाता है वह हिरण्यकेश और हिरण्यश्मश्रु हैं नख से शिख पर्यन्त सुवर्ण रूप हैं। और आनन्द रूप और अमृत रूप भगवान् प्रकाशित होते हैं। जिस प्रकार भगवान् हैं उसी तरह का उन्हों का विग्रह है। यहाँ पर यह प्रश्न उपस्थित होता है कि भगवान् का किस प्रकार का स्वरूप है। उत्तर भगवान् ज्ञान स्वरूप और ऐश्वर्य रूप है। भगवान् के नेत्र और मुख सबतरफ हैं। यह वार्ता श्रुति में स्पष्ट है। अथवा कमला लक्ष्मी जिसको ईक्षण करैं उसको कमलेक्षण कहते हैं भगवान् श्रीकृष्णचन्द्र सौन्दर्य की परम सीमा है। रमा के मानस के हंस श्रीगोविन्द को प्रणाम है। उक्त अर्थ को यह श्रुति प्रमाणित करती हैं। अतएव ध्यान करने वालों के मन को हरण करते हैं।

## वेदान्तरत्नमञ्जूषा

तेषामेव पापं हरतीतिवा "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः। अनिच्छयापि संस्पृष्टो दहत्येवहि पावकः" इति वचनात्। ब्रह्मादीनामपि हरण हेतुत्वाद्वा। "ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च। प्रसह्य हरते यस्मात् तस्माद्धरिरितीर्यत" इति वचनात्॥

किञ्च वेदमातृव्याख्यारूपोऽप्ययं श्लोकः। तथाहि—योनोधियः प्रचोदयात् तत्सवितुर्देवस्य वरेण्यं भर्गो धीमहि इत्यन्वयः। तत्र यो नोधियः प्रचोदयादित्यस्यार्थः।—कमलेक्षणमित्यनेन संगृह्यते हृत्कमले ईक्ष्यते योगिभिरिति कमलेक्षणस्तं सर्वधोनियन्तारम्। "अष्टपत्रं विकसितं हृत्पद्मंयत्र संस्थितम्।

अन्तः प्रविष्टः शास्ता जनानाम्। ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्व भूतानि यन्त्रारूढ़ानि मायया"।

## कुञ्चिका

यो नो धिय इति "यो" सार्वज्ञ्याद्यनन्ताचिन्त्ययावदात्मवृत्तिस्वाभाविकगुण-शक्तिवैभवाश्रयः परमेश्वरो विश्वात्मा परमेश्वरः। देवः स नोऽस्मदर्थभूतानां जीवात्मानां सम्बन्धिधीर्बुद्धिर्विषयप्रवणा तस्या धिय इति कर्मणि षष्ठि धियमित्यर्थः। यद्वा द्वितीयान्तबहुवचनम् तथाच या विषयप्रवणाः ताः प्रचोदयात्। स्वविषयिका ब्रह्मस्वरूपविषयिकाः कुर्यादिति ब्रह्मणो नियन्तृत्वेन स्वतन्त्रसत्त्वयोगोऽस्मदर्थभूतानाञ्च प्रत्यगात्मानां धीशब्दोपलक्षितचेतनवर्गस्य च नियम्यत्वेन परतन्त्रसत्तायोगश्च स्पष्टं मन्त्रित इत्यर्थः।

## भाषानुवाद

किम्वा भक्तों के पापों को हरते हैं। इस श्लोक में गायत्री का अर्थ दिखलाया है। वह यह है जो हमारी बुद्धि को प्रेरणा करता है उस वरणीय सविता का हम ध्यान करते हैं। कमलेक्षण पद का यह भी अर्थ होता है कि हृत्कमले ईक्ष्यते योगिभिरिति। हृदय कमल में योगीजन जिस परमात्मा को देखते हैं इससे यह सिद्ध हुआ कि सब की बुद्धि का प्रेरक अन्तर्यामी भगवान् हैं। अष्टपत्र के विकसित हृदय कमल में भगवान् बसते हैं। सबों के भीतर प्रविष्ट होकर जनों का शासन करने वाला परमात्मा हैं। यह श्रुति में स्पष्ट है। हे अर्जुन सबों के हृदय में ईश्वर विराजमान हैं। माया यन्त्र में आरूढ़ करके सर्व भूतन को भरमा रहा है।

## वेदान्तरत्नमञ्जूषा

इति शास्त्रात्। देवपदार्थमाह—ब्रह्मेति। स्वरूपगुणादिभिर्निरतिशय-बृहद्वस्तु ब्रह्मशब्दाभिधेयमित्युक्तं पुरस्तात्। तदेव देवपदेन अभिधीयते। तथाहि॥ दीव्यति क्रीडति विश्वसर्गादिभिरितिदेवः। ॐ नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे इति मन्त्रवर्णात्। अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते इति भगवद्वचनाच्च। विजिगीषते सुरानितिदेवः। कंसवंशविनाशाय केशि चाणूरघातिने। संरक्षणाय साधूनां विनाशाय च दुष्कृताम् इति। सर्व भूतेष्व-न्तर्यामितया व्यवहरतीति देवः। य आत्मानमन्तरो यमयति, एष त आत्मा-

अन्तर्याम्यऽमृतः। सर्वस्य चाहं हृदि सन्निविष्ट इति। द्योतत इति देवः। तमेवभान्तमनुभाति सर्वं तस्यभासा सर्वमिदं विभाति। येन सूर्य्यस्तपति तेजसेद्धः।

## कुञ्चिका

ब्रह्मदेवशब्दयोः समानार्थकतामाह। स्वरूपगुणादिभिरिति। 'तदेव' ब्रह्मैव, योगार्थेनापि तत्रैव देवशब्दस्य पर्य्यवसानमाह तथाहीत्यादिना। प्रमाणेनाप्युक्तार्थं द्रढयति। ॐनम इति।

## भाषानुवाद

यह श्री मुख का वचन है। देव पद का अर्थ ब्रह्म है ब्रह्मेति। ब्रह्मशब्द का अर्थ पूर्व में प्रदर्शन कर चुके हैं। विश्व की सृष्टि द्वारा जो क्रीड़ा करता है वह देव कहलाता है। ॐनमो विश्वरूपायेति। विश्व की स्थिति और नाश के कारण जो विश्वरूप भगवान् हैं उनको नमस्कार है। मैं ही सबों की उत्पत्ति का कारण हूँ मेरे से ही सब की प्रवृत्ति होती है। कंस वंश के नाशक और केशि चाणूर के घात करने वाले श्रीकृष्णचन्द्र को नमस्कार हैं। दुष्टन का विनाश कर्त्ता मैं युग युग में प्रगट होता हूँ। यह गीता में स्पष्ट है। अब देव शब्द का दूसरा अर्थ करते हैं कि सम्पूर्ण भूतों में अन्तर्यामी रूप से व्यवहार करैं। इस अर्थ को श्रुति के द्वारा प्रमाणित करते हैं। य आत्मानमन्तरोयमयतीति। जो आत्मा को भीतर नियमन करता है। जो आत्मा को अन्तर प्रेरणा करता है सो तेरा आत्मा अन्तर्यामी हैं। सबों के हृदय में मैं सन्निविष्ट हूँ यह श्री मुख का वचन है। द्योतत इति देव इति—जो प्रकाश करता है वह देव हैं जिसके प्रकाश से सब प्रकाशित होता है जिसके तेज से सूर्य प्रकाश करता है। यह श्रुति उक्त अर्थ में प्रमाण हैं।

## वेदान्तरत्नमञ्जूषा

यदादित्यगतं तेजो जगद् भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाऽग्नौ तत्तेजो विद्धि मामकमिति। स्तूयते ब्रह्मादिभिरिति देवः। तमेकं गोविन्दं सच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनं परमया स्तुत्या स्तोषयामि, स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिरिति। सर्वत्र गच्छतीति देवः। यः सर्वज्ञः सर्ववित्। वेदाहं समतीतानि वर्तमानानि चार्जुन। भविष्याणि च भूतानि

मांतु वेद न कश्चनेति । अनेजदेकं मनसो जवीयः । मया ततमिदं सर्वं जगद-व्यक्तमूर्तिना इति । एको वशी सर्वगः कृष्ण ईड्यः । मोदते वेति देवः । एष आनन्दयातीति इत्यादि निर्वचनेभ्यो देव शब्दो ब्रह्मवाचक इति भावः । एको देवः सर्वभूतेषु गूढ़ः सर्वव्यापी सर्वभूतान्तरात्मा इति श्रुतेः । सूत्रितं चैतद् भगवता बादरायणेन जिज्ञासाविषयतया देवपदार्थस्य ब्रह्मत्वेन । एवं व्युत्पत्ति मुखेन व्याख्यातो देवशब्दः ।

## भाषानुवाद

चन्द्र और अग्नि में जो तेज है सो मेरा तेज जान यह श्रीमुख का वचन है । चतुर्मुख प्रभृति देवता जिसकी स्तुति करते हैं वह देव कहलाता है । श्रीवृन्दावन में जो कल्प वृक्ष है उस के नीचे स्थित सच्चिदानन्दविग्रह अर्थात् सौन्दर्य्य माधुर्य से परिपूर्ण दिव्य नराकृति मुख्य गोविन्द की नित्य स्तुति करता हूँ । यह गोपालतापिनी में स्पष्ट हैं । वृहत् स्तुति के द्वारा सब देवता और महर्षि तुम्हारी स्तुति करते हैं । यह गीता में अर्जुन ने कहा है ।

जो सब को जानता है उसे देव कहते हैं इसमें यः सर्वज्ञ सर्ववित् यह श्रुति प्रमाण हैं । भगवान् सामान्य रूप और विशेष तत्तद्व्यक्तिरूप से सबको जानता है । भगवान् गीता में कहते हैं कि मैं सब भूत भविष्यत् वर्त्तमान प्राणीमात्र को जानता हूँ मेरे को कोई नहीं जानता है । जो सर्वत्र गमन करता है वह देव कहलाता है । इसमें यह श्रुति प्रमाण हैं । "अनेजदेकं मनसोजवीय इति । भगवान् निष्कम्प हैं और मन से भी अधिक वेगवान हैं । सदा मोद करैं वह देव हैं । भगवान् सब को आनन्द प्रदान करते हैं । उक्त श्रुति और स्मृतियों से सिद्ध हो चुका कि परब्रह्म श्रीकृष्णचन्द्र ही देव पद का अर्थ है । सूत्रकार श्री व्यासाचार्य्यजी ने भी जिज्ञासा सूत्र में देव पद का अर्थ ब्रह्म कहा है ।

## वेदान्तरत्नमञ्जूषा

इदानीं लक्षणमुखेनाप्याह । तत्सवितुरिति तच्छब्दो गायत्रीविषयभूतध्येय मन्तर्यामिणमाह । योऽस्माकं बुद्धिप्रेरकः स चासौ सविता च तस्येति यत्तदो-र्नित्यसम्बन्धात् । जगत् सूयते यस्मादिति सविता । प्रजानां च प्रसवनात् सवितेत्यभिधीयते इति विष्णुधर्मोत्तर वचनात् । उपलक्षणं चैतद् स्थिति प्रलययोः ।

तथा च विश्वस्य जन्मस्थितिलयकारणमिति सिद्धम्। ब्रह्मलक्षणं, यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद् ब्रह्म तद्विजिज्ञासस्वेति श्रुतेः। यतः सर्वाणि भूतानि प्रभवन्ति युगागमे। यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये।

कुञ्चिका

व्युत्पत्तिमुखेन देवशब्दार्थं निरूच्य सम्प्रति लक्षणमुखेनापि दर्शयति। एवमिति। व्युत्पत्तिप्रदर्शनेनापि सवितृशब्दस्य ब्रह्मपरत्वमाह। जगदिति। तदुक्तं पाञ्चरात्रे-प्रसौति सकला श्चेष्टाः प्रसूते सकलं जगत्। अवते गतिकान्त्यर्था क्षरतेदानकर्मणः ॥१॥ गतो ह्यवति सर्वत्रषड्भिः कान्तो गुणैः परः। भोगापवर्गयोर्दाता सवितेति निरूच्यते ॥२॥ तत्र मानमाह। प्रजानाञ्चेति। उक्तार्थं प्रमाणेन द्रढयति यत इति।

भाषानुवाद

यहाँ पर्यन्त देव शब्द का निर्वचन किया अब ब्रह्म का लक्षण प्रदर्शन करते हैं। तत्सवितुरिति। तत् पद का अर्थ गायत्री मन्त्र का विषय ध्येय अन्तर्यामी है। जो हमारी बुद्धि का प्रेरक वही सविता परमात्मा हैं। जिससे यह जगत् उत्पन्न होता है वह सविता कहलाता है। यह वार्ता विष्णु धर्मोतर में प्रसिद्ध हैं। सविता पद स्थितिप्रलय का उपलक्षण हैं। जगत् की उत्पत्तिपालनसंहार कर्त्ता सविता पद का अर्थ है। वही जिज्ञासा सूत्र का विषय (ब्रह्म) हैं।

वेदान्तरत्नमञ्जूषा

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते इत्यादि स्मृतेः। जन्माद्यस्य यत इति न्यायाच्च एवमुदाहृतेभ्यः प्रमाणवाक्येभ्य उक्तानां निर्वचनानां लक्षणस्य च विषयः, समन्वयाधिकरणस्य च श्रीभगवान् वासुदेव एवेति निश्चित्य भर्गपदं व्याचष्टे—कृष्णमिति। भर्जयति ध्यातॄणां कर्माणि इति भर्गो दिव्यमङ्गलवपुर्वाचकः सकारान्तो द्वितीयैकवचनोऽयं भर्गः शब्दः। यदा पश्यः पश्यते रुक्मवर्णमित्यारभ्य, तदा विद्वान् पुण्य पापे विधूय निरञ्जनः परमं साम्यमुपैति, भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व संशयाः।

कुञ्चिका

कृष्ण एव भर्ग शब्दार्थः, इति बोधयन्नाह। भर्ग पदमिति। व्युत्पत्तिमुखेन

भर्गशब्दस्य तत्परत्वमाह भर्जयतीति उक्तार्थे मानमाह। यदा पश्य इति "पश्यः" ब्रह्मदर्शी तदुक्तं पाञ्चरात्रे – भर्गस्तेजः समाख्यातं प्रभावः कर्तृरूपता। भरतीदं जगत्कृत्स्नं संभरत्यपि चेश्वरान् ॥ १॥ रमयत्यपि तत्सर्वं राति चार्थमभीप्सितम्। गमयत्यपि तन्नाशं स्यति बन्धमशेषतः ॥ २ ॥ भजयत्यखिलं कष्टं भ्रस्जतेऽनेहसं तथा। "अतो भर्गः परं विष्णोः संकल्पं विदुरद्भुतम् ॥ ३ ॥

## भाषानुवाद

ब्रह्म दर्शी जब रुक्मवर्ण ( सोने के समान देदीप्यमान ) भगवद्विग्रह को देखता है तब वह ब्रह्मदर्शी अपने पुण्य पापों को दूर कर सब उपाधि से विनिर्मुक्त हो भगवान् के समान विग्रह को प्राप्त होता है परा पर श्री सर्वेश्वर को देख कर उपासक की सब हृदय की ग्रन्थियों में ( कपट ) टूट जाता है सब संशय दूर होजाता है और सब कर्मों का नाश होजाता है।

## वेदान्तरत्नमञ्जूषा

क्षीयन्तेचास्य कर्म्माणि तस्मिन् दृष्टे परावरे इत्यादि श्रुतिभ्यः, दिव्यमङ्गलविग्रहः कृष्ण एव भर्गशब्दाभिधेयः। तमेकं गोविन्दं सच्चिदानन्दविग्रहमिति मन्त्रवर्णात्। किञ्च। तदुहोचुः कः कृष्ण इति प्रश्ने, पापकर्षकमिति उत्तरवचनात्। पापं कर्षयति निर्मूलयतीति कृष्ण इति निरुक्तिरुक्ता। पाप शब्दः पुण्यस्याप्युपलक्षणार्थः। तथाच ध्यातॄणां पापपुण्यात्मककर्मकर्षकत्वात् कृष्णोभर्गशब्दवाच्य इति भावः। यद्वा, भरणगमनयोगाद् अकारान्तोऽयं भर्गशब्दः।

## कुञ्चिका

प्रश्नोत्तराभ्यामप्युक्तार्थं द्रढयति। किञ्चेति। प्रकारान्तरेण भर्गशब्दस्यार्थं दर्शयति यद्वेति।

## भाषानुवाद

भर्ग पद का अर्थ भगवान् श्रीकृष्ण है। जो ध्यान करने वाले पुरुषों के कर्मों को जला देवे उसे भर्ग कहते हैं। यह श्रीकृष्ण शब्द का अर्थ गोपालतापिनी में कहा है कि पाप को निर्मूल करै वह कृष्ण है। ब्रह्माजी से श्री पूज्यपादसनन्दनादि मुनियों का प्रश्न है कि श्रीकृष्ण पद का क्या अर्थ है। उत्तर पाप कर्षक इति। शरण में आये हुये

भक्तों के स्वप्राप्ति के प्रतिबन्धक पापों के नाशक यह कृष्ण शब्द का अर्थ है। अतएव भर्ग शब्द का अर्थ श्रीकृष्ण है। यहाँ पर पाप शब्द से कर्म मात्र का ग्रहण है। जो ध्यान करने वाले पुरुषों के पाप पुण्यकर्म को निर्मूल करता है। वह श्रीकृष्ण भर्ग शब्द का अर्थ है।

## वेदान्तरत्नमञ्जूषा

विश्वभर्तृ सर्वव्यापिविश्वाऽन्तर्यामिसर्वकारणब्रह्मवाचकः। तथाच यो भर्ग इति यच्छब्देनान्वेति यः सर्वभर्ता सर्वगो देव इत्यर्थः। एतेन शास्त्रयोनित्वं सर्ववेदसमन्वितत्वं मोक्षप्रदातृत्वं चोक्तं भवति। तथाहि। यज्जगत्कारणं तदेव वेदान्तशास्त्रविषयभूतं वस्तु। तत्रैव सर्वशास्त्रसमन्वयान्मोक्षकारणमिति सूत्रकृतामभिप्रायः। अथातो ब्रह्मजिज्ञासा इत्यारभ्य, अनावृत्तिः शब्दादित्यन्तेनाध्यायचतुष्टयात्मकेन शास्त्रेण निर्णीतः।

मोक्षप्रदत्वात् सर्वोपास्यत्वमाह—वरेण्यमिति। मुमुक्षुभिरनन्यतया वरणीयमित्यर्थः। मुनयो हवै ब्रह्माणमूचुः।

## कुञ्चिका

फलितार्थमाह। तथाचेति "एतेन" निरुक्तार्थकथनेन, उक्तार्थमेव स्पष्टयति तथाहीत्यादिना। यो गायत्रीमन्त्रप्रतिपाद्यः स एव सर्वैरुपासनीय इत्याह। मोक्षप्रदत्वादिति। वरेण्यमिति। तदुक्तं पाञ्चरात्रे॥ वरैर्नेयं वरेण्यंतु वराः ख्यातार ईरिताः। वरणीयं वरेण्यं वा वरं नयति तत्परम्॥ १॥

## भाषानुवाद

जो विश्व का भरण कर्ता सर्व व्यापक और विश्व का अन्तर्यामी सकल जगत का कारण ब्रह्म पद वाच्यस्वयं भगवान् श्रीकृष्णचन्द्र हैं। जो भर्ग अर्थात् सब का भरण कर्ता सबों में विद्यमान परमदेव श्रीकृष्णचन्द्र भगवान हैं। इस से यह सिद्ध हुआ कि वह हरि शास्त्र से ही जाना जाता है सब वेदों का समन्वय भगवान् श्रीकृष्णचन्द्र में ही होता है और मोक्ष प्रदाता भी वही हैं। क्योंकि जो जगत्कारण है वही वेदान्त शास्त्र का विषय है उसी में सर्व शास्त्र का समन्वय होता है। यह अपना अभिप्राय श्रीव्यासाचार्यजी ने प्रथम चार सूत्रों से आरम्भ कर अध्याय चारों में अभिव्यक्त किया है श्रीकृष्णचन्द्र मोक्ष के दाता हैं अतएव सब का उपास्य श्रीकृष्ण भगवान् हैं इस वार्ता को वरेण्य पद से दिखलाते हैं। मुमुक्षुजन अनन्य होके उसको वरण करते हैं।

### वेदान्तरत्नमञ्जूषा

कः परमो देवः कुतो मृत्युर्बिभेति इत्युपक्रमे प्रश्नः। तस्मात् कृष्ण एव परो देवस्तं ध्यायेदित्युत्तरोपसंहारवाक्याद् यो गायत्री प्रतिपाद्यो देवः स एव कृष्णस्तं ध्यायेदित्यर्थः। तदेवाह—ध्यायेमेति। धीमहीत्यस्यापरपर्यायः। आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यादि श्रुत्युक्तविधौ। धीमहीति शब्दप्रयोगश्छान्दसः।

इदानीं सर्वोपासनानामत्रैवान्तर्भावमाह—व्यूहाङ्गिनमिति।

### कुञ्चिका

गायत्र्या प्रतिपाद्यो देवः श्रीपुरुषोत्तमस्तंध्यायेदित्युपसंहारवाक्येन बोधयन्निगमयति। तस्मादिति। उक्तार्थं श्रुतिप्रमाणेन द्रढयति ओंनमेति। देवशब्दार्थं निरूपयति—तदुक्तं पाञ्चरात्रे द्योतनः सर्वभावानां द्योतमानः स्वयं सदा। अज्ञानमखिलं चान्यच्छोधयत्यखिलं जगत्॥ १॥ अतः सकलमेवेदं तत्प्रोतं मणिसूत्रवत्। इतः ईरण ईड्यश्च जनितः सकलं वियत्॥ २॥ देव इत्युदितो विष्णुः परमात्मा सनातनः।

धीमहीति—धीमहीत्यत्र धीर्ज्ञानं मननं भावनं तथा॥ ३॥

### भाषानुवाद

निवृत्ति पथ प्रवर्तक सनकादि मुनियों का ब्रह्माजी के प्रति प्रश्न हैं। कौन परम देव है। किससे मृत्यु भयभीत होता है। उत्तर—श्रीकृष्णचन्द्र ही परम देव हैं और इन्हीं से ही मृत्यु डरता है अतएव श्रीकृष्ण ही का ध्यान करना उचित है। गायत्री मन्त्र प्रतिपाद्य श्रीकृष्ण है उन्हीं का ही ध्यान करना यही धीमहि पद का अर्थ है। वह ध्यान निदिध्यासन शब्द से श्रुति में कहा है। सर्व शास्त्र प्रतिपाद्य सब उपासना का अन्तर्भाव श्रीकृष्ण देव ही में होता है यह अर्थ व्यूहाङ्गिनम्। इस पद का है।

### वेदान्तरत्नमञ्जूषा

ननु यतो वा इमानि भूतानि जायन्ते, जन्माद्यस्य यत इत्यादौ सामान्य प्रयोगात् समान्यस्य यत्तदादेर्विशेषतन्त्रत्वाद्विशेषाऽपेक्षायां जगत्कारणविधायकश्रुतीनां, "हिरण्यगर्भः समवर्तताग्रे आदिकर्त्ता स भूतानां ब्रह्माग्रे समवतर्त, ब्रह्मा देवानां प्रथमः सम् बभूव, विश्वस्यकर्त्ता भुवनस्य गोप्ता, विरिञ्चो वा इदं

विरेचयति विदधाति इति ब्रह्मा वा विरिञ्चः एतस्माद्धीमे रूपनामनी, न सन्न-चासच्छिव एव केवलः, एको रुद्रो नद्वितीयाय तस्य, यो देवानां प्रभवश्चोद्भ-वश्चेत्यादीनां ब्रह्मरुद्रादिविविधविषयकत्वात्।

## कुञ्चिका

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्त्यत्र विषयवाक्ये सूत्रे च यत इति सामान्यनिर्देशस्य विशेषापेक्षत्वात् सामान्यशब्दस्य विशेषपारतन्त्र्यादितिन्या-येन श्रुत्या विशेषत्वेन विधानात् चतुर्मुखस्य रुद्रस्य वा जगत्कारणत्वमस्त्वित्या-शङ्कते नन्विति। सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयमित्यादिना कारणस्यैकत्वप्रति-पादनाच्चेतनश्चेतनानामित्यादिना अंशो नानाव्यपदेशादित्यादिना च जीवानामनन्त-त्वोक्ते जीवकारणवादे बहुत्वप्रसङ्गान्न जीवस्य कारणत्वं किन्तु हिरण्यगर्भः समवर्तताग्रे" इत्यादिश्रुत्या एकत्वपूर्वकारणत्वप्रतिपादनाच्चतुर्मुख एव जगत्कारणमित्यतः, श्रुतिं पठति हिरण्यगर्भः, इति।

## भाषानुवाद

यहां पर यह शङ्का उपस्थित होती है कि "यतो वाइमानिभूतानि जायन्ते" इस श्रुति में यत् शब्द का सामान्य निर्देश है सामान्य शब्द को विशेष की आकांक्षा अवश्य होती है। विशेष आकांक्षा पूर्णार्थ चतुर्मुख रुद्रादिकों का भी यत शब्द से ग्रहण हो सकता है क्योंकि हिरण्यगर्भः समवर्तताग्रे इस श्रुति में हिरण्यगर्भ ब्रह्मा पूर्व हुये ब्रह्मा सर्व भूतों का आदि कर्ता है वह देवताओं से पहिले हुआ इससे साबित हो चुका कि ब्रह्मा ही सृष्टि का कर्ता है। और न सन्नचासच्छिव एव केवलः इस श्रुति से यह सिद्ध होता है कि सृष्टि के पहिले स्थूल सूक्ष्म विश्व नहीं था किन्तु एक शिव ही था अतएव सृष्टि कर्ता रुद्र ही है। जब इस प्रकार की श्रुतियाँ शास्त्र में उपलब्ध होती हैं तब बतला-इये श्रीकृष्ण ही जगत्कारण है यह निर्धारण किस प्रकार से हो सकता है।

## वेदान्तरत्नमञ्जूषा

कथं कृष्णस्य जगत्कारणत्वं निश्चीयते इत्याशंकायां समाधानमाह—

परमिति। कारणकारणं ईश्वरेश्वरं देवदेवं ब्रह्मरुद्रादिजनकं ब्रह्मादि-गुरुमित्यर्थः। तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं सकारणं कारणाधिपाधिपः, न तस्य कश्चिज्जनिता नचाधिप इति श्रुतेः। मत्तः परतरं

नान्यत् किञ्चिदस्ति धनंजय, परःपराणां सकला न यत्र क्लेशादयः सन्तिपरावरे-शाइत्यादि स्मृतेश्च । ब्रह्मादीनां तु क्वचिदैश्वर्यश्रवणेऽपि जन्यत्वकर्म्मतन्त्रत्वादि-श्रवणान्न परत्वयोग इत्यर्थः । एको ह वै नारायण आसीन्न ब्रह्मा नेशानः । तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत, तस्य ध्यानान्तःस्थस्य ललाटात् स्वेदोऽपतत् ।

## कुञ्चिका

ईश्वरेश्वरत्वं मानेन व्यवस्थापयति तमीश्वराणामिति । देवतानां देवत्वमाह । तं देवतानामिति । अन्येषां कारणानां तेज आदीनाम् अधिपानां कालादीनाञ्चाधिप इत्यर्थः तेज आदीनां कारणत्वेऽपि आकाशादीनां कारणकारणत्वेऽपि अन्यकार्यत्वं सुप्रसिद्धं तन्यायस्यात्रापि दर्शनात्तथात्वशङ्कावारणाय श्रुत्यन्तरं पठति । न तस्य कश्चिज्जनिता नचाधिप इति । परमते परमाणु प्रधानादीनां जन्यत्वाभावेऽप परानयम्यतास्वीकारात्त-न्यायावतारनिवृत्तये नचाधिप इति दलसन्निवेश इत्यर्थः । उक्तार्थे स्मृतिं प्रमाणयति । मत्त इति । चतुर्मुखरुद्रादिभ्यः परत्वं श्रीपुरुषोत्तमस्य श्रुतिप्रमाणैः व्यवस्थापयति । एको ह वै नारायण इति । तस्यैकत्वपूर्वकारणत्वप्रतिपादनाच्चतुर्मुखादीनां प्राक्निषेधश्रवणान्न तयोर्जगत्कारणत्वमिति भावः ।

## भाषानुवाद

इस शङ्का समाधान को आचार्यपाद भगवान् श्रीनिंम्बार्काचार्य्यजी ने परम् इस पद से किया है । श्रीकृष्ण परकारण हैं कारणों का भी कारण हैं ईश्वरों का भी ईश्वर हैं और देवताओं का भी परम देवता है । श्रीकृष्णदेव ब्रह्मादिकों का कर्ता और उपदेष्टा हैं उसका कर्ता और अधिप (स्वामी) कोई नहीं है । हे धनंजय मेरे से परे और कोई वस्तु नहीं है यह श्रीमुख का वचन है ।

पर ब्रह्मादिकों से पर उत्कृष्ट श्रीकृष्णचन्द्र हैं भगवान् में कोई भी क्लेश नहीं है । शास्त्र में चतुर्मुख आदि का ऐश्वर्य्य कहीं सुनने में आता है वह उन्हीं का ऐश्वर्य्य कर्माधीन होने से जन्य है अतएव ब्रह्मादिक देवता पर नहीं हो सकते हैं सृष्टि के पहिले एक नारायण ही रहे । ब्रह्मा शिव नहीं थे ध्यानावस्थित भगवान् के ललाट से त्रिनेत्र शूलधारी पुरुष शिव उत्पन्न हुआ ।

## वेदान्तरत्नमञ्जूषा

ता इमाः प्रपत ता आपः, तत्र हिरण्मयमण्डं, तत्र ब्रह्मा चतुर्मुखोऽजायत

यो वेदांश्च प्रहिणोति तस्मै, यो ब्रह्माणं विदधाति चतुर्मुखोजायत, नारायणात् ब्रह्मा जायते नारायणाद्रुद्रो पूर्वं यो वै विद्यास्तस्मै गोपायतिस्म कृष्णः, अस्य देवमीढुषोदया विष्णोरेव प्रवृद्धे इति निर्दिदेह रुद्रो रुद्रीयमहित्वमिति बह्वचः। सोऽब्रवीद्वरं वृष्णुष्व, अहमेव पशूनामधिपतिरसानीति तस्मात् रुद्रः पशूनामधिपतिरिति भगवत उभयोः साक्षाज्जन्मविद्यादिलाभश्च श्रूयते। तथैव स्मर्यते च।

### कुञ्चिका

ब्रह्मणः सकाशादेव चतुर्मुखरुद्रयोरुत्पत्त्यभिधायीनां श्रुतीनां जागरूकत्वात् कथं तयोर्जगत्कारणत्वसम्भावनापि। अतः श्रुतिकदम्बं पठति। तस्य ध्यानान्तःस्थस्येति।

### भाषानुवाद

हरि के ललाट से स्वेद का पतन हुआ उससे जल उत्पन्न हुआ उससे हिरण्मय अंडे की उत्पत्ति हुई उसमें चतुर्मुख ब्रह्माजी उत्पन्न हुये, नारायण से ब्रह्मा और रुद्र की उत्पत्ति हुई है यह श्रुति में प्रसिद्ध है श्री भगवान् से ब्रह्मा उत्पन्न हुये उसको हरि ने वेदों का अध्ययन कराया है उसकी विद्या की रक्षा करी शिवजी हरि के द्वारा सब कामनाओं के पूरण करता है। श्रीविष्णु भगवान् की दया को बढ़ाया उससे रुद्र पद को प्राप्ति हुई हरि ने रुद्र को कहा कि वर मांग लीजिये तब शिवजी ने वर को प्रार्थना करी कि मैं पशुओं का अधिपति होजाऊँ तब रुद्र पशुपति हुवे उपदर्शित श्रुति से होचुका कि शिवजी तथा ब्रह्माजी की उत्पत्ति भगवान् से हुई है।

### वेदान्तरत्नमञ्जूषा

"यस्य प्रसादादहमच्युतस्य भूतः प्रजासृष्टिकरोऽन्तकारी। क्रोधश्च रुद्रः स्थिति हेतुभूतो यस्माच्च मध्ये पुरुषः परस्तादि"ति वैष्णवे। "प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै। तौहि मां न जानीतो मम माया विमोहितौ" इति मोक्षधर्मे। "युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः। पुनस्त्रैलोक्य धातृत्वं प्राप्तवानिति शुश्रुमः। मया सृष्टः पुरा ब्रह्मा यद्यज्ञमयजत् स्वयम्। ततस्तस्य वरान् प्रीतो ददावहमनुत्तमान्। मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च, इति॥ विश्वरूपो महादेवः सर्वमेध महाक्रतौ जुहाव सर्वभूतानि स्वयमात्मानमात्मना। महादेवः सर्वयज्ञे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव।

### कुञ्चिका

भगवतः प्रसादादेव चतुर्मुखरुद्रयोः सृष्टिप्रलयकारित्वमिति पुराणवचसा व्यवस्थापयति । यस्येति । तयोर्भगवत्सृज्यत्वं तन्मायामोहितत्वात्तज्ज्ञानाभाववत्वञ्चाह । प्रजापतिञ्चेति ।

### भाषानुवाद

जिसके प्रसाद से मैं सृष्टि कर्ता हुआ जिसके क्रोध से सृष्टि का संहार कर्ता तू हुआ विश्व के पालन के अर्थ भगवान् ने पुरुष रूप धारण किया यह वचन ब्रह्मा ने शिवजी के प्रति कथन किये हैं। महाभारत के मोक्ष धर्म में यह कहा है कि प्रजापति और रुद्र को मैं रचता हूँ दोनों मेरी माया से मोहित है अतएव मेरे स्वरूप को नहीं जानते हैं। चतुर्मुख ब्रह्मा युग कोटि सहस्रपर्यन्त श्रीविष्णु भगवान् की आराधना करने से लोक त्रय का धाता हुआ और ब्रह्मा ने यज्ञ के द्वारा भगवान् को प्रसन्न किया यह वर मांगा कि प्रति युग में मेरे एक पुत्र हो वह सब लोकों का अधिष्ठाता हो। श्री महादेवजी ने सर्वमेध नामक यज्ञ किया उसमें सब भूतों का और अपने शरीर का भी हवन किया।

### वेदान्तरत्नमञ्जूषा

विश्वाँल्लोकाम् व्याप्य विष्टभ्यकीर्त्याविराजते द्युतिमान् कृतिवासा इति भारते। ब्रह्मादयः सुराःसर्वे विष्णुमाराध्य ते पुरा। स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः इति नारसिंहे। तदेवा ऋषयश्चैव नानातनुसमाश्रिताः। भक्त्या संपूजयन्त्येनं गतिं चैषां ददाति सः। ततस्ते त्रिबुधाः सर्वे ब्रह्मा ते च महर्षयः। वेददृष्टेन विधिना वैष्णवं क्रतुमारभन् प्रापुरादित्यवर्णं तं पुरुषं तमसः परमिति नारायणीये। तत्रैव भगवान्—येन यः कल्पितो भागः स तथा मामुपागतः। प्रीतोऽहं प्रदिशाम्यद्य फलमावृतिलक्षणमिति।

### कुञ्चिका

ब्रह्मादिसुरगणानां श्रीविष्णुप्रसादादेव स्वस्वपदस्वप्राप्तिः श्रूयते नारसिंहे अत स्तद्वचनमुदाहरति। ब्रह्मादयइति।

### भाषानुवाद

उससे देव देव पद को महादेव प्राप्त हुये जिसकी कीर्त्ति विश्व में व्याप्त हो रही है। अतएव श्रीमहादेव का नाम कृति वास हुआ। यह वचन राजधर्म में देव प्रस्थान

का है। भगवान् विष्णु की आराधना सब ब्रह्मादि देवताओं ने करी उन्हीं के अनुग्रह से सृष्टि कर्तृत्व इन्द्र आदि पद वे सब देवता को प्राप्त हुवे। यह नृसिंह पुराण में स्पष्ट है। सब देवता और महर्षि नाना शरीर को धारण करके विष्णु भगवान् को भजते हैं भगवान् उनको शुभ गति प्रदान करते हैं। चतुर्मुख सब देवता और सब महर्षियों ने वैदिक विधि से वैष्णव यज्ञ किया उस यज्ञ में भगवान् ने उन्हीं को दर्शन दिया और बोले कि जिस २ ने मेरे को यज्ञ में भाग दिया मेरी शरण हुआ उस २ को मैं प्रसन्न होकर फल देता हूँ परन्तु तुम सर्व सकाम हो इससे पुनरावृत्ति संसार की निवृत्ति नहीं होगी। अर्थात् तुम्हारी मोक्ष नहीं होगी। यह वार्ता महाभारत नारायणीय उपाख्यान में प्रसिद्ध है

## वेदान्तरत्नमञ्जूषा

छान्दोग्येच, विरूपाक्षाय धात्रंशाय विश्वदेवाय ब्रह्मणः पुत्राय ज्येष्ठाय इति शतपथब्राह्मणेच, संवत्सरात् कुमारो जायत कुमारोऽरोदीत् प्रजापतिरब्रवीद् किं रोदिषि यच्च मम तमसोऽधिजातोऽसिति, सोऽब्रवीदनपहतपाप्माऽहमस्मि हन्त नामानं मे देहीति। नारायणः परोदेवस्तस्माज्जातश्चतुर्मुखः। तस्माद्रुद्रोऽभवद्देवः स च सर्वज्ञतां गत, इति वराहे। अहं ब्रह्मा चाद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः। मत्तो जगज्जङ्गमं स्थावरं च सर्वे वेदाः सरहस्याश्च पुत्र इति नारायणीये इति श्रुतिस्मृतिभ्यो-भगवतः सकाशाच्चतुर्मुखजन्मद्वारेण रुद्रोद्भवः। स च कल्पभेदात् भेदोऽध्यवसितव्यः॥

## कुञ्चिका

श्रीरूद्रस्य जनिश्चतुर्मुखात् श्रूयते श्रुतौ तां श्रुतिमुदाहरति। छान्दोग्येचेति शतपथब्राह्मणवचनेनापि तदेव निर्धारयति शतपथब्राह्मणेचेति। कल्पभेदव्यवस्थया उभयविधश्रुतीनां विरोधं परिहरन्नाह भगवत इति।

## भाषानुवाद

छान्दोग्य उपनिषद में कहा है कि विरूपाक्ष धाता का अंश ब्रह्मा का ज्येष्ठ पुत्र हैं इन सब श्रुति स्मृति के द्वारा यह निश्चित हो चुका कि विष्णु भगवान् सब ब्रह्मा आदिक देवताओं के पूज्य हैं और सब से बड़े हैं।

### वेदान्तरत्नमञ्जूषा

ननु कश्चिद् ब्रह्मशिवलिङ्गादिषु पुराणेषु ब्रह्मशिवादीनां परत्वं व्याख्यातम्। तथा सति तेषामपि पुराणत्वेन प्रमाणत्वाऽविशेषत्वात् कथं विष्णोरेव परत्वं निश्चीयते इति, चेन्न। तेषां तु पुराणत्वाऽविशेषेऽपि राजसतामसत्वाभ्यां संसारहेतुत्वेन दुर्बलत्वात्। सात्विकैर्मोक्षकारणभूतैस्तेषां बाध्यत्वं युक्तमेव। एतदुक्तंभवति—पुराणानि चतुर्विधानि सात्त्विकराजसतामससंकीर्णभेदात्। सात्त्विककालोद्भवं सात्त्विकविषयाधिकारिकं सात्त्विकम्। राजसकालोद्भवं राजसवस्तुप्रतिपादकं तथाभूताधिकारिकं राजसम्।

### कुञ्चिका

श्रूयते केषुचित् पुराणेषु चतुर्मुखमहादेवयोरपि परत्वं तत्प्रतिपादकपुराणानामपिप्रमाणत्वात्तत्कथं श्रीपुरुषोत्तमस्यैव परतमत्वं निश्चिनुम इत्याशङ्कते नन्विति। सात्विकैः पुराणैर्मोक्षसाधनैः प्रबलैः ब्रह्मशिवलिङ्गादिपुराणानां राजसतामसत्वाभ्यां संसारहेतुत्वेन दुर्बलानां बाधो युज्यत एवेत्याशयेनोक्तां शङ्कां परिहरति नेति। एतदुक्तं भवतीति यत् उक्तं तदेतद्भवतीत्यर्थः। तेषां लक्षणप्रदर्शनपुरस्सरं पुराणानां चातुर्विध्यमाह। पुराणानीति॥

### भाषानुवाद

यहाँ पर यह प्रश्न उपस्थित होता है ब्रह्म पुराण और शिव पुराण और लिङ्ग पुराणों में ब्रह्मा और रुद्र का परत्व कहा है पुराणत्वेन सभी पुराण समान है तो बतलाइये विष्णु भगवान् का ही परत्व किस प्रकार से माना जाय। उत्तर ब्रह्म पुराण आदि पुराण हैं परन्तु इन पुराणों की राजस और तामस पुराणों में गणना है क्योंकि वे पुराण संसार के हेतु होने से दुर्बल हैं। मोक्ष के दाता सात्विक पुराणों से राजस और तामस पुराणों का बाध होना उचित है। यह भाव है कि सात्विक और राजस तामस संकीर्ण भेदों से पुराण चार प्रकार के हैं सात्विक काल में उत्पन्न हुये जिसका विषय सात्विक हैं और उन्होंके अधिकारी देवता भी सात्विक हैं उसको सात्विक पुराण कहते हैं। राजस पुराण का यह लक्षण हैं।

### वेदान्तरत्नमञ्जूषा

एवमन्यदप्यूहनीयम्। तथाच मात्स्ये—संकीर्णास्तामसाश्चैव राजसाः

सात्त्विकाः स्मृताः। कल्पाश्चतुर्विधाः प्रोक्ता ब्रह्मणो दिवसाश्रये। यस्मिन् कल्पेतु यत् प्रोक्तं पुराणं ब्रह्मणा पुरा तस्य तस्य च माहात्म्यं तत्तत्कल्पे विधीयते। अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्तितम्। राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः। संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते। सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः। तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिमिति॥

## कुञ्चिका

मात्स्यपुराणोक्तवचसाप्युक्तार्थं द्रढयति तथाचेति। यस्मिन् पुराणे यस्य महात्म्यमभिहितं तदेव दर्शयति। अग्नेरिति।

## भाषानुवाद

कि जिस का देवता और अधिकारी विषय राजस हो और राजस काल में उत्पन्न हुआ हो। तामस काल में उत्पन्न हुआ है। जिसका देवता तामस अधिकारी और विषय तामस हैं वह तामस पुराण कहलाता है। संकीर्ण काल में उत्पन्न हुआ हो संकीर्ण देवता विषय और अधिकारी संकीर्ण हैं : यह वार्ता मत्स्य पुराण में स्पष्ट है। सो कल्प भेद है समझ लेना चाहिये अतएव कल्प चार विभागों में विभक्त हैं एक संकीर्ण दूसरा तामस तीसरा राजस चतुर्थ सात्विक हैं। ये कल्प ब्रह्मा के दिन कहलाते हैं। जिस २ दिन में ब्रह्मा ने जिस २ पुराण का निर्माण किया उस २ देवता का महात्म्य उस २ पुराण में वर्णन किया। अग्नि और शिव का माहात्म्य तामस पुराण में कहा है राजस पुराण में चतुर्मुख का माहात्म्य कहा है। संकीर्ण पुराण में सरस्वतीजी का माहात्म्य है सात्विक पुराण के सेवन करने से परम गति को प्राप्त होता है।

## वेदान्तरत्नमञ्जूषा

कौर्मेऽपि, असंख्यातास्तदा कल्पा ब्रह्मविष्णुशिवात्मकाः। कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः। सात्त्विकेष्वपि कल्पेषु माहात्म्यमधिकं हरेः। तामसेषु शिवस्योक्तं राजसेषु प्रजापतेरिति तत्रैव। वैष्णवपाद्मादीनां सात्त्विक मूलत्वेन कात्स्न्र्येनालुप्तज्ञानत्वात् प्राबल्यम्। इतरेषां तु रजस्तमोमूलत्वेन विक्षेपावरणार्हत्वात् परतत्त्वापन्हवपरत्वात् तद्विपरीतानां परत्वप्रकाशकत्वाच्च संशयविपर्य्ययहेतुत्वेन बाध्यत्वम्। एवं हि मुमुक्षुभिः श्रेयस्कामै राजसादीन् हित्वा सात्त्विकान्येवावलम्ब्यानि।

## कुञ्चिका

कौर्मपुराणवाक्येनाप्युक्तार्थं द्रढयति कौर्मेऽपीति प्रबलैर्दुर्बलं बाध्यत इति-न्यायमनुसृत्य सात्विकपुराणतामसपुराणयोर्बाध्यबाधकभावं कौर्मपुराणोक्तमाह तत्रेति। कौर्म इत्यर्थः।

## भाषानुवाद

यह वार्ता कुर्मपुराण में कहा है—ब्रह्मा के कल्प असंख्यात हैं ब्रह्म कल्प विष्णु कल्प पाद्म कल्प शिव कल्प श्वेत वाराह कल्प कृष्ण वाराह कल्प आदि। विष्णु पुराण पद्म पुराण आदि सात्विक है इन्हों में समग्र अलुप्त यथार्थ ज्ञान है। ब्रह्म पुराण राजस है शिव पुराण प्रभृति तामस हैं अतएव विक्षेप और आवरण स्वभाव हैं अतएव परतत्व के आवरक हैं इनके द्वारा परतत्व का ज्ञान कदापि नहीं हो सकता है। इससे ही यह पुराण निर्बल है प्रबल के द्वारा निर्बल की बाधा अर्थात् पराजय होता है।। क्योंकि राजस और तामस पुराण विपरीत तत्व के ज्ञापक हैं और उनके द्वारा संशय और भ्रम होता है। अतएव राजस और तामस पुराण मुमुक्षु को हेय है उन्हों का कदापि श्रवण न करैं। सात्विक पुराण श्रवण और मनन करने से मुक्ति होती है।

## वेदान्तरत्नमञ्जूषा

श्रेयस्कारणभूतानि सदा सेव्यानीति। तथाचाह भगवान् मनुः—"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रोक्ता स्तमो निष्ठा हि ताः स्मृताः" इति। उपलक्षणं चात्र पुराण शब्दः। उक्त लक्षणः श्लोकोवा, श्लोकार्धंवा, पादमात्रं वा सात्त्विकं चेदुपादेयम्। राजसलक्षणं त्व श्लोकादि चेद्धेयम्। तथैव तामसं संकीर्णं चेति विवेचनीयम्॥

ननु यद्येवं तर्हि सर्वैरप्येवं निर्णीय सात्विकमेव किमिति न सेव्यते इति चेन्न। दुष्कृतयोगादिति ब्रूमः तच्च स्वयमेव गीतं भगवता।

## कुञ्चिका

उक्तार्थं श्रीमहर्षिमनुवचसा द्रढयति तथाचाहेति। उपलक्षणञ्चात्रेति। सात्विकेषु च कल्पेषु माहात्म्यमधिकं हरेरितिवचन इत्यर्थः यदि सात्विकपुराणानां प्राबल्यात्त-दितरापेक्षया श्रेष्ठत्वमुच्यते तदा सर्वैः पुम्भिः सात्विकपुराणमेव कुतो न समादरणीय मित्याशङ्कते नन्विति। परिहरति नेति। उक्तार्थं श्रीमुखवचसा द्रढयति तच्चेति दुष्कृतयोग-श्ववचेत्यर्थः।

### भाषानुवाद

अतएव मुमुक्षु जन को सात्विक पुराण का अभ्यास करना आवश्यक है। भगवान् मनुजी ने भी इस वार्ता का निर्धारण किया है कि जो वेदबाह्य स्मृति और कुतर्क हैं वे सब निष्फल हैं मृत्यु के बाद नरक के कारण है इति। प्रश्न सात्विक पुराण और सात्विक देवताओं का श्रवण सेवन करना उचित है जब इस प्रकार निश्चय करके सब ही पुरुष सात्विक पुराणों का श्रवण मनन क्यों नहीं करते हैं। उत्तर

### वेदान्तरत्नमञ्जूषा

श्रीमुखेनाऽन्वयव्यतिरेकाभ्यां "नमां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः। माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः। येषां त्वन्तगतम्, इति श्लोकः। महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्" इति। किञ्च। मनुष्याणां सहस्रेषु तपोदानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते इति वचनात्। ततश्च जन्मसमये श्रीभगवत्कृपाकटाक्षावलोकितः सात्त्विको भूत्वा सात्त्विकैः संगम्य सात्त्विकान्येव सेवते मुच्यते च।

### कुञ्चिका

अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते। राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः। सात्विकेष्वेव कल्पेषु माहात्म्यमधिकं हरेः। तेष्वेव मार्गसंसिद्धा गमिष्यन्ति पराङ्गतिम्। यस्मिन् कल्पे तु यच्चोक्तं पुराणं ब्रह्मणः पुरा। तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते इति सम्यग्ज्ञाननिष्पादकसत्वमूलत्वात्। अन्यथा ज्ञानविपरीतज्ञानहेतुभूत रजस्तमोमूलत्वाभावाद् दुष्टकारणपुराणान्तरसाम्यं न सम्भावनीयम्। सत्वस्य यथार्थज्ञानहेतुत्वं रजतमसोर्यथार्थ ज्ञानविपरीतज्ञानहेतुत्वं, सत्वात्सञ्जायते ज्ञानमितिवचनम् अयथावत्प्रजानाति बुद्धि सा पार्थ राजसी। सर्वार्थान् विपरीताँश्च बुद्धिः सा पार्थ तामसी, इति वचनात् प्रसिद्धम्, सत्वं लघुप्रकाशकमिष्टम्। उपष्टम्भकं चलञ्च रजः गुरुवरणकमेव तमः, इति "सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः, स्मृताः, इतिच प्रसिद्धम्, ननु चतुर्मुखशिवादिमहत्वबोधकानां पुराणानां रजस्तमोमूलत्वेन न प्रामाण्यं अतः सात्विकपुराणानान्तु प्राबल्यं सिद्ध्यति नास्त्यस्य वचसः सत्वमूलत्वे किमपि प्रमाणम्। भूयसां बलीयस्त्वादिति न्यायेन न बहूनां पुराणानामप्रमाण्यं वक्तुं शक्यते।

### भाषानुवाद

मनुष्यों के पाप प्रतिबन्धक हैं इससे सात्विक पुराण और सात्विक धर्म में निष्ठा नहीं होती है। यह विषय अन्वय व्यतिरेक मुख से भगवान् ने स्वयं गीताजी में

निर्द्धारण किया है हे अर्जुन ! दुष्कृति अर्थात् पापी मूर्ख जन मेरी शरण में नहीं आते हैं। वे जन मनुष्यों में अधम हैं और माया द्वारा उन का ज्ञान अपहृत है और आसुर-भाव को प्राप्त होते हैं जिन मनुष्यों के पुण्य के द्वारा पाप नाश होगयेहैं वे जन द्वन्द्व मोह से निर्मुक्त दृढ़ व्रत होकर मेरे को भजते हैं। और जो मनुष्य उदार बुद्धि और दैवी प्रकृति के हैं वे पुरुष अनन्य मन होकर सर्व भूतों का कारण अविनाशी समझ कर मेरे को भजते हैं। हजारों मनुष्यों में से कोई एक मनुष्य अपने कल्याण के लिये यत्न करता है यह वार्त्ता श्रीमद्भगवद्गीता में स्पष्ट है। जिस सुकृति जीव ने तप और दान समाधि को हजारों जन्म तक किया है तब तप आदि से उस के सब पाप नष्ट हो चुके पश्चात् श्रीकृष्णचन्द्र भगवान् की भक्ति के अधिकारी होता हैं। यह वार्ता स्मृति में स्पष्ट है। जन्म समय भगवान् जिस पुरुष को कृपा कटाक्ष से देखते हैं वह पुरुष सात्विक होकर सात्विक भक्तोंके संग से सात्विकशास्त्र विचार के द्वारा मुक्ति का अधिकारी होता है।

### वेदान्तरत्नमञ्जूषा

**अन्यथा अन्यैरवलोकितश्चेत् तथाभूतैरेव संगम्य संसारी भवति। तथा चोक्तं मोक्षधर्मे। "जायमानंहि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकः सतु विज्ञेयः स वै मोक्षार्थ चिन्तकः। पश्यत्येनं जायमानं ब्रह्मारुद्रोऽथवा पुनः। रजसा तमसा चैव मानसं समभिप्लुतम्।" इति सात्त्विकैः सेव्यते विष्णुस्तामसै रेव शंकरः। राजसैः सेव्यते ब्रह्मा संकीर्णैश्च सरस्वती, इत्यादी-न्यन्यान्यपि चिन्तनीयानि॥**

### कुञ्चिका

किन्तु तद्वचनमात्रस्येति चेन्न। यत न तावदस्य वचनस्य प्रामाण्ये विमतिन्र्याय्या बाधकादर्शनात् स्वतस्सिद्धप्रामाण्यस्यानपोदितत्वात्। महान् प्रभुर्वै पुरुषः सत्वस्येष प्रवर्त्तकः" इति श्रुत्यनुगुण्येन तत्तद्गुणमयत्वेनावगतस्य तत्तत्वस्य तत्त-त्कल्पे तत्तद्गुणमयेन ब्रह्मणा तेषु तेषु पुराणेषु प्रतिपादनपरस्य वचनस्योपपन्नार्थत्वाच्च सकालार्थव्यवस्थापके महाभारते मोक्षधर्मस्य वचनमुदाहरति। जायमानमिति इति वचसा भगवत्कटाक्षेण सत्वगुणमूलसम्यगज्ञानमुक्तया पश्यत्येनमितिवचनेन चतुर्मुख-शिवयोः कटाक्षेण रजस्तमोमूलकालुष्यप्रतिपादनाच्च चतुर्मुख.शिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वमुपपद्यते अस्य वचनस्य रजस्तमोमूलपुराणस्थत्वेऽपि नाप्रमाण्यं शङ्कनीयम् ब्रह्मशिवादिप्रतिपादनाभिनिविष्टस्य प्रबन्धस्य भगवत्प्रकर्षोक्तावाग्रहासम्भवेनास्य वचनस्य तत्वपरत्वोपपत्तेः स्वप्रतिपाद्यदेवतायामेव हि वक्तुराग्रहासम्भवः नत्वन्यत्र तस्मान्नास्य वचनस्य कारणदोषसम्भव इति भावः।

भाषानुवाद

जिस मनुष्य को जन्म समय ब्रह्मा अथवा रुद्र की दृष्टि का विषय होता है वह मनुष्य रजोगुण और तमोगुण प्रकृति का होता है। वह बारम्बार संसार में जन्म और मरण को प्राप्त होता है। सात्विक पुरुष विष्णु भगवान् का भक्त होकर उन्हों की उपासना करता है राजस प्रकृति के जन श्री ब्रह्मा की सेवा करते हैं। तामसी जन श्री शङ्कर की उपासना करते हैं। संकीर्ण जन सरस्वती का सेवन करते हैं यह भी बार्ता पुराणों में प्रसिद्ध हैं। इससे साबित होचुका कि जो सात्विक पुरुष हैं उन्हों की ही निष्ठा सात्विक पुराणों में होगी क्योंकि उन्हों के पर भगवान् की कृपा कटाक्ष जन्म समय में पड़ाहै। वेही पुरुष भक्तिके अधिकारी होकर भगवद्भावापत्ति रूप मुक्ति को प्राप्त होवे हैं।

वेदान्तरत्नमञ्जूषा

ननु गायत्रीवृत्तिसवितृपदस्य सूर्यरूढ़त्वात् रूढ़ेश्च योगबाधकत्वेन बलवत्त्वात् सूर्यप्रतिपादक एव गायत्रीमन्त्र इत्यवगम्यते। तथाच गायत्रीविषयस्यैव वेदान्तविषयत्वात् सूर्य्यस्यैव निरतिशयपरत्वमितिचेन्न। रूढ़ेर्योगाद्बलवत्त्वेऽपि तात्पर्यबाधे विपर्य्ययदर्शनात्। आकाशप्राणादिषु तथा निर्णयात्। तथाहि श्रूयते छान्दोग्ये शालावत्यजैवालिसंवादे, अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यान्त्याकाशो ह्येवेभ्यो ज्यायान् आकाशः परायणमिति।

कुञ्चिका

योगाद्रूढ़ेर्बलीयस्त्वमितिन्यायात् गायत्रीमन्त्रस्थसवितृपदस्य भानौ रूढ़त्वात् कथं तन्मन्त्रस्य ब्रह्मपरत्वं निश्चीयत इति शङ्कते नन्विति। नहि सर्वत्र तादृशनियमेन तथात्वं प्रतिपत्तुं शक्यते क्वचित् स्थलविशेषेऽन्यस्मिन्नर्थे वक्तुस्तात्पर्य्यसत्वे तं नियमं प्रबाध्यान्यथात्वमपि दृश्यते इत्याशयेनोक्तां शङ्कां परिहरति नेति। छान्दोग्यवाक्यमुदाहरति श्रूयत इति। हन्ताहमेतद्भगवतो वेदानीत्युपसन्नः शालावत्योविद्धीति जेवालेनोक्तं पृच्छति। अस्येति सर्वस्यैव प्रपञ्चस्य प्रतिष्ठाप्रश्ने प्रवाहणस्योत्तरमाह सर्वाणीति। कथंभूताकाशः जगत्प्रतिष्ठा अतः श्रुतौ सर्वाणीत्युक्तं। उपनिषदां तदभिज्ञानां च प्रसिद्धमेतदितिद्योतकौ निपातौ।

भाषानुवाद

यहां पर वादी का प्रश्न उपस्थित होता है कि गायत्री मन्त्र में सविता शब्द है वह सूर्य का वाचक है क्योंकि यह शब्द सूर्य में रूढ़ है योगिक वृत्ति से रूढी वृत्ती प्रवल

होती है। अतएव गायत्री मन्त्र प्रतिपाद्य सूर्य है उसको ही वेदान्त का विषय मानना उचित है। वही जगत का परम कारण है। उत्तर—यद्यपि योग वृत्ति से रूढी वृत्ति प्रबल होती है तथापि तात्पर्य के बाध से विपरीत होता है। वक्ता का तात्पर्य ज्ञान को भी शब्द बोध का कारण माना जाता है अन्यथा सैन्धवमानय इस वाक्य से लवण का भी बोध होता है कदाचित अश्व का बोध होता है यहाँ पर तात्पर्य ज्ञान से व्यवस्था होती है। यहाँ पर भी तात्पर्य से रूढा वृत्ति से यौगिक वृत्ति प्रबल है। यह निर्णय सूत्रकार ने आकाश और प्राणाधिकरण में किया है। सो इस प्रकार हैं। छान्दोग्य उपनिषद् से शालावत्य जैवालि के सम्वाद में है कि इस लोक की कौन गति है यह प्रश्न है। उत्तर—आकाश गति हैं आकाश का यह लक्षण है कि सब भूतों की उत्पत्ति आकाश से होती है। और आकाश में ही सकल भूत लय होते हैं।

### वेदान्तरत्नमञ्जूषा

अत्राकाशब्दो भूताकाशपरो ब्रह्मपरो वेति संशयः। तत्र भूताकाशपर एवेति पूर्वपक्षः। कुतः? आकाशशब्दस्य भूताकाशे रूढत्वाद् योगवृत्तेः, रूढेर्बलीयस्त्वादिति प्राप्ते, सिद्धान्तः—आकाशस्तल्लिङ्गादिति। आकाशः परमात्मैव। कुतः?। तल्लिङ्गात। वाक्यशेषे तस्यैव परमात्मनोऽसाधारणलिङ्गानां जगत्कारणत्वज्यायस्त्वपरायणत्वादीनां श्रवणात्। भूताकाशस्य च वाय्वादीनां कारणत्वेऽपि सर्वकारणत्वासंभवात्। तस्माद्वा एतस्माद्वा आत्मन आकाशः संभूत इति जन्यत्वश्रवणाच्च। कुञ्चिका

निमित्तमात्रत्वं निराकर्त्तुं विशिनष्टि। आकाशमिति भूताकाशव्यावृत्तये हेत्वन्तरमाह। आकाशो होति तत्र हेत्वन्तरं सूचयति। आकाश इति विचाराङ्गसंशयमाह। आकाश शब्द इति। अनतिप्रसङ्गार्थं प्रश्नद्वारा निमित्तमाह कुत इति, भूताकाशत्वमेवात्रापास्य वेनोपदिश्यते न परमात्मेति प्राप्ते सिद्धान्तयति। आकाश इति, अस्य लोकस्य कागति रिति प्रश्नो दृश्यमाननामरूपप्रपञ्चमात्रगतिविषय इति तदनुरोधाद्य एव सर्वस्य लोकस्य गतिः स एवाकाशशब्देन प्रतिवक्तव्यः नच भूताकाशः सर्वस्य लोकस्य गतिस्तस्यापि लोकमध्यपातित्वात्तदेव तस्य गतिरित्यनुपपत्तेः। एवं सर्वेषां भूतानां लयो ब्रह्मण्येव एवं सर्वेभ्यो ज्यायस्त्वं ब्रह्मण एव परायणं ब्रह्मैव तस्मात्सर्वेषां।

### भाषानुवाद

आकाश सब से बड़ा और परायण है। सब का स्थान है। इस वचन में सन्देह होता है कि यहाँ पर आकाश शब्द भूताकाश का वाचक है अथवा ब्रह्म का

वाचक है। तहाँ पूर्वपक्ष आकाश शब्द भूताकाश का वाचक है क्योंकि आकाश शब्द भूताकाश में रूढ है योग वृत्ति से रूढ वृत्ति प्रबल होता है। इस विषय में सूत्रकार का सिद्धान्त यह है कि आकाश शब्द से परमात्मा का ग्रहण होता है भूताकाश का ग्रहण नहीं होता है क्योंकि सर्व जगत्कारणत्व और सर्वश्रेष्ठत्वपरायणत्वादि असाधारण लिङ्ग परमात्मा के हैं। यह लिङ्ग भूताकाश में कदापि नहीं हो सकते हैं। यद्यपि भूताकाश का वायु का कारण कह सकते है। और परमात्मा से आकाश उत्पन्न हुआ है यह श्रुति हैं।

वेदान्तरत्नमञ्जूषा

य आकाशमन्तरो यमयतीति नियम्यत्वश्रवणाच्च। तस्माल्लिङ्गाऽन्यथाऽनुपपत्तिसहकृतयागवृत्तेर्बलीयस्त्वाद् रूढेर्बाध इति। सर्वमभिव्याप्य काशत इत्याकाशः। तमेव भान्तमनुभाति सर्वमिति श्रुत्यन्तराद्। तथैवान्यदपि तत्राम्नायते, कतमा सा देवतेति प्राण इति होवाच सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्तेति। तत्र प्राणशब्दो वायुवृत्तौ, ब्रह्मणि वेति संशयः। वायुवृत्तो एव शक्त इतिपूर्वपक्षः। कुतस्तत्रैव प्राणशब्दस्य रूढत्वेनातिप्रसिद्धत्वात्।

कुञ्चिका

लोकानामिति प्रश्नोपक्रमात्। उत्तरे च तदसाधारणब्रह्मगुणपरामर्शात् पृष्टायाश्च गतेः परायणमिति च तस्योपसंहाराद्ब्रह्मैवाकाशशब्देनाभिधीयते नतु भूताकाश इतिभावः। कतमेति। कश्चिदृषिश्चाक्रायणो नाम धनार्थं राज्ञो यज्ञं गत्वा ज्ञानवैभवं स्वस्य प्रकटयन् प्रस्तातोरमुवाच। हेप्रस्तोतर्या देवता प्रस्तावं भक्तिविशेषमन्वायत्ता तां चेदविद्वान् मम विदुषः सन्निधौ प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति। स भीतः सन् प्रपच्छ कतमेत्यादिना प्रतिवचनं प्राण इति। मुख्यप्राणं व्यावर्त्तयति सर्वाणीति। प्राणमभिलक्ष्य लयकाले संविशन्ति जन्मकाले तमेवाभिलक्ष्योज्जिहते, उद्गच्छन्ति सैषा परा देवता प्रस्तावं भक्तिविशेषमन्वागतेत्यर्थः।

भाषानुवाद

और परमात्मा से आकाश नियम्य हैं। य आकाशमन्तरोयमयतीति श्रुतिः इससे सिद्ध हो चुका की अकाश शब्द ब्रह्म का वाचक हैं। छान्दोग्य उपनिष में यह कहा कि कतमा सा देवतेति प्राण इति होवाचेति। सो देवता कौन हैं यह प्रश्न हैं। उसका उत्तर यह है कि प्राण देवता हैं। सर्व भूतों का प्राण में ही प्रवेश होता है। प्राण से ही उत्पन्न होते हैं। यहाँ पर यह संशय होता है कि प्राण शब्द का अर्थ वायु है अथवा

अथवा परमात्मा हैं। यहाँ पर यह पूर्व पक्ष उपस्थित होता है कि प्राण शब्द वायु का वाचक है। क्योंकि प्राण शब्द वायु में रूढ है यह वार्ता जगत् में प्रसिद्ध है।

### वेदान्तरत्नमञ्जूषा

तत्र ब्रूते—अतएव प्राण इति। प्राणपदाभिधेयः पुरुषोत्तम एव। कुतः। अतएव=सर्वभूताभिसंवेशनादिपरमात्मलिङ्गादेव। तथा च वायुवृत्तानुपपन्नत्वाद् इति समन्वयाध्याये प्रथमपादे निर्णीतं सूत्रकृद्भिः। तथैवात्रापि सवितृशब्दस्य रूढिवृत्त्याऽऽदित्यपरत्वेऽपि सर्वधीनियन्तृत्वादीनां परमात्मासाधारणलिङ्गादीनां तत्रासंभवात् योगवृत्या ब्रह्मविषयकत्वं निश्चीयते। आदित्यस्य तु नियम्यत्वजन्यत्वपराङ्गत्वपरतन्त्रप्रकाशकत्वादीनामनीश्वरलिङ्गादीनां श्रवणाज्जीवत्वं स्पष्टमेव। एतस्य वाऽक्षरस्य। प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः। भीषा स्माद्वातः। कुञ्चिका

सर्वभूतसंवेशनोद्गमनबोधकश्रुत्या निश्चीयते प्राणोऽत्र ब्रह्म एवेति नतु वायुविकारः तत्र सर्वेषां भूतानां संवेशनोद्गमनासम्भवादिति सिद्धान्तयति तत्र ब्रूत इति प्रकृते योजयति तथैवात्रापीति। गायत्रीमन्त्रस्थसवितृशब्देन योगवृत्या परमात्मा एवाभिधीयते नत्वादित्यः परब्रह्मासाधारणधर्माणां सर्वधीनियन्तृत्वादीनां तत्रासत्वादित्यर्थः। प्रत्युत तद्विपरीतधर्मा आदित्ये सन्तीत्याह। आदित्यस्य त्विति।

### भाषानुवाद

सूत्रकार का यह सिद्धान्त है कि उक्त श्रुति में प्राण शब्द का अर्थ सर्वेश्वर परमात्मा हैं। क्योंकि सर्व भूतोत्पादकत्व और सर्व भूतों का सम्वेशन आदि असाधारण लिङ्ग परमात्मा के हैं ये लिङ्ग वायु में कदापि नहीं बन सकते। यह समन्वयाध्याय के प्रथम पाद में अथएव प्राणः।१।१।१४। इस सूत्र में श्रीवेदव्यासाचार्यजी ने कहा है। इस प्रकार गायत्री मन्त्र में भी सविता शब्द रुढो वृत्ति से सूर्य का वाचक है। तो भी सर्वधीनियतृत्वं अर्थात् सबों की बुद्धि का प्रेरक। यह परमात्मा का असाधारण लिङ्ग हैं। यह असाधारण लिङ्ग सूर्य में कदापि नहीं उपपन्न हो सकता है। इससे योग वृत्ति द्वारा सविता शब्द परब्रह्म पुरुषोत्तम का वाचक है। सूर्य परब्रह्म से नियम्य हैं। और भगवान् से उत्पन्न होता है। और पर का अङ्ग और पर प्रकाश्य है अतएव सूर्य जीव कोटी में है क्योंकि जीव को उपदर्शित लिङ्ग सूर्य में विद्यमान हैं।

### वेदान्तरत्नमञ्जूषा

पवते भीषादेति सूर्य्यः, चक्षोः सूर्योऽजायत, सूर्याचन्द्रमसौ धाता यथापूर्वम-

कल्पयत् । अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ, येन सूर्यस्तपति तेजसेद्धः । न यत्र सूर्यो भाति न चन्द्रतारकम् । यत्र न सूर्यस्तपति, यत्र वायुर्नवातीत्यादिश्रुतिभ्यः। तस्माद् गायत्रीमन्त्रप्रतिपाद्यः सर्वज्ञः सर्वशक्तिः स्वाभाविकाचिन्त्यानन्तकल्याणगुणाश्रयः श्रीभगवान् पुरुषोत्तमोरमाकान्त एवेति सिद्धम् ॥

कुञ्चिका

उक्तार्थं श्रुतिगणेन समर्थयति । एतस्य वेति षड्गुणैश्वर्यसम्पन्नः श्रीपुरुषोत्तम एव गायत्रीमन्त्रप्रतिपाद्य इति निगमयति तस्मादिति ।

गायत्र्याः सङ्क्षेपार्थोनिरूपितः । पाञ्चरात्रे तथाहि धियो धीपूर्विकाश्चेष्टाः प्रेरणं तु प्रचोदनम् । यः सर्वशक्तिः सविता देवः संविन्मयश्च यः ॥१॥ यश्च सर्वविदीशानो धियस्ता स्ताः प्रचोदयात् । सृष्टिस्थितिलयत्राणक्रियाकारणमव्ययम् ॥ २ ॥ तस्य देवस्य सङ्कल्पं भर्गः संज्ञमुपास्महे । गायन्तं त्रायमाणाया गायत्र्या अर्थ ईदृशः ॥ ३ ॥

भाषानुवाद

जिस अक्षर भगवान् की आज्ञा का पालन सूर्य और चन्द्रमा करते हैं । जिसके भय से वायु चलता है और सूर्य उदय होता है भगवान् के चक्षु से सूय की उत्पत्ति होती है । और भगवान् के तेज से सूर्य वृद्धि को प्राप्त होता है । सूर्य चन्द्रमा और तारागण भगवान् को प्रकाश नहीं कर सकते हैं । इससे सिद्ध हो चुका कि सविता शब्द परमात्मा का वाचक है सूर्य का वाचक नहीं है ।

वेदान्तरत्नमञ्जूषा

ननु "एकमेवाद्वितीयंब्रह्म नेहनानास्तिकिञ्चन । मृत्योःस मृत्युमाप्नोति य इह नानेव पश्यति । निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जनम् । यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । यद्वाचा न भ्युदितं येन वागभ्युद्यते" इत्यादिश्रुतिभिर्ब्रह्मण एकत्वनिर्गुणत्वनिर्विशेषत्वज्ञानाविषयत्वशब्दाद्यगोचरत्वादिप्रतिपादनात् कथमुक्तप्रकारकब्रह्मप्रतिपत्तिस्तथात्वे चोक्तश्रुतीनां निर्विषयतया व्याकोपात् ।

कुंचिका

ब्रह्मण एव सत्यत्वं तदितरस्य मिथ्यात्वमिति श्रुतिप्रमाणेन साधयन्नाशङ्कते । नन्विति । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्मेति । सदेवेति विजातीयभेदो व्यावर्त्यते । एकमेवेति सजातीयभेदः अद्वितीयमिति स्वगतभावाभावरूपभेदः । षड्विधतात्पर्य्यलिङ्गोपेतत्वसूचनायैकमेवेतिवाक्यं प्रथममुपात्तम् व्यतिरेकनिषेधं कण्ठोक्तं दर्शयति नेहनानास्तीति ।

नानापश्यन्नत्यन्ताज्ञ इति दर्शयति। मृत्योरिति। अत्र मृत्युरविद्या "तमसा वा एषः नभ प्रविशतीतिवत्। इवशब्देन नानात्वस्यापारमार्थ्यं दर्शितं। अनृतजडपरिछिन्नव्यावृतनिर्विशेषवस्तुपरमिदं वाक्यं कारणवाक्येनैकार्थ्यात् शोधकवाक्यान्तरैकार्थ्यात् समानाधिकरण्यान्यथानुपपन्नंचेतिभावः। निर्गुणं गुणरहितं। निष्कलं कला अवयवाः निरवयवं शान्तं ऊर्मिषट्करहितम्।

अशनापिपासे शोकमोहौ जरामृत्यू चोर्मयः। 'निरवद्यं निरञ्जनम्" कर्मसम्बन्धतत्फलरहितम् अनेन सत्यज्ञानादिवाक्यगर्भितव्यावृत्तिः स्फुटीकृता। अथचिन्मात्रशब्दाभिप्रेतां ज्ञेयत्वव्यावृत्तिमाह (यस्येति) अमतम् = अविज्ञातम् श्रवणमननादिरूपाज्ञानाविषयत्वोक्तिः। ब्रह्मणो वागाद्यविषयत्वमाह। यतो वाच इति। आदिना यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः। यत्राद्वैतमिवभवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्केन कं विजानीयात्। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्यम्" यदाह्येवेष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति नस्थानतोपि परस्योभयलिङ्गं सर्वत्रहि मायामात्रन्तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात् प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् इत्यादयोग्राह्याः॥

## भाषानुवाद

यहाँ पर मायावादी का यह प्रश्न है कि एकमेवाद्वितीयमिति। एक ही अद्वितीय ब्रह्म है उसमें नानात्व नहीं है। जो मनुष्य ब्रह्म में नानात्व देखते हैं वे मरण के समय मृत्यु को प्राप्त होता है। ब्रह्म निर्गुण हैं और कला से रहित हैं। और निरञ्जन हैं। जो मनुष्य कहता है कि मैं जानता हूँ वह भगवान् को नहीं जानता है। जो पुरुष कहता है कि मैं नहीं जानता हूँ वह जानता है। जो भगवान् मन और वाणी का अविषय हैं अर्थात् वाणी और मन भगवान् को प्राप्त न होकर वहाँ से निवृत होजाते हैं। उपदर्शित श्रुतियों के द्वारा यह सिद्ध हो चुका कि ब्रह्म एक है और गुणों से रहित हैं। ज्ञान और शब्द का अविषय है तब बतलाइये सगुण शक्तिमान ब्रह्म शास्त्र का विषय किस तरह से हो सकता है। अन्यथा निर्गुण और अद्वितीय ब्रह्म बोधकश्रुतियों का बाध हो जायेगा।

## वेदान्तरत्नमञ्जूषा

तच्चानिष्टमिति चेन्न। सर्वश्रुतीनामस्मत्सिद्धान्ताऽविरोधित्वात्। तथाहि। सदाकाशप्राणज्योतिरात्मब्रह्मनारायणादिशब्दाभिधेयस्य विश्वकारणस्यैकत्वाभ्युपगमात् तत्परोऽयं वाक्यकदम्बः। एवञ्चैकशब्दो जगत्कारणस्यैकत्वं विदधाति॥

अन्ययोगव्यवच्छेदार्थकेनावधारणेन च तत्साम्यं निराक्रियते अद्वितीय-पदेन च तदाधिक्यमिति बोध्यम् । न तत्समश्चाभ्यधिकश्च दृश्यते इति श्रुत्यन्तरात् । एवं सदाद्यनेकशब्दप्रयोगात् तदर्थे कारणे नानात्वसंभावनावारणायाह । इह जगत्कारणे नानाशब्दवाच्येऽपि नानात्वं नास्ति । तस्यैकत्वाद् ।

## कुञ्चिका

प्रागुदाहृतवाक्यकदम्बैः सूत्रैश्च ब्रह्मणो निर्गुणत्वनिर्विशेषत्वज्ञानाविषयत्व-शब्दाद्यगोचरत्वाभिधानात कथं कल्याणगुणैकराशित्वेन ब्रह्म प्रतिपत्तुं शक्यते अन्यथोक्तवचसां निर्विषयतया विरोधः प्रसज्येत । इत्याह । एकत्वनिर्गुणत्वेति । यः सर्वज्ञः सर्ववित् ( परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ) सत्यकामः सत्य-सङ्कल्पः । इत्यादिवचनैः ब्रह्मस्वरूपगुणप्रतिपादकैः सविशेषं वृहत्तमं ब्रह्म निश्चीयते उभयविधवाक्यानां तुल्यबलत्वान्नात्र बाध्यबाधकभावः कल्पयितुं शक्यते तस्मात्सर्वासां श्रुतीनां सामञ्जस्यमर्थप्रतिपादनेन यथा भवति तं दर्शयन्नुक्तशङ्कां परिहरति नेति । स्वसम्प्रदायसिद्धान्तरीत्या न कासामपि श्रुतीनां परस्परं विरोधः शङ्कनीय इत्याह । सर्व-श्रुतीनामिति । प्रागुक्तश्रुतीनामर्थं विवृण्वन्नविरोधं दर्शयति । तथाहीत्यादिना । तावदेक-मेवाद्वितीयब्रह्मेतिश्रुत्यर्थं व्याचष्टे सदाकाश इति ।

## भाषानुवाद

अब इस प्रश्न का समाधान इस प्रकार है कि हमारे सिद्धान्त में कोई भी श्रुति का परस्पर में विरोध नहीं है । क्योंकि सत्पद और आकाश प्राण और ज्योति आत्मा ब्रह्म नारायण शब्दों का अर्थ विश्व का कारण भगवान् एक है जब इस प्रकार का निश्चय हो चुका है तब 'एक मेवाद्वितीयं ब्रह्म" इस श्रुति का अर्थ इस प्रकार है कि श्रुति में एक शब्द निर्दिष्ट है उसका अर्थ जगत्कारण एक ही है । विश्व के कारण नाना कदापि नहीं हो सकते हैं । श्रुति में एक शब्द अन्य योग व्यवच्छेदार्थक हैं । अर्थात भगवान् के समान दूसरा कोई नहीं है अद्वितीय पद से यह निश्चित होता है कि भगवान् से अधिक दूसरा कोई नहीं है । यह अर्थ "नतत्समश्चाभ्यधिकश्च दृश्यते" इस श्रुति में स्पष्ट है । सत् शब्द और आकाश आदि शब्द प्रयोग से संशय होता है कि कारण नाना हैं इस शङ्का के निवारण के लिये श्रुति कहा है कि नेह नानास्ति किञ्चन इति । जगत्का कारण नाना शब्दों से कहा गया है उसमें नानात्व नहीं हैं। जगत्कारण पर ब्रह्म एक ही है ।

## वेदान्तरत्नमञ्जूषा

नानात्वदर्शनस्य फलमाह । मृत्योः स मृत्युमाप्नोति । सदैव जन्म-

मरणादिदुःखात्मकसंसारभाग् भवति। नानात्वदर्शनमास्तां, नानेव दर्शनस्यैतावत् फलमित्यर्थ इति कैमुत्योक्त्या महद्दोषः सूचितः। यद्वा क्वचिच्चतुर्मुखादीनां कारणत्वश्रवणात् तत्र तथात्वशंकावारणायेदं वाक्यम्। इह जगत्कारणे नानाचतुर्मुखत्रिनयनादिभेदो नास्ति। कारणस्य एकत्वावधारणात्। तेषां तन्नियम्यत्वादिश्रवणात्। अवरत्वं पूर्वमेवोक्तं। शेषं समानम्। तथैव निर्गुणवाक्यानां हेयगुणविशेषनिषेधपरत्वेन नैराकाङ्क्ष्यात्। नच निर्गुणमिति।

## कुञ्जिका

एकशब्दार्थं विवृणोति। एवञ्चेति। एवकारार्थं व्याचष्टे। अन्ययोगव्यवच्छेदेति। तत्साम्यं निराक्रियत इति। वस्तुमात्रस्य ततोऽवरत्वेन विसदृशत्वादित्यर्थः। अद्वितीयशब्दार्थमाह। अद्वितीयपदेन चेति, एतद्द्रढयितुं वाक्यान्तरं पठति। न तत्सम इति। "नेह नानास्ति किञ्चन" इत्यस्यार्थं विवृणोति। एवमित्यादिना। सत्यं ज्ञानमनन्तं ब्रह्म सदेव सोम्येत्यादिश्रुतिभ्यो ब्रह्मणो सत्यसदाद्यनेकशब्दवोध्यत्वं यद्यप्यभिधीयते तथापि नेह नानास्ति किञ्चन इति श्रुत्या नानाकारणत्वं निषिध्यत इत्यर्थः। श्रुतिस्थेहशब्दार्थमाह "इह" जगत्कारणइति तस्य कारणत्वस्य फलप्रदर्शनमुखेन मृत्योरिति श्रुत्यर्थं व्याचष्टे नानात्वदर्शनस्येति।"नेहनानास्ति किञ्चिन' इतिश्रुतेः प्रकारान्तरेणार्थमाह यद्वेति। "तत्र" हिरण्यगर्भः समवर्तताग्रे आदिकर्त्ता स भूतानां ब्रह्माऽग्रे समवर्त्तत इतिश्रुतौ "तथात्वशङ्कावारणाय" कारणत्वशङ्कावारणाय। इदम् नानेहनानास्तिकिञ्चनेतिवाक्यम्। एकत्वावधारणादिति। सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिना कारणस्यैकत्वप्रतिपादनादित्यर्थः। तेषाम्। चतुर्मुखत्रिनयनादीनाम्।

## भाषानुवाद

कारण में नानात्व दर्शन का फल बतलाते हैं मृत्योः समृत्युमाप्नोतीति। जो पुरुष व जगत्कारण ब्रह्म में नानात्व देखता है वह मरण के समय मृत्यु को प्राप्त होता है। अर्थात सदा जन्म मरण आदि दुःख के भागी होते हैं। नानात्व दर्शन तो एक तरफ रहा जो पुरुष नाना के सदृश भगवान् को देखता है वह संसार के दुःखों का अनुभव करता है यह कैमुत्यन्याय हैं। अथवा कोई पुराण में चतुर्मुख और रुद्र को जगत का कारण बतलाया है इस शङ्का के समाधान के लिये नेह नानास्ति किञ्चनेति। जगत्कारण चतुर्मुख और त्रिनयन महादेव प्रभृति नाना कारण नहीं हो सकते हैं। क्योंकि जगत का कारण एक परब्रह्म पुरुषोत्तम ही हैं। चतुर्मुख प्रभृति का तो भगवान् नियन्ता है। जो निर्गुण प्रतिपादक वाक्य हैं उन्हीं का यह भाव हैं कि भगवान् वासुदेव में माया के गुणों का संसर्ग मात्र भी नहीं हैं।

## वेदान्तरत्नमञ्जूषा

सामान्यशब्दप्रयोगाद् धर्ममात्राऽपवाद इति वाच्यम्। तेषां स्वाभाविकत्वश्रवणात् स्वाभाविकवस्तुनो निषेधाविषयत्वनियमाद्। नहि अग्नेर्दहनप्रकाशनादिधर्मो निषेद्धुं शक्यः केनाऽपि विदुषा। अन्यथा, अस्थूलादिवाक्यैः स्वरूपस्यापि निषेधोऽभ्युपगन्तव्यः। स्वाभाविकत्वाविशेषात्। तस्माद्धेयगुणनिषेधपराण्येव निर्गुणवाक्यानीति न तैर्विरोधशङ्कावकाशः। नापि ज्ञानाविषयकवाक्यविरोधः। तेषामियत्ताऽवच्छिन्नविषयकनिषेधरूपत्वात्। तथाहि। यस्य पुंसःपरमेश्वरस्वरूपगुणादिविषयकेयत्तावच्छेदेन अमतम्।

## कुञ्चिका

"अवरत्वम् तेषां पूर्ववर्तित्वासिद्धया कारणत्वस्याप्यसिद्धत्वान्नचतुर्मुखादीनां जगत्कारणत्वंकथमपि साधयितुं शक्यत इति भावः। निर्गुणप्रतिपादकश्रुतीनां प्राकृतगुणनिषेधपरतया सामञ्जस्यं विवृण्वन् विरोधं परिहरति। तथैवेति। निर्गुणमिति। गुणसामान्यस्य ब्रह्मणि निषेधात निर्विशेषचिन्मात्रमेव ब्रह्म सिद्धयतीत्याशङ्क्य परिहरति नचेति। तेषाम् = ज्ञानादीनाम्। विपक्षे वाधकतर्कं दर्शयति। अन्यथेति। स्वाभाविकधर्मस्यापि निषेधविषयत्वेत्यर्थः। फलितार्थमाह। तस्मादिति। इदमात्राकूतं यद्यपि न गुणनिषेधः सङ्कोचयितव्य आर्थगुणनिषेधवलेन सर्वगुणविरहावगमात् ज्ञानस्य ज्ञानादिगुणाश्रयत्वादर्शनात ब्रह्मणो ज्ञानमात्रप्रतिपादनेन निर्गुणत्वं फलितं तथापि "यथा पशुना यजेत" छागस्य वपाया इत्यादिषु छागो वा मन्त्रवर्णात्" इत्युक्तन्यायात्सामान्यशब्दो विशेषदर्शने सति तत्र पर्य्यवस्यति तथागुणसामान्यनिषेधो विशेषगुणनिषेधे पर्य्यवस्यतीतिप्रागेवप्रपञ्चितम्।

## भाषानुवाद

यहाँ पर यह प्रश्न उपस्थित होता है कि निर्गुण शब्द का अर्थ यह है कि गुण सामान्याभावः अर्थात कोई भी गुण निर्विशेष ब्रह्म में नहीं है। उत्तर—परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञान वल क्रियाच सत्यकामः सत्यसङ्कल्पः, विनिश्चितगुणोपयत्तेश्च ज्ञान शक्ति वलैश्वर्य तेजोवीर्याण्यशेषतः भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभिः। इन श्रुतियों के द्वारा सत्यकामत्वादि अनन्त कल्याण गुण स्वाभाविक हैं। जो स्वाभाविक वस्तु का निषेध कदापि नहीं हो सकता है। जैसे अग्नि का स्वाभाविक धर्म दाहकत्व और प्रकाशकत्व है उसका निषेध नहीं हो सकता है। इस प्रकार भगवान् के स्वाभाविक गुणों का निषेध निर्गुणम्। इस वाक्य से नहीं हो सकता है अन्यथा अस्थूलम् इस वचन से ब्रह्म स्वरूप का भी निषेध होना चाहिये क्योंकि स्वाभाविकत्व धर्म

गुण और स्वरूप में समान हैं। इस तर्क से सिद्ध हो चुका कि स्वाभाविक धर्म का निषेध किस समय में नहीं हो सकता है। तस्मात् निर्गुण वाक्य हेय गुणों का निषेध करते हैं। स्वाभाविक गुणों का निषेध नहीं करते हैं, अतएव निर्गुण प्रतिपादक श्रुति का सगुण प्रतिपादक श्रुति के सङ्ग विरोध नहीं है। ब्रह्म को ज्ञान का अविषय बतलाने वाले वाक्यों का भी विरोध नहीं है, क्योंकि भगवान् के गुणों की इयत्ता के निषेध में श्रुति का तात्पर्य है। भगवान् के गुण इतने ही हैं—ऐसे कहने वाले पुरुषों ने भगवत्स्वरूप को नहीं जाना।

## वेदान्तरत्नमञ्जूषा

**अननुभूतमनुमानादिभिः, तस्य मतं तेन मतम् अपरिछिन्नत्वेन ज्ञातमित्यर्थः। यस्य तु स्वरूपादि इयत्तावच्छेदेन मतं स न वेद। परिच्छिन्नदर्शित्वात्। भगवत्स्वरूपगुणादीनामनन्तत्वेनाऽचिन्त्यत्वात्। सत्यं ज्ञानमनन्तं ब्रह्म। विष्णोर्नु कं वीर्याणि प्रावोचं यः पार्थिवानि विममे रजांसि नते विष्णो जायमानो न जातो देवस्य महिम्नः परमं तमाप सहस्रधा महिमानः सहस्रः। एष एवाचिन्त्यः परः परमो हरिरादिरनादिरनन्त इत्यादिश्रुतिभ्यः। एवमेवान्यदपि वाक्यं व्याख्येयम्। ऐक्यार्थात्। अन्यथा,**

## कुञ्चिका

यस्यामतं तस्य मतमितिश्रुतेरर्थं व्याकुर्वन् विरोधं परिहरति—नापीति। तेषाम् = यस्य मतमित्यादीनाम्। अगाधतोयाब्धौ तदवगाहनार्थं प्रवृत्ता मनुजा यथाशक्ति तमवगाह्य तद्गाधतामप्राप्य पुनरावर्त्तन्ते अगाधत्वात्, तथा वेदाऽपि तत्स्वरूपगुणादिनिर्णये प्रवृत्ताअपि इयत्तावच्छेदेन तु न ते जानन्तीति निषेध एव तेषां तात्पर्यमित्यर्थः। श्रुत्यर्थं विवृणोति—तथाहीत्यादिना। भगवत्स्वरूपगुणादीनामनन्तत्वे श्रुतिं प्रमाणयति-सत्यमिति। स वेत्ति वेद्यं नच तस्यास्तिवेत्ता न वेदितः।" इत्यस्य वाक्यस्य मुख्यार्थस्वीकारे "तमेवविदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" "ऋते ज्ञानान्न मुक्तिः" इत्यादिश्रुतीनामन्वयव्यतिरेकावधारणरूपप्रमाणसहकृतानां बाधप्रसङ्गादुक्ता गतिः सर्वसम्मतेत्याह—एवमेवेति। बाधकतर्कमाह—अन्यथेति। उक्तगत्यनङ्गीकार इत्यर्थः।

## भाषानुवाद

क्योंकि वह पुरुष परिच्छिन्न दर्शी हैं। भगवान् के स्वरूप और गुण अनन्त हैं "इन की गणना हम कालत्रय में भी नहीं कर सकते हैं" इस प्रकार जानने वाला पुरुष ज्ञाता कहलाता है। क्योंकि भगवान् के स्वरूप और गुणों को अचिन्त्य अनन्त श्रुति बतलाती हैं। इस विषय में 'विष्णोर्वीर्याणि प्रावोचं' यह श्रुति प्रमाण हैं।

## वेदान्तरत्नमञ्जूषा

तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते ऽयनाय। य एवं विदुरमृतास्ते भवन्ति। यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः, तदा देवमविज्ञाय दुःखस्यान्तं निगच्छतीत्यादिवाक्यव्याकोपात्। ज्ञानाभावेऽनिर्मोक्षप्रसङ्गाच्च। तत्रैव वाक्यशेषे, मतं तस्य, विज्ञातमविजानतामिति ज्ञानविषयत्वप्रतिपादनाच्च। किञ्च यतो वाचो निवर्त्तन्ते इत्यत्र, यतः सर्वज्ञात् सर्वशक्तेः स्वाभाविकाऽचिन्त्यानन्तकल्याणगुणाश्रयात् पुरुषोत्तमात्, तस्यानन्दादीनामन्तमप्राप्य मनसा सह वाचो निवर्तन्ते इति तेषामनन्तत्वाद् उदाहृतवाक्येभ्यः।

## कुञ्चिका

तत्रैवेति। अस्य मतमितिश्रुतौ। यतो वाचो निवर्त्तन्ते इति श्रुत्यर्थं व्याचष्टे—किञ्चेति यथा अगाधतोयाब्धौ तदवगाहनार्थं प्रवृत्ताः मनुजाः स्नानपानादिदृष्टादृष्टफलैः कृतार्था अपि तत्तलस्पर्शमात्रेऽकृतार्थाः न तावता बलहानिः अगाधत्वात्, तदा वेदा अपि तत्स्वरूपप्रतिपादने प्रवृत्ता यथाधिकारं सर्वाधिकारिभ्यः पुरुषार्थचतुष्टयप्रापकत्वलक्षणभगवद्दत्तकैङ्कर्यपालनेन कृतार्था अपि तदियत्ताद्योतनामात्रेऽकृतार्थाः तथाभूताऽकृतार्थत्वस्य तु तेषां भूषणत्वमेव भगवदैश्वर्यानन्त्यद्योतकत्वात्। एतेन वेदेषु ब्रह्मस्वरूपादेरियत्ताया अज्ञता दूरे निरस्ता। यदि तदियत्तासत्वे वेदो न जानीयात तर्हि उक्तशङ्काप्रवेशो घटेत। न तु तदस्ति, अदृष्टश्रुतत्वात। नहि खपुष्पादीनांगन्धाज्ञाने शशविषाणादिताडनक्षतादर्शने च ज्ञानहानिः। अन्यथा।

## भाषानुवाद

भगवान को सर्वथा ज्ञान का अविषय मानोगे तो "तमेव विदित्वातिमृत्युमेति" इस श्रुति से यह निर्धारित होता है कि भगवान् पुरुषोत्तम के ज्ञान से ही मृत्यु को अतिक्रमण करके मुक्त होता है—यह कहना निरर्थक होजायेगा। 'य एवं विदुरमृतास्ते भवन्तीति' यह श्रुति भी कहती है जो पुरुष भगवान् को जानता है वह पुरुष मुक्त होता है। जैसे चर्म की तुल्य आकाश का वेष्टन असम्भव हैं उसी तरह भगवान् के ज्ञान के बिना मुक्ति का होना असम्भव है। इन वचनों से साबित होचुका कि भगवान् बासुदेव के ज्ञान से ही मुक्ति हो सकती है। और जब तुम परब्रह्म को ज्ञान का विषय स्वीकार नहीं करते हो तब उक्त श्रुतियों का बाध मानना पड़ेगा और मुक्ति का होना भी असम्भव होगा। 'तस्य विज्ञातम्' इस पद से सिद्ध होता है कि परब्रह्म ज्ञान का विषय है। 'यतो वाचो निवर्त्तन्ते' इस श्रुति का यह अर्थ है कि सर्वज्ञ सर्व शक्ति और स्वाभाविक

अचिन्त्य कल्याण गुण सागर भगवान् पुरुषोत्तम के आनन्द प्रभृति गुणों के अन्त को प्राप्त न होकर मन सहित वाणी निवृत्त होजाती हैं। क्योंकि भगवान् पुरुषोत्तम के आनन्द आदि गुण अनन्त हैं अर्थात तादाद हद्द से रहित हैं। यथा समुद्र तीर निवासी जन समुद्र जल में स्नानादि द्वारा दृष्ट और अदृष्ट फल को लाभ करता है। परन्तु समुद्र के जल की थाह को नहीं बतला सकता है तथा वेद रूप वाणी भगवान् पुरुषोत्तम के स्वरूप और गुण प्रतिपादन द्वारा जीव के पुरुषार्थ के साधन बतलाती हुई भगवान् के स्वरूप गुणों का अन्त नहीं पाय कर निवृत्त होजाती हैं।

## वेदान्तरत्नमञ्जूषा

अन्यथा तत्रैव मन्त्रशेषे, आनन्दं ब्रह्मणो विद्वान्नबिभेति कुतश्चनेति तदीयानन्दस्य ज्ञानविषयत्वं भयनिवृत्तिफलकत्वं चोक्तं विरुद्ध्यत। तंत्वौपनिषदं पुरुषं पृच्छामः। सर्वे वेदा यत्पदमामनन्ति। वेदैश्च सर्वैरहमेव वेद्यः। नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वतीत्यादिशास्त्रविरोधात् सर्वं हि उपदेशशास्त्रं दत्ततिलाञ्जलिःस्याद्, उपदेष्टृसंततिनाशश्च। तस्मादुक्तलक्षणं ब्रह्मैव गायत्रीप्रतिपाद्यत्वात् सर्ववेदान्तविषय इत्येव साधीयान्। तथैवच सूत्रितं भगवता बादरायणेन, शास्त्रयोनित्वादिति।

## कुञ्चिका

साऽङ्गंवेद यदिवा न वेदेत्यनेन वाक्येन ब्रह्मणोऽपिसर्वज्ञताया हान्यापत्तेरिति भावः॥ बाधकतर्कमाह। अन्यथेति। ज्ञानाविषयत्व इत्यर्थः।

उक्तार्थं श्रुतिमुखेन द्रढयति। तं त्विति तम्सर्वशास्त्रप्रसिद्धम्। औपनिषदम् उपनिषत्प्रतिपाद्यम् "पुरुषम्" पूर्णं पुरुषोत्तममित्यर्थः। पृच्छामीत्यनेन वेदवेद्यस्यैव जिज्ञास्यत्वं सूचितम्। अन्यदपि वाक्यमुदाहरति। सर्व इति। सर्वेऽपि वेदाः परम्परया साक्षाद्वातत्तत्प्रकृतैरूपैर्यत्पदं पद्यते गम्यते इति पदं प्राप्यम्। आमनन्ति। आसमन्तात् स्वप्रेमतया प्राप्यतया च निश्चिन्वन्ति, गमयन्तीति यावत। श्रीमुखवचनेनाप्युक्तार्थं प्रमाणयति, वेदैश्चेति। एतद्दार्ढ्यायान्यद्वाक्यमाह। नमाम इति। यत्र यस्मिन भगवति "सर्ववचसांप्रतिष्टा प्रतिपाद्यता तं नमाम इत्यन्वयः। यः सर्ववेदवेद्यः स एव नतिविषयः स च भगवान् श्रीकृष्ण एवेत्युक्तम्॥

## भाषानुवाद

जो यह अर्थ उक्त श्रुति का स्वीकार नहीं किया जाय तो आनन्दं ब्रह्मणो विद्वान्नबिभेति कुतश्चनेति। इस उतरार्द्ध भाग से भगवान् को ज्ञान विषयत्व और भय निवृत्ति

फल प्रदर्शन करना सर्वथा असङ्गत होजायेगा 'तन्त्वौपनिषदं पुरुषं पृच्छामि इति। हम उस उपनिषत्प्रतिपाद्य पुरुष को पूछते हैं। जब परब्रह्म उपनिषत् के द्वारा जाना नहीं जाता है तब उस परब्रह्म को उपनिषत्—प्रतिपाद्य कहना सर्वथा असङ्गत प्रतीत होता है। "सर्वे वेदा यत्पदमामनन्ति" यह श्रुति स्वयं बतलाती है कि सब वेद परब्रह्म को प्रतिपादन करते हैं। भगवद्गीता में भगवान् श्रीकृष्णचन्द्रजी ने स्वयं कहा है कि सम्पूर्ण वेदों के द्वारा मैं जाना जाता हूँ। सम्पूर्ण वचनों की नित्य प्रतिष्ठा अर्थात् सम्बन्ध परब्रह्म में ही है। इन सब श्रुति और स्मृतियों के द्वारा साबित हो चुका कि परब्रह्म पुरुषोत्तम ज्ञान का विषय आवश्यक हैं। अन्यथा उपदेश शास्त्र निष्फल होजायेंगे। अतएव गायत्री मन्त्र द्वारा प्रतिपाद्य होने से सर्व वेदान्त का विषय उक्त लक्षण भगवान् पुरुषोत्तम हैं। यह वार्ता भगवान् सूत्रकार महर्षि श्रीवेदव्यासजी ने शास्त्रयोनित्वात् १। १। ४। इस सूत्र में कही है।

## वेदान्तरत्नमञ्जूषा

कैश्चिन्निर्विशेषं ब्रह्माभ्युपगम्यते। तत्तुच्छम्। सर्वप्रमाणाऽविषयत्वेन शशशृङ्गायमाणत्वात्। तथाहि—प्रमाकरणं प्रमाणं तत् त्रिविधम्। प्रत्यक्षाऽनुमानशब्दभेदात्। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। श्रीगुरुं चक्षुषा पश्यामि, हरिगाथां श्रोत्रेण शृणोमि, तुलसीसौरभं घ्राणेन जिघ्रामीत्यादिविषयसम्बद्धमिन्द्रियं तत्कारणत्वात् प्रत्यक्षप्रमाणम् १। व्याप्तिधीजन्यं ज्ञानमनुमितिः।

## कुञ्चिका

ननु वचसां स्वस्वार्थेषु प्रतिष्ठा प्रमाणसिद्धत्वात् कथमेकत्र श्रीभगवति ब्रह्मण्येव सर्वप्रतिष्ठाऽभ्युपगम्यते इत्याशङ्क्य समाधत्ते—शाश्वतीति। अयमर्थः पदानां स्वार्थे प्रमाणत्वेऽपि सर्वस्यापि पदार्थस्य तत्कार्यत्वात् तत्रैवाऽव्यभिचारिणी प्रतिष्ठा। अन्यत्र चार्थानां व्यभिचारवत्तया तद्वाचकतयाऽपि व्यभिचारग्रस्तत्वादिति भावः। तथाच श्रुतिः—"नामानि सर्वाणि यमाविशन्ति" इति। एतच्च देवताधिकरणे वेदान्तकौस्तुभे पूज्यपाद-श्रीश्रीनिवासाचार्यैर्निपुणं प्रपञ्चितम्॥ निगमयति—तस्मादिति। उक्तार्थे सूत्रकारस्य सम्मतिमाह। तथैवच सूत्रितमिति॥ शास्त्रं वेदलक्षणमेव योनिः कारणं ज्ञापकं प्रमाणं यस्मिंस्तच्छास्त्रयोनिस्तस्यभावस्तत्त्वम् तस्मादिति समासः। शास्त्रैकप्रमाणकत्वेसति तदन्यप्रमाणागोचरत्वादिति फलितार्थः। निर्विशेषं चिन्मात्रं ब्रह्म सत्यं तद्भिन्नं सर्वं मिथ्येतिवादिनां मतं दूषयितुमाह—कैश्चिदिति। यावन्ति प्रमाणानि सन्ति तावन्ति सविशेषवस्तुविषयाणि निर्विशेषे ब्रह्मणि प्रमाणमिदमस्तीति न शक्यते वक्तुं निर्विशेषचिन्मात्रब्रह्मवादिभिरित्याशयेन तन्मतं दूषयति—तत्तुच्छमिति।

भाषानुवाद

मायावादी परब्रह्म को निर्विशेष चिन्मात्र स्वीकार करते हैं। उन का यह कहना सर्वथा असङ्गत है, क्योंकि प्रमाण के द्वारा ही सब वस्तुओं की सिद्धि होती है जो वस्तु प्रमाण का विषय नहीं है वह वस्तु असत् हैं जैसे शशशृङ्ग है। जब ब्रह्म को आप किसी भी प्रमाण का विषय नहीं मानते हो तो वह ब्रह्म निर्विशेष है यह कहना तुच्छ है। यहाँ पर प्रमाण का प्रस्ताव हुआ, इससे प्रमाण का लक्षण और उसका विभाग करते हैं। यथार्थ ज्ञान का जो कारण अर्थात् साधन हो उसे प्रमाण कहते हैं। प्रमाण तीन विभागों में विभक्त हैं। एक प्रत्यक्ष दूसरा अनुमान, तीसरा शब्द है। इन्द्रिय का विषय के सम्बन्ध से जो उत्पन्न होता है वह प्रत्यक्ष कहलाता है। यह प्रत्यक्ष प्रमाण का लक्षण हैं। उदाहरण—मैं श्रीगुरुदेव को चक्षु से देखता हूँ। हरि कथा को कर्ण से सुनता हूँ। मैं घ्राण से श्री तुलसीजी के गन्ध को ग्रहण करता हूँ। विषय के साथ सम्बद्ध इन्द्रियों का नाम प्रत्यक्ष प्रमाण है क्योंकि इन्द्रिय प्रमाण के कारण हैं। व्याप्ति ज्ञान से जो ज्ञान उत्पन्न होता है वह अनुमिति ज्ञान कहलाता हैं।

वेदान्तरत्नमञ्जूषा

**यथा—पर्वतोवह्निमान् धूमवत्त्वात्। यो यो धूमवान् स स वह्निमान्। यथा महानसम्। इन्द्रियमनोबुद्ध्यादीनि आत्मा न भवन्ति, करणत्वात् दण्डादिवदिति तत्करणमनुमानम् २। आप्तप्रयुक्तं वाक्यं शब्दः। भ्रमादि-हेतुबुद्धिमान्द्यादिचतुष्टयाऽप्रामाण्यकारणशून्यत्वेसति यथार्थवक्तृत्वमाप्तत्वम् तच्च तारतम्यादिभेदात् त्रिविधम्। तत्राप्ततमो वेदस्तद्वाक्यं प्रमाणतमम्। आप्तमूल-कत्वेनान्यनिरपेक्षत्वाच्छ्रुत्यर्थस्मर्तारो मन्वादय आप्ततराः। तेषां वाक्य प्रमाणतरम्।**

कुञ्चिका

प्रमाणप्रस्तावात् प्रमाणलक्षणप्रदर्शनपुरस्सरं प्रमाणं विभजते। तथाहीति। प्रत्यक्षं लक्षयति—इन्द्रियार्थेति। इन्द्रियस्य चक्षुरादेरर्थेन घटादिविषयेण सह सन्निकर्षः संयोगस्तेन जन्यमित्यर्थः। तमुदाहरति—श्रीगुरुमिति। अनुमितिलक्षणे ज्ञातेऽनुमानलक्षणं सुज्ञेयं भवतीत्यतःप्रागनुमितिलक्षणमाह—व्याप्तिधीजन्यमिति। तमुदाहरति—यथेति। शब्दं लक्षयति—आप्तप्रयुक्तमिति। आप्तत्वस्य लक्षणमाह—भ्रमादीति। आदिना प्रमाद-विप्रलिप्साकरणापाटवादीनां परिग्रहः। तं विभजते। तच्चेति—आप्तत्वञ्चेत्यर्थः। त्रैविध्यं विवृणोति—तत्राप्ततम इति। तेषां = मन्वादीनाम्।

भाषानुवाद

नियत साहचर्य का नाम व्याप्ति है। जहाँ पर धूम रहता है वहाँ पर अग्नि भी

अवश्य रहती है इसे व्याप्ति कहते हैं। यथा पर्वत अग्निमान् है धूमवान् होने से जहाँ २ धूम रहताहै, वहाँ अग्नि रहती है जैसे पाकशाला है। यह भी अनुमान का उदाहरण है। कोई बादी इन्द्रिय और मन तथा बुद्धि को आत्मा मानते हैं, उन का खंडन अनुमान के द्वारा करते हैं। इन्द्रिय और मन बुद्धि ये आत्म शब्द वाच्य कदापि नहीं हो सकते हैं क्योंकि ये ज्ञानके करण हैं यथा दण्डादि जो वस्तु करण होता है वह कर्ता नहीं होसकता है अतएव इन्द्रिय आदि ज्ञान के करण है वह आत्मा नहीं हो सकते हैं। पूर्व में अनुमिति का लक्षण प्रदर्शन किया अब अनुमानका लक्षण दिखलाते हैं, तत्करणमिति। अनुमितिका जो करण अर्थात् साधन हैं लिङ्ग परामर्श को अनुमान कहते हैं। यहाँ पर्यन्त अनुमान का निरूपण किया अब शब्द प्रमाण का निरूपण करते हैं। आप्तप्रयुक्तं वाक्यमिति। आप्त के वचन को शब्द प्रमाण कहते हैं। भ्रम ज्ञान के कारण चार हैं कि बुद्धि की मन्दता और इन्द्रियों का अपाटव विप्रलिप्सा दुराग्रह। जिससे यथार्थ ज्ञान नहीं होता है वही बुद्धि की मन्दता है। इन्द्रियों की स्वविषय ग्रहण करने में सामर्थ्य न होना ही अपाटव कहलाता है। स्ववचन पालन की विशेष इच्छा विप्रलिप्सा है। अन्यथा कुतर्क पक्षपात का नाम दुराग्रह कहलाता है। उपदर्शित दूषण चतुष्टयों से रहित जो यथार्थ वक्ता हो उसे आप्त कहते हैं। वह आप्त तारतम्य के भेद से तीन तरह का है उन में आप्ततम वेद है उसका वाक्य आप्ततम है क्योंकि अपना मूल आप है वह अन्य की अपेक्षा नहीं करता है। श्रुति के अर्थ को स्मरण कर्ता मनु आदि आप्ततर हैं इन्हीं का वाक्य आप्ततर हैं।

### वेदान्तरत्नमञ्जूषा

श्रुतिमूलकत्वेन तत्सापेक्षत्वाच्छ्रुतिस्मृतिव्याख्यातार आप्तास्तद्वाक्यं प्रमाणम्। उभयमूलकत्वेनोभयसापेक्षत्वात्। तत्र प्रत्यक्षानुमानयोः प्रमाणत्वेऽपि क्वचिन्मायामूर्द्धादिदर्शने देवदत्तस्यैवायं मूर्द्धेति प्रत्यक्षे, वृष्ट्या तत्कालविनष्टेऽग्नौ चिरमधिकधूमोद्गारिणि गिरौ—पर्वतो वह्निमान् धूमवत्त्वादित्याद्यनुमाने च व्यभिचारदर्शनात् सापेक्षत्वेन निर्बलत्वम्। शब्दस्य तु निरपेक्षत्वात्प्रबलत्वमिति विवेकः ३। उपमानादीनां चात्रैवान्तर्भावान्न पार्थक्यम्। न तत्रप्रत्यक्षं प्रमाणपदवीमवतिष्ठते।

### कुञ्चिका

नहि प्राथम्यं तावत् प्रबलत्वे मानं येन प्रत्यक्षस्य प्राथम्यात प्राबल्यं स्यात्। अपित्वबाधितविषयकत्वं, तस्य तु व्यभिचारस्तत्र तत्र दृश्यते—तथाच मायामुण्डादिप्रत्यक्षे बाधितविषयकत्वं सुव्यक्तम्। सूर्यादिमण्डलपरिमाणविषयेचायथार्थत्वविषयकं शास्त्रसिद्धम्

इदं रजतमित्यादिप्रतीतौ चेति । तथाच प्रयोगः प्रत्यक्षं निर्बलं, व्यभिचारादिमत्वात् । सूर्यपरिमण्डलप्रत्यक्षवत् । बाधितविषयकत्वाच्च शुक्त्यादौ रजतादिप्रत्यक्षवत् । एवमनुमानमपि निर्बलं व्यभिचारादित्याह—तत्र प्रत्यक्षानुमानयोरिति । अनुमाने व्यभिचारं दर्शयति–वृष्टय ति । अयंभावः नास्माकं प्रत्यक्षादिप्रमाणान्तरानङ्गीकारे तात्पर्य्यमपितु तेषां शास्त्रमृते स्वातन्त्र्येण प्राबल्यनिषेधमात्र एव । तथाच भगवत्स्वरूपगुणादीनामचिन्त्यानन्तालौकिकतया प्रत्यक्षादिप्रमाणविषयानर्हत्वात् तत्प्रतिपादने तु श्रुतेरेव सामर्थ्यात्तस्यैव प्राबल्यम् तन्मूलस्मृत्यादेश्चानुमानप्रत्यक्षादेश्चेति ।

भाषानुवाद

उन की मूल श्रुति है । श्रुति स्मृति के व्याख्याकार आप्त हैं, उनका वाक्य इस लिये प्रमाण माना जाता है, क्योंकि वह श्रुति और स्मृति मूलक हैं । तीनों में प्रत्यक्ष और अनुमान ये दोनों प्रमाण हैं ,परन्तु शब्द की अपेक्षा करने से स्वतन्त्र प्रमाण नहीं हैं । क्योंकि प्रत्यक्ष प्रमाण का माया-मस्तक में व्यभिचार हैं, मायामुण्ड का प्रत्यक्ष होता है किन्तु वह प्रमात्मक ज्ञान नहीं हैं । वृष्टि के द्वारा जहां पर अग्नि का नाश हो चुका वहाँ पर अग्नि के बिना चिरकाल तक धूम उठता रहता है । इससे अनुमान में भी व्यभिचार है । ये दोनों प्रमाण शब्दसापेक्ष हैं । शब्द स्वतः प्रमाण हैं, अतएव निरपेक्ष हैं । शब्द दूसरे प्रमाण की अपेक्षा नहीं करता है । उपमानादिप्रमाणों का शब्द में ही अन्तर्भाव है । क्योंकि शब्द की अपेक्षा से उन में वैलक्षण्य प्रतीत नहीं होता है ।

वेदान्तरत्नमञ्जूषा

तस्यातीन्द्रियत्वाभ्युपगमात् । नाऽप्यनुमानम् लिङ्गशून्यत्वात् । "नेन्द्रियाणि, नानुमानमिति" श्रुतेः । नाप्यागमः । सर्वधर्मशून्यतया शब्दवृत्त्यविषयत्वात् । तथाहि—शब्दवृत्तिर्द्विधा, मुख्याऽमुख्यभेदात् । आद्या शक्तिरूपा । साच अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छासंकेत इति तार्किकैरभिधीयते । अर्थप्रतीतिजननसामर्थ्यलक्षणः स्वाभाविकसंबन्ध इतिमीमांसका आहुः । चक्षुरादिवृत्तिविषयप्रकाशनयोग्यत्ववच्छब्दस्य तत्तदर्थप्रकाशनयोग्यतालक्षणसंबन्ध इति शाब्दिकाः ।

कुञ्चिका

तत्रादौ प्रत्यक्षप्रमाणकं ब्रह्मेति केषाञ्चित् पक्षौ निराक्रियेते—न तत्र प्रत्यक्षेति । उक्तप्रतिज्ञायां हेतुमाह—तस्येति ! ब्रह्मण इत्यर्थः । इन्द्रियार्थसन्निकर्षजन्यज्ञानस्य प्रत्यक्षत्वमितिनिर्विवादस्तथाच तस्येन्द्रियार्थत्व-भावेन तत्सन्निकर्षानर्हस्य वस्तुनः सुतरां तज्जन्यत्वाभाव इति । तथाच प्रयोगः । न प्रत्यक्षप्रमाणवेद्यं ब्रह्म । अतीन्द्रियत्वात् । परमाणुवा-

दिवत्। व्यतिरेकेऽपि न प्रत्यक्षविषयं ब्रह्म जात्यादिलौकिकानेकविशेषणवत्त्वाभावात्। यन्नैवं तन्नैवम् मनुष्यादिवत्। ननु यदि ब्रह्मणि इन्द्रियसन्निकर्षानर्हत्वमभ्युपेयते तर्हि तस्येन्द्रियेष्वव्यापकत्वमभ्युपेयं स्यात। तथासति परिच्छिन्नत्वं दुर्वारणीयम्। व्यापकत्वे चेन्द्रियेषु तस्य सत्वेन कथं सन्निकर्षाभाव इति चेन्न। तस्य विभुत्वादिन्द्रियेषु वहिरन्तः-सत्वेऽपि तेषां तत्प्रकाश्यतया तत्प्रकाशनशक्तिमत्वाभावात रूपगन्धप्रकाशने रसनश्रवण-वत्। सूर्य्यादिप्रकाशने खद्योतादिवच्च। उक्तप्रयोगे दृष्टान्तीकृतानां परमाण्वादीनां प्रत्यक्षा-नर्हत्वेऽप्यनुमानगम्यत्वात्। तथा ब्रह्मणोऽप्यतीन्द्रियत्वाविशेषादनुमानगोचरत्वमस्त्वि-तिशङ्कां वारयन्नाह। नाप्यनुमानमिति। उक्तार्थं श्रुतिमानेन समर्थयति। नेन्द्रियाणीति।

## भाषानुवाद

निर्विशेष ब्रह्म प्रत्यक्ष प्रमाण से नहीं जाना जाता है। क्योंकि निर्विशेष ब्रह्म अतीन्द्रिय हैं। अनुमान प्रमाण द्वारा भी निर्विशेष ब्रह्म का ज्ञान नहीं होता है क्योंकि ब्रह्म लिङ्ग शून्य है। "नेन्द्रियाणि नानुमानम्" इस श्रुति से सावित होता है कि ब्रह्म इन्द्रिय रूप प्रत्यक्ष प्रमाण और अनुमान प्रमाण का विषय नहीं हैं। और निर्विशेष ब्रह्म शब्द प्रमाण का भी विषय नहीं है क्योंकि सर्व धर्म शून्य वस्तु शब्द की वृत्ति का विषय नहीं हो सकता है। शब्द की वृत्ति दो तरह की है। एक मुख्या दूसरी अमुख्या है। शब्द की मुख्या वृत्ति शक्ति है। तार्किक मतानुयायी ईश्वर की इच्छा को शक्ति कहते हैं। शक्ति का आकार इस प्रकार है। अस्माच्छब्दादयमर्थोवोद्धव्य इति। इस शब्द से यह अर्थ जानना चाहिए जैसे घट शब्द से कम्बुग्रीवादिमान् अर्थ का बोध होता है। अर्थ की प्रतीति कराने की सामर्थ्य स्वाभाविक सम्बन्ध शक्ति है यह लक्षण मीमांसक कहते हैं। जिस प्रकार इन्द्रियों में अपने २ विषय प्रकाशन का सामर्थ्य है वैसे ही शब्द में अर्थ प्रकाशन की योग्यता लक्षण सम्बन्ध शक्ति है। इस प्रकार वैयाकरण कहते हैं।

## वेदान्तरत्नमञ्जूषा

अघटघटनापटीयसी ब्रह्माश्रितस्वाभाविकी, शक्तिमच्छब्दाश्रिता तदर्थ-प्रकाशनार्हताऽभिन्नाचेति ह्यौपनिषदाः। सर्वथाऽपि, शब्दाश्रिता तदर्थप्रकाशन-योग्यतेति सामान्यं सर्वसाधारणलक्षणमिति सिद्धम्। सा त्रिधा रूढिर्योगो योग-रूढिश्चेति। तत्र समुदायशक्तिः रूढिः। यथा हरिः, नारद इत्यादिः। रूढो द्विविधः, पर्यायोऽनेकार्थश्च। तत्र पर्यायो हस्तकरादयः। अनेकार्थो हरिः सैन्धवादयः। अवयवशक्तिर्योगः। माधवो रमाकान्तः शौरिः शास्ता वासुदेवः। उभयप्रवृत्तिहेतुकी तृतीया। यथा सोमः, पङ्कजः १।

### कुञ्चिका

निर्विशेषचिन्मात्रस्य ब्रह्मणो नागमेन प्रतिपत्तिर्भवितुमर्हति जातिगुणक्रियादि-प्रवृत्तिनिमित्तकवस्तु एवाभिधया बोधयितुं शक्यते ननु सर्वधर्मशून्यं वस्तुइत्याशयेनाह। नाप्यागमइति। वृत्तेर्द्वैविध्यञ्चाह तथाहीत्यादिना तार्किकाभिमतसङ्केतस्याकारं दर्शयति। अस्मादिति मीमांसकानां समयं ग्राहयति। अर्थप्रतीतिजननेति। शाब्दिकानां संकेतं दर्शयति। चक्षुरादिवृत्तिरिति औपनिषदानां मतमाह। अघटघटनेति। ननु सन्तु नाम परीक्षकाणां समयाः प्रकृते किमायातमित्यत आह। सर्वथापीति। सर्वेषु पक्षेषु संकेतांशे विवादेऽपि शब्दाश्रितशब्दार्थप्रकाशनयोग्यत्वलक्षणं न जहातीत्यर्थः। तां विभजते'सेति' तत्रतेषु। उदाहरति। यथेति। रूढिं विभजते। रूढ इति। उदाहरति। तत्रेति हरिशब्दस्येन्द्रत्वादि-नानाधर्मावछिन्ने शक्तिः। सैन्धवपदेन लवणाश्वौ प्रत्याय्येत इत्यर्थः।

### भाषानुवाद

अघट घटना में चतुर ब्रह्म शक्ति के समान शब्द में अर्थ प्रकाशन की योग्यता शक्ति हैं यह वैदिक सिद्धान्त हैं। सर्वथा अर्थ प्रकाशन की योग्यता शब्द की शक्ति है यह साधारण लक्षण हैं। शब्द का वृत्ति तीन विभागों में विभक्त हैं। एक रूढी दूसरी योगिक तीसरी योग रूढी हैं समुदाय शक्ति का नाम रूढि हैं। यथा हरि और नारद शाब्द रूढी है रुढी के दो भेद हैं पर्याय रूप और अनेकार्थ है। हस्त कर शब्द पर्य्याय कहलाते हैं हरि सैन्धव आदि शब्द अनेकार्थक हैं हरि शब्द के विष्णु और इन्द्र कपि आदिक अर्थ हैं। अवयव शक्ति का नाम योग हैं। यथा माधव रमाकान्त शौरि शास्त्र वासुदेव इत्यादि शब्द योगिक है। अर्थात् मा लक्ष्मी उसके धवपतिः भगवान है रमा लक्ष्मी उसके कान्त विष्णु है शूरवंशोद्भव का नाम शोरि हैं। समुदाय शक्ति और अवयव शक्ति इन दोनों के द्वारा जो अर्थ का बोधक है वह शब्द योग रूढ कहलाता है।

### वेदान्तरत्नमञ्जूषा

द्वितीयापि द्विविधा, लक्षणा गौणी च। तत्र शक्यसंबन्धो लक्षणा। सा त्रिधा, जहत्स्वार्थाऽजहत्स्वार्था, जहदजहत्स्वार्था चेति। तत्राद्या यथा गङ्गायां घोषः। अत्र प्रवाहशक्तस्य गङ्गापदस्य शक्यसंबन्धे तीरे वृत्तिः। यथा वा मञ्चाः क्रोशन्तीत्यत्र मञ्चे शक्तस्य मञ्चशब्दस्य तत्संबन्धेषु पुरुषेषु वृत्तिः। अजहत्स्वार्था च, यथा काकेभ्यो दधि रक्ष्यताम्। अत्र काकत्वेन काके शक्तस्यापि काकशब्दस्य दध्युपघातकत्वेन काकतदितरेषु वृत्तिः। यथा वा, शोणो धावतीत्यत्र।

### कुञ्चिका

यौगिकवृत्तेर्लक्षणप्रदर्शनपुरस्सरमुदाहरति ॥ अवयवशक्तिरिति । इन्दिरालोकमाता मा" इति कोशात् माशब्देन लक्ष्मीरुच्यते तस्या धवःपतिरित्यर्थः, यथेति । योगरूढिं लक्षयति । उभयेति । तमुदाहरति । यथेति सोमपदेनावयवशक्त्यानिष्पीडनकर्मत्वं समुदायशक्त्या चसोमलता बोध्यते । तथाच निष्पीडनकर्माभिन्नसोमलतेतिबोधः पङ्कजशब्देनावयवशक्त्या पङ्कजनिकर्तृत्वं समुदायशक्त्या च पद्मत्वं बोध्यते ।

### भाषानुवाद

यथा सोम शब्द रूढ़ी द्वारा चन्द्रमा को कहता है । और योग से शिव का वाचक हैं । उमा पार्वती के सहित जो हो वह सोम कहलाता है । अमुख्या शब्द की वृत्ति के दो भेद हैं । एक लक्षणा दूसरी गौणी हैं । शक्यार्थ का जो सम्बन्ध है वह लक्षणा कहलाती हैं । वह तीन विभागों में विभक्त हैं एक जहत्स्वार्था द्वितीय अजहत्स्वार्था तृतीय जहत् अजहत्स्वार्था है । जहत्स्वार्था उसे कहते हैं कि जो शब्द अपने अर्थ को त्याग करके दूसरे अर्थ को कहता है यथा गंगा में घोष है । अर्थात् ग्राम है । गंगा शब्द का अर्थ भागीरथचक्रखातावच्छिन्नप्रवाह हैं । उसका परित्याग कर गंगा शब्द गंगा सम्बन्धि तीर रूप अर्थ को लक्षणावृत्ति द्वारा कहता है । और मञ्च पुकारता है यहाँ पर मञ्च शब्द अपने अर्थ को छोड़ कर मञ्च सम्बन्धि पुरुष को बतलाता है । यह दोनों उदाहरण जहत्स्वार्था के हैं । काकों से दधि की रक्षा करना यहाँ पर काक शब्द अपने अर्थ का परित्याग नहीं करता हुआ दधि के विनाशक मार्जारादि अर्थ को कहता है । यह अजहत्स्वार्था का उदाहरण है ।

### वेदान्तरत्नमञ्जूषा

शोणगुणगमनरूपस्य वाक्यार्थस्य विरुद्धत्वाद् तदपरित्यागेन तद्वति तदधिष्ठानरूपे गवादौ वृत्तिः । शक्यैकदेशपरित्यागे सति शक्यैकदेशवृत्तिस्तृतीया । यथा सोऽयं देवदत्त इत्यत्र तद्देशकालवैशिष्टयैतद्देशकालवैशिष्टययोर्युगपदन्वयानुपपत्त्या देशकालादिविशेषणत्यागेन देवदत्तपिण्डमात्रमेव लक्षणया बोध्यते । शक्यस्थ लक्ष्यमाणगुणसंबन्धो गौणी । यथा सिंहो देवदत्तः । अत्र सिंहवृत्तिक्रौर्यादिगुणानां लक्षणया माणवके देवदत्ते वृत्तिः । सैव लक्षितलक्षणेत्यप्यभिधीयते २ । तत्र न तावन्निर्विशेषवस्तुनि रूढ़िवृत्तेः संभवः ।

### कुञ्चिका

तथाच पङ्कजनिकर्त्रभिन्नं पद्ममितिबोधः ॥ अमुख्याशब्दवृत्तेर्द्वैविध्यमाह । द्वितीयापीति । अमुख्यावृतिरित्यर्थः । जहत्स्वार्थेति जहति पदानि स्वमर्थं यस्यां सा जहत्स्वार्था

अजहत्स्वार्थेति । न जहति पदानि स्वमर्थं यस्यां सा अजहत्स्वार्था इत्यर्थः । आद्यामुदाहरति । यथेति । अजहत्स्वार्थामुदाहरति । अजहत्स्वार्थेति । "तत्परित्यागेन" शोणगुणपरित्यागेन । तद्वतीति—शोणगुणवतीत्यर्थः । तृतीयेति—जहदजहत्स्वार्थेत्यर्थः । तामुदाहरति । सोयमिति ॥ गौणीं लक्षयति । शक्यस्थेति ॥ नैतासां कतमस्या अपि वृत्तेर्ब्रह्मणि प्रवृत्तिसम्भवः । तत्र नतावद्रूढिवृत्तेर्ब्रह्मणिप्रवृत्तिः सम्भवति तस्या जातिगुणस्वरूपादिभिर्निर्देशयोग्ये पदार्थे प्रवृत्तिसत्वात् निर्विशेषे ब्रह्मणि तत्प्रवृत्योपयिकजात्यादेरभावात् । तथाहि नतावद्गौरित्यादिवज्जात्या ब्रह्म निर्देष्टुं शक्यम् । एकत्वात् । तस्य जातिबाधकत्वात् एको देवः सर्वभूतेषु गूढः । एकमेवाद्वितीयं ब्रह्म इत्यादिश्रुतेः ।

### भाषानुवाद

शक्य के एक देश का परित्याग करता हुआ शब्द एक देश को कहता है वह जहत् अजहत्स्वार्था लक्षणा कहलाती हैं । यथा सोयं देवदत्त इति । जिस व्यक्ति को मैंने काशीजी में देखा था वही यह देवदत्त है । यहाँ पर तद्देश तत्काल का एतद्देश एतत्काल में अन्वय नहीं हो सकता है अतएव उभय विध देश और उभय विध काल का परित्याग करके केवल देवदत्त के पिंड मात्र का बोध देवदत्त पद से होता है । शक्य में वृत्ति लक्ष्यमाण गुण उन्हों के सम्बन्ध का नाम गौणी कहलाती हैं । जैसे देवदत्तसिंह हैं । सिंह में रहने वाले जो गुण क्रूरतादिक हैं उन्हों के योग्य से देवदत्त में लक्षणा से सिंह शब्द का प्रयोग किया है । इसको ही लक्षित लक्षणा भी कहते हैं ।

### वेदान्तरत्नमञ्जूषा

जातिगुणक्रियाद्यभावात् । नापि योगवृत्तिः संभवति । निर्विशेषस्य धातुप्रत्ययार्थत्वाभावात् । नापि लक्षणा, सम्बन्धशून्यत्वात् । नापि गौणी । निर्गुणत्वाऽभ्युपगमात् । तस्मात् सर्वप्रमाणशून्यत्वादनादरणीयोयंपक्षः श्रेयोर्थिभिः । अतःसर्वज्ञसर्वशक्तिसर्ववेदान्तवेद्यविश्वजन्मादिकारणं परं ब्रह्मश्रीपुरुषोत्तम एव,सचाऽभिन्ननिमित्तोपादानात्मकः । नचाभिन्ननिमित्तोपादनरूपस्य क्वाप्यदृष्टचरत्वाद् कथं तत्सिद्धिरिति वाच्यम् । घटेश्वरसंयोगादौ जीवगतज्ञानादौ च कार्ये ईशजीवयोस्तथाभूतकारणत्वदर्शनान्नाऽत्यन्ताऽप्रसिद्धिः ।

### कुञ्चिका

नापि शुक्लइत्यादिवत गुणवत्तया निर्देष्टुं शक्यं ब्रह्म निर्गुणत्वात् । केवलो निर्गुणश्चेति श्रुतेः । नापिडित्थइत्यादिवत्द्रव्यस्वरूपेण निर्देष्टुं शक्यं ब्रह्म । अव्यक्तत्वात् । नापि चलतीत्यादिक्रियानिर्देशेन तथात्वम् विभुत्वेन निष्क्रियत्वात् । "निष्कलं निष्क्रियं शान्तमित्यादिश्रुतेः तस्मान्न रूढेर्विषयत्वं ।

निर्विशेषस्य ब्रह्मण इत्याशयेनाह ( तत्र न तावदिति ) नापि योगस्य निर्विशेषे ब्रह्मणि प्रवृत्तिसम्भवः तस्य तत्प्रवृत्तिनिमित्तप्रकृतिप्रत्ययार्थत्वायोगात् । अतएव नयोग-रूढेः प्रवृतिरपि सङ्गच्छते" इत्यभिप्रेत्याह । नापि योगवृत्तिरिति । नहि लक्षणावृत्तिप्रवृत्ते-रवकाशः निर्विशेषे ब्रह्मणि ! शक्येन समं सम्बन्धाग्रहात्—इत्यत आह नापिलक्षणेति । नच लक्षणयैव लक्ष्यस्वरूपोपस्थितिः तस्याः स्मारकत्वात् । स्मरणस्य पूर्वानुभवजन्यत्व-नियमात् नापि गौणीवृत्तिः सर्वसादृश्यशून्यत्वात् ।

## भाषानुवाद

अत्यन्त अभेद वादियों के सिद्धान्त में सर्व विशेष से शून्य ब्रह्म है वह रूढ़ी वृत्ति का विषय नहीं हो सकता है क्योंकि जाति और गुण क्रियावान वस्तु रूढ़ी का विषय होता है । ब्रह्म जाति और गुण क्रिया प्रवृत्ति धर्मों से रहित है और ब्रह्म योग वृत्ति का विषय नहीं हो सकता है । क्योंकि निर्विशेष ब्रह्म में धातु और प्रत्यय का अर्थ कदापि उपपन्न नहीं हो सकता है । और निर्विशेष ब्रह्म में लक्षणावृत्ति की प्रवृत्ति भी नहीं हो सकती है क्योंकि निर्विशेष वस्तु में किसी पदार्थ का सम्बन्ध नहीं हो सकता है । और निर्गुण ब्रह्म में गौणी वृत्ति की भी प्रवृत्ति नहीं हो सकती हैं । इससे साबित हो चुका कि निर्गुण निर्विशेष ब्रह्म कोई भी प्रमाण का विषय नहीं हो सकता है अतएव श्रेय अर्थि पुरुषों को यह पक्ष नहीं मानना चाहिए । अत सर्वज्ञ और सर्व शक्ति वेदान्त वेद्य पर ब्रह्म श्रीपुरुषोत्तम भगवान् ही वेदान्त का विषय है वह जगत के उत्पत्ति स्थिति लय का अभिन्न निमित्तोपादनकारण हैं । अब यहाँ पर यह प्रश्न उपस्थित होता है अभिन्न निमित्त उपादान कारण की प्रसिद्धि कहीं भी दृष्टि गोचर नहीं होती है तब किस प्रकार ब्रह्म जगत का अभिन्न निमित्तोपादान कारण हो सकता है ।

## वेदान्तरत्नमञ्जूषा

तद्दृष्टान्तेनात्रापि तथात्वमभ्युपगम्यते । ब्रह्म, जगदभिन्ननिमित्तोपादानं भवितुमर्हति । तादृशशक्तिमत्त्वात् । जीवगतज्ञानादौ जीववत् । घटेश्वर-संयोगे ईश्वरवच्चेत्यनुमानमत्रानुसंधेयं, प्रकृतिश्चेति शास्त्रं च ।

ननु कीदृशमिदं कार्यम् । न तावत् संघातरूपम्, आरब्धं वा शक्यते वक्तुम्—अवैदिकत्वात् । नापि परिणामः आकाशकल्पस्य विभोर्वस्तुनः ।

## कुञ्चिका

"नसंदृशे तिष्ठति रूपमस्य"इतिश्रुतेः । इत्याह । नापि गौणीति । नाप्यन्यमता-भीष्टव्यञ्जनावृत्तिप्रवृत्तेस्तत्र प्रवेशः सम्भावनीयः । निःसम्बन्धे वस्तुनि तस्याः प्रसरणा-

भावात् । तस्मात् कतमस्या अपि वृत्तेस्तत्रप्रवेशाभावेन न प्रमाणगोचरतत्वं निर्विशेषस्य ब्रह्मण इतिनिगमयति । तस्मादिति । घटकुण्डलादेरुपादानकारणत्वं मृत्सुवर्णादौ प्रसिद्धं निमित्तकारणत्वञ्च दण्डादावभिन्ननिमित्तोपादानत्वन्तु न कुत्रापि दृष्टचरं श्रुतमिति कथं ब्रह्मणः प्रपञ्चं प्रत्यभिन्ननिमित्तोपादानत्वं भवद्भिरुक्तं संगच्छत इत्याशङ्क्य परिहरति— नचेति ॥ घटेश्वरसंयोगात्मककार्यं प्रतीश्वरस्योपादानकारणत्वं निमित्तकारणत्वञ्चप्रसिद्धं तार्किकाणां नये कार्यमात्रं प्रतीश्वरस्यनिमित्तकारणत्वात् जीववृत्तिज्ञानं प्रति प्रत्यगात्मनः समवायिकारणत्वं जीवगतज्ञानादाविति । स्वज्ञानचिकीर्षा प्रयत्नादिकं शास्त्राभ्यासादिभिः स्वयमेव करोति जीवस्तेन तत्र कर्तृत्वेन निमित्तकारणं भवति तथापि च स्वयमेव समवायिकारणं भवति स्वज्ञानादीन् प्रति तद्वत्प्रकृतेऽपीत्याह—घटेश्वरसंयोगादाविति । तथाच । दृष्टान्ते सिद्धेऽनुमानेन ब्रह्मणि जगदभिन्ननिमित्तोपादानत्वं समर्थयति । ब्रह्म इति । उक्तार्थे सूत्रकारस्यसम्मतिमाह—प्रकृतिश्चेति । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । १ । ४२३ ॥ चकारोनिमित्तसमुच्चयार्थः । प्रकृतिरूपादानं निमित्तञ्चब्रह्मैव । कुतः प्रतिज्ञेति । प्रतिज्ञा च दृष्टान्तश्चतयोरनुपरोधात् सामञ्जस्यात् । प्रतिज्ञाच "उततमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात"मित्युपादानकारणविज्ञानेन सर्वकार्यस्य विज्ञानं भवति कार्यस्य तदनतिरिक्तत्वात् । दृष्टान्तेऽपि "यथा सोम्य एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादित्यादिरूपः । उपादानकारणविज्ञानेन सर्वकार्यविज्ञानं भवति ब्रह्मणो निमित्तमात्रे तु कुलालादिज्ञानेन मृण्मयाज्ञानवत्तज्ज्ञानेन सर्वकार्यविज्ञानं न स्यादिवोततयाबाध एव स्यादिति सूत्रार्थः" स्यादेतद्ब्रह्मणोजगदभिन्ननिमित्तोपादानत्वं कीदृक्कार्योत्पत्तिभवतामभिप्रेतमितिशङ्कते । नन्विति । कि प्रकारिकेति भावः । प्रकारविकल्पांश्च वादिबाहुल्येनाह—तत्र प्रथमं बौद्धविकल्पमाशङ्क्य परिहरति नतावदिति । सङ्घातरूपमिति । सङ्घातश्च यदृच्छया भूतसंहननपूर्वककार्योत्पादकत्वं ताम्बूलचूर्णादिसमूहस्येव क्षणिककार्योत्पादकत्वमिति । निरासे हेतुमाह—अवैदिकत्वादिति ।

## भाषानुवाद

उत्तर ब्रह्म जगत का अभिन्न निमित उपादान कारण हैं क्योंकि परब्रह्म में विचित्र शक्ति हैं। यथा जीवगतज्ञानादिकार्य में जीव अभिन्ननिमित्तउपादान कारण हैं। क्योंकि जीव शास्त्र के अभ्यास द्वारा अपनी ज्ञान शक्ति बढ़ाने के वास्ते स्वयं चेष्टा करता है अतएव जीव ही ज्ञान का कर्ता है इससे जीव स्वगत ज्ञान और चिकीर्षा प्रयत्न के प्रति निमित्त कारण है। और अपने ज्ञान के प्रति जीव समवायि कारण भी हैं इस से सिद्ध हो चुका कि जीव अपने ज्ञान का अभिन्न निमित्तोपादान कारण है। और घट का

ईश्वर के संग संयोग है क्योंकि ईश्वर विभु है ( सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् ) यह लक्षण विभुत्व का तार्किक मानते हैं। घट ईश्वर के संयोग में ईश्वर उपादान कारण ( समवायि कारण ) हैं। क्योंकि वह संयोग समवाय सम्बन्ध से ईश्वर में समवेत हैं। और कार्य मात्र के प्रति ईश्वर निमित्त कारण हैं इससे घट ईश्वर संयोग में ईश्वर निमित्त कारण भी है अतएव उक्त संयोग में ईश्वर अभिन्न निमित्तोपादान कारण हैं। यह तार्किकों का सिद्धान्त है। वैसे ही परब्रह्म जगत का अभिन्न निमित्त उपादान कारण हैं उक्त अनुमान से साबित हो चुका कि परब्रह्म जगत् का अभिन्न निमित्त उपादान कारण हैं। प्रकृतिश्चेति। इस श्रीव्यास सूत्र से भी परब्रह्म विश्व का निमित्त और उपादान कारण है। संघातवाद नास्तिकों का है। अविद्या से राग द्वेष और मोह रूप संस्कार है उससे गर्भस्थ जीव को आद्य विज्ञान उत्पन्न होता है। उससे पृथिव्यादि चतुष्टय नाम होते हैं। उससे रूपं। षडायतन। नाम रूप से मिश्रित इन्द्रियों का नाम षट् आयतन हैं। नाम और रूप इन्द्रिय का परस्पर संयोग का नाम स्पर्श हैं। सुखादि रूप वेदना कहलाता है। उससे विषय तृष्णा उपादान आदि अर्थ सौगत के मत में प्रसिद्ध हैं। इन्हों का परस्पर में कार्य कारण भाव है अतएव अर्थ से संघात की सिद्धि होती है। धान्य राशि में संघातवाद प्रसिद्ध है।

नैयायिक और वैशेषिक आरम्भवाद को स्वीकार करते हैं। जैसे तन्तुओं से पट का आरम्भ होता है, शङ्कराचार्य मतानुयायी विवर्त्तवाद मानते हैं। यथा शुक्ति में रजत की भ्रान्ति विवर्तवाद है। इस अभिप्राय से वादी की शङ्का है। परब्रह्म से जगत की उत्पत्ति होती है। अतएव ब्रह्म कारण हैं जगत कार्य हैं यह वार्ता सत्य है परन्तु वह कार्य किस तरह का है संघात रूप है १ अथवा आरम्भ रूप है १। अथवा परिणाम रूप हैं १। अथवा विवर्त्तरूप हैं।

### वेदान्तरत्नमञ्जूषा

परिणामासंभवात्। तथाच प्रयोगः—ब्रह्म परिणामानर्हं भवितुमर्हति। विभुपरिमाणकत्वात्। निरवयवत्वाच्च। आकाशवत्। तस्माद् ब्रह्मविवर्तमेवेदं जगदिति चेन्न। निरवयवस्यापि विभोः परिणमनसामर्थ्ययोगात् परिणामासंभवात्। ननु सावयवस्यैव क्षीरादेः परिणामदर्शनान्न निरवयवस्येति तादवस्थ्यमेवास्य दोषस्येति चेन्न। क्षीरपरमाण्वादौ तद्व्यभिचारात्। तथाहि। नहि सावयवत्वं वस्तुपरिणामे प्रयोजकम्, अपितु वस्तुगता तादृशी शक्तिरेव। अन्यथा

### कुञ्चिका

तदभ्युपगमे श्रौतसिद्धान्तस्य तिलाञ्जलिसम्प्रदानत्वापत्तेरित्यभिप्रायः। नापि

परिणाम इति । सामान्योक्त्योभयपक्षविषयकाचोदनेति ज्ञेयम् । परिणामो द्विविधः प्रकृतिस्वरूपपरिणामः शक्तिविक्षेपलक्षणो ब्रह्मपरिणामश्चेति आद्यः पक्षः साङ्ख्यानाम् पक्षः द्वितीयोह्यौपनिषदानां सिद्धान्तश्चेति ज्ञातव्य इति भावः । तदेव हेतुमुखेन द्रढयति । आकाशकल्पस्येति ॥ आकाशतुल्यस्य निरवयवस्येत्यर्थः । विभोरिति विभुपरिमाणकस्येत्यर्थः । अनुमानमुखेनोक्तार्थं द्रढयति । तथाचेति । परिशेषादगत्या विवर्त्तवाद एव समाश्रयणीय इतिमायावादिचोदनाभिप्राय इत्याह—तस्मादिति । सङ्घातपरिणामवादस्यासम्भवादित्यर्थः । ब्रह्मविवर्त्तमेवेदमिति । यथाक्षीरं परिणत्यर्हस्वाभाविकशक्तिमत्वादेव दध्यात्मना परिणमति तद्वद्ब्रह्मापि सर्वाघटनघटनार्हशक्तिमत्वादेव जगद्रूपेण परिणमतीति कथयितुं शक्यत इत्यभिप्रायेण परिहरति । नेति । निरवयवस्येति । जगदाकारावस्थाभजनशीलं ब्रह्म भवितुमर्हति तादृश्यचिन्त्यशक्तिमत्वात् । दधिभावे क्षीरवदित्यनुमानमनेन सूचितं भवति । उक्तहेतौ सत्प्रतिपक्षात्मकहेत्वाभासत्वं दृष्टान्ते विकलताञ्चारोप्य भूय उत्तिष्ठते । नन्वित्यादि । दृष्टान्तविकलत्वं निरुच्य सत्प्रतिपक्षतां द्योतयितुं साध्याभावसाधकं हेत्वन्तरं पठति । निरवयवस्येति तथा चात्रप्रयोगः । ब्रह्म परिणामाभावशीलं निरवयवत्वात् आकाशवदिति । परिणामाभावशीलत्वाभाववति क्षीरपरमाण्वादौ निरवयवत्वहेतोस्सत्वाद्व्यभिचारित्वमित्याशयेनेक्तांशंकामपाकरोति । नेति । सावयवत्वस्य तवाभिप्रेतस्य हेतोः परिणामे कारणत्वं नास्तीतिव्युत्पादयति । तथाहीत्यादिना । यदि सावयवत्वं परिणामकारणत्वं स्यात्तदा जलादीनामपि दधिभावेन परिणामः स्यादतोऽप्रयोजक सावयवत्वमिति भावः । आरोपितप्रमाणं बाधयित्वा पूर्वोक्तहेतुना सिद्धान्तयति । अपितुवस्तुगतेति "तादृशी" परिणमनरूपा । विपक्षे बाधकतर्कमुपन्यस्यति अन्यथेति ।

## भाषानुवाद

संघात पक्ष नहीं उपपन्न हो सकता है क्योंकि नास्तिक मत अवलम्बी इस पक्ष को मानते हैं। आरम्भवाद तार्किकों का मत है वह पक्ष शास्त्र प्रमाण शून्य होने से सर्वथा हेय है। अर्थात् त्याज्य हैं। परिणाम पक्ष भी युक्ति द्वारा सिद्ध नहीं हो सकता है क्योंकि यथा विभु (सर्वत्र बर्तमान) अकाश का परिणाम नहीं हो सकता है वैसे ही विभु ब्रह्म का परिणाम जगत नहीं हो सकता है। ब्रह्म में परिणाम की योग्यता नहीं है क्योंकि ब्रह्म का विभु परिमाण हैं और ब्रह्म निरवयव है जैसे आकाश है इस अनुमान से सिद्ध हो चुका कि जगत कार्य ब्रह्म का परिणाम नहीं हैं। अतएव विवर्तवाद ही मानना आवश्यक है। इसका समाधान इस प्रकार हैं कि ब्रह्म में अनन्त शक्ति हैं अतएव निरवयव विभु ब्रह्म में परिणाम शक्ति सामर्थ्य सेपरिणाम होता है। प्रश्न—सावयव वस्तुओं

का ही परिणाम दृष्टि गोचर होता है जैसे सावयव क्षीर का परिणाम दधि होता है। निरवयव वस्तु का परिणाम नहीं हो सकता है। अतएव ब्रह्म का परिणाम जगत् नहीं हो सकता है। उत्तर क्षीर का परमाणु निरवय है उसका परिणाम होता है इससे सावयव वस्तु का ही परिणाम होता है इस नियम का व्यभिचार है। वस्तु के परिणाम में सावयवत्व प्रयोजक नहीं है किन्तु वस्तुगत शक्ति को ही प्रयोजक कहना पड़ेगा।

## वेदान्तरत्नमञ्जूषा

**जलस्यापि सावयवत्वाविशेषेण दधिभावपरिणामापत्तेर्दुर्वारत्वात्। क्षीरावयवानां निरवयवत्वाच्च। अयं भावः। द्रव्यपरिणामेऽवयविगता शक्तिः कारणम्? अवयवनिष्ठा वा? नाद्यः। द्रवद्रव्येव्यतिरिक्तस्यावयवित्वं, त्वयाऽनभ्युपगमात्। द्वितीये तु क्षीरावयवाः सावयवा, निरवयवा वा इति विवेचनीयम्। न तावत् सावयवाः। अनवस्थानात्। क्षीराब्धेः कुण्डपरिमाणापत्तेश्च। अवयवानामानन्त्यात्। अतो निरवयवा एवेति अकामेन त्वयाऽभ्युपगन्तव्याः। एवञ्च निरवयवस्य परिणामाभावत्वनियमभङ्गात्।**

## कुञ्चिका

परिणामं प्रति वस्तुगतपरिणमनशक्तेरप्रयोजकत्वेत्यर्थः। उक्तार्थे पुनर्विकल्पयितुमुद्युक्तं दृष्ट्वा तच्छान्तये स्वयमेव तच्छङ्कासमाधानाभ्यां निर्णेतुमारभते अयं भाव इति। अवयविनः शक्तिरवयवानां वेतिस्पष्टो विकल्पः तत्र शक्तिपदेन तादृशभावायतनशक्तिर्विवक्षितेति ज्ञेयम्।

तत्र पूर्वविकल्पं वादिमुखेनैव परिहरति। नाद्य इति। त्वया=मायावादिना, द्वितीयपक्षं निरसितुं वितर्कयति। द्वितीये त्विति॥ अवयवान्तराणामवयवान्तरकल्पनेऽनवस्थाप्रसज्येतेत्याद्यकल्पं निरस्यति—नतावदिति। अनन्ताप्रमाणिकपदार्थकल्पना अनवस्था। अवयवस्याप्यवयवान्तरमवयवान्तरस्याप्यवयवान्तरं तस्याप्यवयवान्तरमित्येवं प्रकारेणानवस्थेत्यर्थः। तत्रैव हेत्वन्तरमाह—क्षीराब्धेरिति। क्षीराब्धिः कुण्डपरिमाणावच्छिन्नमुपलभ्येत, तत्रापि हेतुः। अवयवानामिति। तस्मात्सिद्धमवयवानां निरवयवत्वमित्याह। अत इति।

## भाषानुवाद

अन्यथा जल भी सावयव है उसका परिणाम दधि होना चाहिए। यहाँ पर यह आशय है कि द्रव्य के परिणाम में अवयवी को शक्ति कारण है। अथवा द्रव्य के अवयव की शक्ति कारण है। प्रथम पक्ष उचित नहीं हो सकता है। क्योंकि तुम्हारे सिद्धान्त में जलादि द्रवद्रव्य में भिन्न अवयवी अङ्गीकार नहीं है। अवयव की शक्ति को

भी कारण नहीं कह सकते हैं इसमें यह शंका होती है कि क्षीर के अवयव सावयव हैं या निरवयव हैं। अनवस्था दोष से क्षीर के अवयवों को सावयव नहीं कह सकते हैं क्योंकि क्षीर सागर के समान तालाब के जल का परिमाण होना चाहिये जैसे—क्षीर सागर को अवयव की धारा का अन्त नहीं है वैसे ही तालाब के जल की अवयवों की धारा भी अनन्त हैं। इससे क्षीर के अवयवों को निरवयव ही मानना पड़ेगा फिर निरवयव का परिणाम नहीं हो सकता यह तुम्हारा कहना सर्वथा असङ्गत हैं।

## वेदान्तरत्नमञ्जूषा

स्वरूपासिद्धो हेतुः सावयवत्वमिति। नापि विभोः परिणामाऽभावनियमः। आकाशस्यापि वाय्वात्मना परिणामो दृश्यते। "आकाशाद्वायुरिति" श्रुतेः। अनेन द्वितीयस्य हेतोरपि सत्प्रतिपक्षत्वं दृष्टान्तविकलत्वं चोक्तं भवति। तथाच प्रयोगः—ब्रह्म परिणामयोग्यं विभुत्वात्। आकाशादिति। तत् सिद्धं निरवयवस्य विभोर्ब्रह्मणः परिणामात्मकमिदं कार्यमिति तादृशक्तिमत्त्वादेवेति। श्रूयते च, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेत्यादि।

## कुञ्चिका

फलितार्थमाह—एवञ्चेति। क्षीरावयवानां सावयवत्वाभावे सिद्ध इत्यर्थः। क्षीरादिर्दध्याकारपरिणमनशीलं सावयवत्वादिति प्रागुक्तानुमाने सावयवत्वहेतोः क्षीरादिपक्षेऽसत्वात्स्वरूपासिद्धत्वमित्याह। स्वरूपासिद्ध इति। यदुक्तं प्राग्विभुपरिमाणकस्य-ब्रह्मणः परिणामो न भवितुमर्हतीति। तद्दूषयति। नापीति। विभोरिति। विभुत्वं परिणामाभाववत्त्वव्याप्यमितिव्याप्तौ व्यभिचारं स्फोरयति। आकाशस्यापीति। उक्तार्थं श्रुति प्रमाणेन समर्थयति। आकाशाद्वायुरिति। अनेन = आकाशस्यापि वाय्वात्मना परिणामो दृश्यत इति ग्रन्थेन, द्वितीयस्य हेतोरिति। ब्रह्म परिणामानर्हं विभुपरिमाणकत्वादिति प्रयोगे विभुपरिमाणत्वहेतोरित्यर्थः। दार्ष्टान्ते उक्तन्यायमवतारयति। तत्सिद्धमिति। ब्रह्मणः सर्वशक्तिमत्तया जगद्रूपेण परिणमनशक्तिमत्त्वमपीत्याह। तादृशशक्तिमत्त्वादेवेति। ब्रह्मणस्तादृशशक्तिमत्वे प्रमाणं पठ्यते श्रूयते चेति।

## भाषानुवाद

क्षीर का दधि रूप से परिणाम होता है सावयवत्व होने से वादी ने यह अनुमान दिखलाया था इस अनुमान में सावयवत्व हेतुस्वरूपासिद्ध है क्योंकि क्षीर के अवयव निरवयव है, अतएव उसमें सावयवत्व हेतु नहीं रह सकता है। विभुवस्तु का परिणाम नहीं हो सकता है यह कथन भी सर्वथा असङ्गत है क्योंकि "आकाशाद्वायुः"

इस श्रुति से साबित होता है विभु आकाश वायु रूप से परिणत होता है। इससे यह भी सिद्ध होता है कि ब्रह्म परिणामानर्हम्। यह प्रागुपदर्शित अनुमान को दूसरे अनुमान द्वारा सत्प्रति पक्ष होता है। यथा ब्रह्म परिणाम के योग्य हैं विभु होने से जैसे आकाश विभु होकर भी परिणामी हैं। इससे साबित हो चुका कि निरवयव विभु ब्रह्म का परिणामात्मक कार्य यह जगत् है। क्योंकि जब परब्रह्म में अनन्त शक्ति हैं तब परिणाम शक्ति भी ब्रह्म में विद्यमान हैं। परास्य शक्ति र्विविधैव श्रूयते। इस श्रुति से सिद्ध होताहै कि परब्रह्म में स्वभाव सिद्ध अनन्त शक्ति है।

## वेदान्तरत्नमञ्जूषा

**स्मर्यतेऽपि, शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः। शतशो ब्रह्मणस्तासु सर्गाद्याभावशक्तयः। भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णतेति॥**

**ननु स्यादेतन्निरवयवस्यापि विभोस्तादृकशक्तियोगात्परिणामस्तथापि परिणामाभ्युपगमे विकारित्वमकामताऽप्यवश्यम्भावि। तच्च दूषितत्वादनिष्टम्। कृत्स्नप्रसक्तिर्निरवयवत्वशब्दव्याकोपोवेति न्यायात्। अत्रैवं विवेकः। ब्रह्मणः कार्य्यभावापत्तौ कृत्स्नस्य परिणामस्तदेकदेशस्य वा। आद्ये सर्वस्यापि।**

## कुञ्चिका

अस्य ब्रह्मणः शक्तिः परा स्वरूपविलक्षणा "विविधा" अनन्ताचिन्त्यप्रकारिका-श्रूयते चेत्यन्यप्रमाणनिपेक्षेत्यर्थः। स्वाभाविकीति। अनाद्यनन्तेति स्वरूपवन्नित्येत्यर्थः। स्वाभाविकीत्युक्त्या अनिर्वचनीयत्वमिथ्यात्वोपाधिकत्वादिशब्दप्रयोक्तॄणां मायावादिनां मतमपाकृतं भवति न केवलं शक्तेरेव तत्वं ज्ञानक्रियागुणानामपीत्याह—ज्ञानबलक्रिया-चेति ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रियाचेति चकारः सर्वेषामपि भगवतोगुणकर्मादीनामाकर्षणार्थः श्रुत्यर्थरूपां स्मृतिञ्च पठति। स्मर्य्यतेऽपीति। शक्तय इति सर्वभावानामिति। स्वसङ्कल्पविषयवस्तूनां सूक्ष्मतया सद्रूपाणाम् सर्गाद्याः, सर्गादिकारणमिति।

भावशक्तय इति॥ स्वाभाविकीतिश्रुतिगतपदस्यार्थः। शतश इति विविधाः पदार्थाः ब्रह्मण इत्यस्य पदस्यार्थः। अचिन्त्यज्ञानगोचराइति। अचिन्त्यस्यासङ्कुचितस्य मुक्तानां ज्ञानस्य विषया इति पराशब्दार्थः। तपतां श्रेष्ठेति। श्रोतुः कुतर्कनिष्ठातां निवारयति। स्वाभाविकत्वानाद्यनन्तत्वनित्यसहचारित्वादिषु दृष्टान्तः। "पावकस्य यथोष्णतेति। श्रुतौ जात्यभिप्रायेणैकवचनम्" स्मर्यते व्याख्यारूपत्वादेकत्वभ्रान्तिवारणार्थं वहुवचनमिति। एवं श्रुतिस्मृतिप्रतिपादितेऽप्यर्थे कुतर्कमारोप्यासद्वादैर्विविदमानः स्वचित्तास्थासद्विष्णुत्वं प्रकाशयितुमुत्तिष्ठते भूयः नन्विति। यदि ब्रह्मजगदाकारेण परिणमते स्वशक्ति-

महिम्ना तदा तस्य विकारित्वं प्रसज्येत तच्चानिष्टमिति शङ्कार्थः तच्चेति। विकारित्वञ्चेत्यर्थः। दूषणमेव सूत्रेणोद्घाटयति। कृत्स्नेति। सूत्रार्थं व्याचष्टे। अत्रैवं विवेक इति। यदि कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः स्वीक्रियते तदा।

## भाषानुवाद

श्रीपराशरमहर्षि ने भी विष्णुपुराण में भगवान् में अनन्त शक्तियों का उल्लेख किया है। शक्तयः सर्वभावानामिति। सकल भाव वस्तुओं की शक्ति अचिन्त्य है और ज्ञान के विषय हैं। ब्रह्म में सर्गादि भाव शक्ति बहुत है जैसे अग्नि में उष्णता शक्ति स्वाभाविक है। यहाँ पर वादी की यह शङ्का उपस्थित होती है कि तादृश शक्ति के योग से निरवयव विभु परब्रह्म जगत् रूप से परिणत होता है इस पक्ष में परब्रह्म में विकारित्व दोष की प्रसक्ति होती है। ब्रह्म का परिणाम रूप कार्य जगत् है इस पक्ष में यह विचारणीय है कि सम्पूर्ण ब्रह्म ही जगत् रूप से परिणत होता है अथवा ब्रह्म का एक देश परिणत होता है। आद्यपक्ष में यह दोष है कि सकल ब्रह्म जगदाकार होगया तो बतलाइये मुक्त पुरुष किस ब्रह्म को प्राप्त होंगे।

## वेदान्तरत्नमञ्जूषा

परिणतत्वान्मुक्तोपसृप्यत्वाभावप्रसङ्गः, अनित्यतायोगश्च। द्वितीये तु अनित्यत्वस्य तादवस्थ्यम्। निष्कलम्निष्क्रियम्शान्तं निरवद्यं निरञ्जनमित्यादिनिरवयवत्वविषयवाक्यव्याकोपश्चेति। तस्मादयोग्य एव परिणामपक्ष इति चेन्न। उदाहृतेषु आकाशादिषु निरवयवत्वविभुत्वसाम्येऽपि निर्विकारित्वदर्शनेन निर्दोषत्वात्। आकाशस्य वाय्वात्मना शब्दात्मना परिणतस्य उक्तदोषवत्त्वाऽदर्शनात्। आकाशवत् सर्वगतश्च नित्य इतिश्रुत्या तथात्वश्रवणात्।

## कुञ्चिका

ब्रह्मविकारभूतजगद्व्यतिरिक्तब्रह्मणोऽभावापत्तिः तथासति विकारभावापन्नस्य ब्रह्मणो जगदाकारतया सर्वप्रत्यक्षविषयत्वेन सर्वस्यापि प्राप्तत्वात् सर्वमोक्षप्रसक्त्या उपदेशशास्त्रानर्थक्यं प्रसज्येतेत्याशयेनाद्यपक्षं निरस्यति। आद्य इति। ब्रह्मण एकदेशस्य परिणामस्वीकारे तस्य पृथिव्यादिवत्सावयवत्वेऽनित्यत्वापत्तिरित्यभिप्रेत्य द्वितीयपक्षमपाकरोति। द्वितीयेत्विति। निरवयवन्तु ब्रह्म श्रुतिभ्योऽवगम्यत इत्यतःश्रुतिं पठति। निष्कलमिति। कला अवयवाः निरवयवमित्यर्थः। तत्र लिङ्गं निष्क्रियत्वम् "शान्तम्" ऊर्मिषट्करहितम्। अशनापिपासे शोकमोहौ जरामृत्यूचोर्मयः "निरवद्यम्" निरञ्जनम्" कर्म सम्बन्धतत्फलरहितम्। परिणामवादोन घटयितुं शक्यत इति निगमयति तस्मादिति। अतो

ब्रह्मणः परिणामानुपपत्तेर्जगदुपादानत्वं न घटते किन्तु प्रधानस्यैव जगदुपादानत्वमेष्टव्य-मितिभावः। उपलभ्यते निरवयवस्य विभोराकाशस्य वाय्वात्मना शब्दात्मना परिणामेऽपि निर्विकारित्वं तद्वत् निरवयवस्य विभोर्ब्रह्मणः परिणाम उपपद्यते तथात्वेऽपि स्वशक्ति-महिम्ना निर्विकारित्वं तस्य तथाभूतपरिणामस्योक्तरीत्या साधितत्वान्नोक्तदोषावकाश इत्याशयेन परिहरति। नेति। तस्य विभुत्वनित्यत्वप्रतिपादिकां श्रुतिमुदाहरति। आकाश-वदिति। तथात्वश्रवणादिति॥ विभुत्वनित्यत्वश्रवणादित्यर्थः। प्रागुक्तशङ्कायाः समाधानं सूत्रकारमतरीत्याऽऽह। वस्तुतस्त्विति। ब्रह्मैव निमित्तमुपादानञ्च कुतः "तदात्मानं स्वयम-कुरुत" इत्यात्मकृतेः। ननु कर्त्तुः कुतः कृतिविषयत्वं तत्राह परिणामात्। सर्वज्ञः सर्वशक्ति-रप्रच्युतस्वरूपः परमात्मा स्वात्मकस्वाधिष्ठितनिजशक्तिविक्षेपेण जगदाकारं स्वात्मानं परिणमयतीत्येवंभूतात्परिणामात्सर्वमनवद्यमिति सूत्रार्थः॥

## भाषानुवाद

और ब्रह्म का परिणाम होने से ब्रह्म में अनित्यत्व दोष की भी प्रसक्ति हो जायगी ब्रह्म का एक देश परिणत मानने पर भी अनित्यत्व दोष की प्रसक्ति आवश्यक है। निष्कलं निष्क्रियं शान्तमिति। इस ब्रह्म को निरवयव प्रतिपादक श्रुति का बाध उप-स्थित होगा इससे सिद्ध हो चुका कि परिणामवाद उक्त दोषों से दूषित होने से समीचीन नहीं हैं। इस शंका का समाधान जैसे अकाश निरवयव और विभु है उसका वायु रूप और शब्द रूप से परिणाम होता है वह विकारित्व नहीं होता है वैसे निरवयव ब्रह्म का परिणाम जगत् है और ब्रह्म में विचित्र शक्ति के सम्बन्ध से विकारित्व दोष की प्रसक्ति नहीं होती है। यह परिणामवाद को स्वीकार करके समाधान किया।

## वेदान्तरत्नमञ्जूषा

तस्मान्निरवयवस्यापि विभोर्ब्रह्मणः परिणामेऽपि तादृशक्तियोगादेवा-विकारित्वमपीति बोध्यम्। वस्तुतस्तु, आत्मकृतेः परिणामादित्यादौ परिणाम-शब्दः शक्तिविक्षेपवाचकः। ब्रह्मस्वरूपे परिणामानभ्युपगमान्नोक्तदूषणगन्ध-स्पर्शनावकाशः। तथाचाऽप्रच्युतस्वरूपस्यैवोर्णनाभ्यादेः स्वशक्तिविक्षेपलक्षण-परिणामवत्त्वेऽपि नोक्तदोषयोगः। यथोर्णनाभिः सृजते गृह्णते च, यथा सतः पुरुषात् केशलोमानि यथा पृथिव्या औषधयः संभवन्ति तथाऽक्षराद् संभवतीह विश्वमिति श्रवणात्, तथैव परिणामेन विश्वस्य भगवान् हरिरितिस्मरणाच्च। नच शक्तिविक्षेपः परिणाम इत्यत्र किं मानमिति वाच्यम्।

## कुञ्चिका

यथाप्रच्युतस्वरूपादिभ्य एवाकाशोर्णनाभ्यादिभ्यः शब्दवाय्वोस्तन्त्वादेश्च जन्मादिकं यथा वाऽप्रच्युतस्वरूपान्मनसः कामक्रोधलोभमोहादीनां परस्परविलक्षणानां समुद्रादूर्मीणां चोद्भवनं प्रत्यक्षागमादिमानसिद्धं तेषां तादृशापरिमितशक्तियोगादेव एवमचिन्त्यानन्तस्वाभाविकशक्तियोगाद्ब्रह्मणोऽपि निर्विकारादप्रच्युतस्वरूपाज्जगज्जन्मादिकं वोध्यमित्याह—तथा चेति। उक्तार्थं श्रुतिमानेन द्रढयति। यथोर्णनाभिरिति। पदार्थभावानां शक्तयो न केनापि प्राकृतबुद्धिनाऽपच्छेत्तुं शक्याः। तर्काणामप्रतिष्ठितत्वेनास्माकमौपनिषदानां श्रौतस्यैव सिद्धान्तस्याश्रयणीयत्वादिति भावः। श्रुतिसहकारिणी स्मृतिश्च तथैवपरिणामेनेत्यादि। परिणामोऽत्र शक्तिविक्षेप इत्युक्तमेव तत्र मानं पृच्छति। शक्तिविक्षेप इति।

## भाषानुवाद

अब अपना सिद्धान्त पक्ष कहते हैं वस्तुतस्त्विति। वास्तव में तो श्रुति और सूत्र में जो परिणाम शब्द का प्रयोग है उसका अर्थ शक्ति विक्षेप है। अर्थात् ब्रह्म की शक्ति जगत रूप से परिणत होती हैं। ब्रह्म के स्वरूप में परिणाम नहीं होता है अतएव उक्त दोषों की प्रसक्ति नहीं होती है। जैसे ऊर्णनाभी ( मकरी ) तन्तु को विस्तार करती हैं उसके स्वरूप में नेक भो विकार नहीं होता है। वैसे हो ब्रह्म की शक्ति में परिणाम स्वीकार करने से किसी भी दोष की प्रसक्ती नहीं होती है इस विषय को श्रुति के द्वारा प्रमाणित करते हैं। यथोर्णनाभि सृजत इति। जैसे ऊर्णनाभि तन्तु सन्तान को उगलता है और समेटता है। जैसे सत्य पुरुष से केश और लोम उत्पन्न होते हैं यथा पृथिवी द्वारा यव और व्रीही औषधी उत्पन्न होती है वैसे ही अक्षर परमात्मा से यह विश्व उत्पन्न होता है। प्रश्न-शक्ति विक्षेप रूपपरिणाम है। अर्थात ब्रह्म की शक्ति जगत् रूप से परिणत होती है। इसमें श्रुति प्रमाण है या नहीं है।

## वेदान्तरत्नमञ्जूषा

**शास्त्रस्यैव मानत्वात्। "प्रधानं पुरुषंचैव प्रविश्यात्मेच्छया हरिः। क्षोभयामास संप्राप्ते सर्गकाले व्ययाऽव्ययावि" त्यत्र क्षोभशब्दप्रयोगः। स च विक्षेपपर्य्याय एव। किञ्च। "प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः। तद्वद् भूतानि भूतात्मा सृष्टानि ग्रसते पुनरिति भीष्मः"। कण्ठरवेणैवपठतीति निरवद्यम्। अभिन्ननिमित्तोपादानकारणं ब्रह्मेति। तत्रोपादानत्वं नाम-चेतनाचेतनात्मकानां सूक्ष्मावस्थापन्नानां स्वस्वाभाविकशक्तीनां तत्तद्गतसद्रूपकार्य्याणां**

च स्थूलतया प्रकाशकत्वम् । निमित्तत्वञ्च—स्वस्वानादिकर्मसंस्कारवशीभूतात्यन्तसंकुचितस्मृत्यनर्हज्ञानानां चेतनां कर्मफलभोगार्हज्ञानप्रकाशेन तत्तत्कर्मफलतत्तद्भोगसाधनैः सह संयोजयितृत्वम् ।

### कुञ्चिका

प्रमाणवाक्यं पठति "प्रधानञ्चेति । आत्मेच्छया वहुस्यामिति सङ्कल्पात्मिकया प्रविश्य विषयीकृत्य क्षोभयामास सर्गोन्मुखीचकार प्रधानस्य क्षोभोगुणवैषम्यं प्रवृत्युन्मुखत्वञ्च पुंसोज्ञानविकासः संस्कारोद्बोधश्च । व्ययाव्ययौ) व्येतीति व्ययः । अव्ययो व्ययरहितः विकारकूटस्थावित्यर्थइति श्लोकार्थः ॥ सचेति । क्षोभशब्द इत्यर्थः देवदत्तस्यचेतसि क्षोभो यज्ञदत्तस्य मनसि विक्षेप इतिपर्य्यायत्वप्रसिद्धिरित्याह । विक्षेपपर्य्याय- इति । पर्य्यायमुखेनोदाहृत्य तत्कल्पनानिरासाय साक्षात्प्रतिपादकवाक्यमाह । किञ्चेति । प्रकृतमुपसंहरति । निरवद्यमिति निर्दोषमित्यर्थः । ननु किमुपादानं किम्वानिमित्तं कथञ्चोभयाभिन्नत्वमित्याकांक्षोपशमाय क्रमेणोपनिषद्भिवक्षितार्थं लक्षयितुमादावुपादानं निर्दिशति । तत्रेति स्वस्यासाधारणानां स्वाभाविकीनां प्रलये सूक्ष्मावस्थापन्नानां कार्यविस्तरणव्यापारानर्हाणां शक्तीनां तत्तद्गतसद्रूपकार्याणां च स्वावान्तरकारण ।

### भाषानुवाद

उत्तर—इस विषय में शास्त्र ही प्रमाण है वह शास्त्र यह है कि प्रधानं पुरुषञ्चैवेति। भगवान् अपनी इच्छा से प्रकृति पुरुष में प्रवेश के द्वारा प्रकृति में क्षोभ (शक्ति विक्षेप ) से सृष्टि उत्पन्न करते हैं। इस वाक्य में क्षोभ शब्द का अर्थ विक्षेप है। कूर्म जैसे अपने अङ्गों के प्रसारण कर फिर समेट लेता है। वैसे सर्व भूतात्मा भगवान् अपनी शक्ति के द्वारा विश्व की रचना और संहार करते हैं। इस श्रीभीष्मजी के वचन से साबित हो चुका कि भगवान् अपनी शक्ति के विक्षेप द्वारा विश्व की रचना करते हैं। अतएव शक्ति विक्षेप परिणामवाद सिद्धान्त सप्रामाणिक है। अब उपादान कारण का लक्षण बतलाते हैं। सूक्ष्मवस्थापन्न अपनी स्वाभाविक चेतन और अचेतन शक्ति को शक्ति में वर्त्तमान सद्रूप कार्य का स्थूल रूप से प्रकाश करने का नाम उपादान है। निमित्त कारण का लक्षण इस प्रकार हैं कि जीव अपने २ अनादि संस्कार के वशीभूत होने से उन्हों का ज्ञान अत्यन्त संकुचित हैं। अतएव उन चेतनों की स्मरण शक्ति विलुप्त होगई हैं। इस तरह के चेतनों के कर्म फल भोग के योग्य ज्ञान प्रकाशन द्वारा तत् २ कर्म फल भोग की सामग्री देहादिक है उन्हों के साथ चेतन का संयोग करा देने का नाम निमित्तकारण हैं।

## वेदान्तरत्नमञ्जूषा

तदुभयाभिन्नत्वं तत्त्वम्। एवं भूतस्य कारणत्वस्य स्वरूपगतत्वाद्, यतो वा इमानि भूतानि जायन्त इत्यादिभिरीश्वरस्वरूपलक्षणमेवेति बोध्यम्। नच तथात्वे सत्यादिलक्षणवैयर्थ्यापत्तिरिति वाच्यम्। जगत्कारणत्वस्य कार्य्यनिरूपितत्वेन सापेक्षत्वात् सत्यादेश्च तन्निरपेक्षत्वादिति सर्वं समञ्जसमिति भावः॥

यदुक्तं ब्रह्मविवर्तमेवेदं जगदिति। तत्तुच्छम्। अश्रुतत्वेनाऽप्रामाणिकत्वात्।

## कुञ्चिका

भूतशक्तिस्थभावरूपसूक्ष्मतापन्नकार्याणामित्यर्थः। कार्यसद्रूपत्वञ्चारम्भणाधिकरणसूत्रैर्विवेक्तव्यं तानि तु भावेचोपलब्धेः। १॥ सत्वाच्चावरस्य। २। असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात्। ३॥ युक्तेः शब्दान्तराच्च। ४। पटवच्चेति। ५। निमित्तस्वरूपं निर्देशलक्षणाभ्यामाह—निमित्तत्वञ्चेति। निर्देशः स्वेत्यादिलक्षणम् स्वस्य नियतविभक्तकानादिविचित्रकर्मसंस्कारस्य परतन्त्राणामत्यन्तसङ्कुचितोऽतएवभोग - स्मरणानर्हो ज्ञानलक्षणो धर्मो येषां तेषां क्षेत्रज्ञानां कर्मोन्मुख्यभवनतत्फलभोगार्हधर्मभूतज्ञानप्रकाशेन ततत्कर्मफलैस्तेषां तेषां फलानां भोग्ययोग्यशरीरेन्द्रियादिकरणैः सह सम्बन्धकारयितृत्वमित्यर्थः। तत्त्वमिति। अनयोरुपादाननिमित्तयोरेकस्मिन्नाश्रितत्वं तदभिन्नत्वमिति तदर्थः। लक्षणमुक्त्वा तत्समन्वयमाह - एवमिति। स्वरूपगतत्वादिति। जिज्ञासासूत्रोक्तनिरतिशयबृहत्समानाधिकरणत्वेन स्वरूपनिरूपणपरत्वादित्यर्थः। स्वरूपनरूपणपरत्वं श्रुतिप्रमाणेन द्रढयति। यतोवेति। एवं स्वाभिप्रेतविरोधमसहिष्णु पुनरुत्तिष्ठमानं स्वयमेवोपशामयति नचेत्यादिना लक्षणस्य लक्ष्यभिन्नवस्तुमात्रव्यावर्त्तकत्वमेवप्रयोजनमिति प्रसिद्धम्। तस्य वैलक्षण्यद्योतनाय चोक्तलक्षणेनैवसिद्धत्वाल्लक्षणान्तराकांक्षोपशमत्वेन सत्यादिवाक्योक्तलक्षणस्य वैयर्थ्यं विशेषाभावात् फलाकाङ्क्षाभावे साधनाकांक्षाया अभावादिति न वाच्यम्। विशेषस्यसत्वादित्याह। जगत्कारणत्वस्येति स्वनिरूपककार्यतदवस्थाकालसापेक्षज्ञानवत्वमपेक्षते जगत्कारणवाक्यम्, सत्यादिवाक्यन्तु-नतथेतिमहद्वैलक्षण्यमित्यर्थः। प्रागुक्तमनूद्यति। यदुक्तमित्यादिना विवर्त्तइतिसतःत्रैकालिकबाधरहितात् कूटस्थवदपरिणामिनः विवर्त्तः स्वाज्ञानकल्पितः स्वज्ञाननिवर्त्यः परिणामादिविलक्षणः अन्यथा भावापत्तिः उपचारात् तथोत्पद्यमानंकार्यजातमपि न वस्तुसदिति कूटस्थे अपरिणामिनि आत्मनि स्वाज्ञानावृतेवियदादिकमध्यस्तमुत्पद्यते तत्र च तदज्ञानं हेतुः तत्संस्कारश्चसहकारीति मायावादिनां मतम् तन्निराचिकीर्षुराह तत्तुच्छमिति। अप्रमाणिकत्वादिति सर्वेषां प्रमाणानां सविशेषवस्तुविषयत्वेन निर्विशेषे विवर्त्तोचब्रह्मणि

कमपि प्रमाणं नास्तीत्यर्थः। न वयं प्रमाणमन्तरेण स्वपक्षं साधयामः किन्तुप्रमाणेनै-वेत्यतः श्रुतिं पठति। सदेवेति सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतौ विजातीय-सजातीयव्यावर्तकावधारणद्वयसमभिव्याहृतत्वादिदमद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते इति विश्वं ब्रह्मणि कल्पितं यतः कल्पितमतएवासदित्यर्थः॥

## भाषानुवाद

उपादान कारण और निमित्त कारण के अभेद का नाम अभिन्न निमित्त कारण हैं। यह अभिन्न निमित्तोपादन कारण परब्रह्म स्वरूप गत हैं। जगत् की उत्पत्ति स्थितिलय कारणत्व ब्रह्म का स्वरूप लक्षण है। प्रश्न—जगत्कारणत्व का स्वरूप लक्षण मानने पर सत्य ज्ञानमनन्तमिति यह लक्षण व्यर्थ होजायेगा। उत्तर—जगजन्मादि कारण लक्षण में जो कारणत्व है वह कार्य निरूपणाधीन है अतएव जगत्कारणत्व लक्षण सापेक्ष हैं सत्यादिलक्षण अन्य निरपेक्ष है एतावान मात्र विशेष हैं। पहिले ब्रह्म में जगत की भ्रान्ति विवर्त है यह शंका की थी उसका निवारण यह है कि विवर्तवाद सर्वथा प्रमाण शून्य है।

## वेदान्तरत्नमञ्जूषा

ननु सदेव सोम्येदमग्र आसीत्, तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामित्यादि श्रुतौ ब्रह्मणः सत्यत्वाऽवधारणाद् अन्ययोगव्यवच्छेदार्थकोऽयम् एवकार उक्तार्थे विश्वारोपितत्वे प्रमाणम्। आरोपितत्वादेवाऽसत्यत्वमिति चेन्न। असत आरोपासंभवात्। एकत्र सत एवान्यत्राऽऽरोपनियमाद्। नहि स्वरूपेणाऽसतः शशशृङ्गादेः क्वचिदारोपो दृष्टः श्रुतो वा। नचारोपे तद्विषयक-प्रतीतिमात्रमपेक्षितं, न सत्यत्वमपीति वाच्यम्। असतः प्रतीतेरेवाऽसंभवात्। ननु रज्जौ सर्पप्रतीतेरिव प्रपञ्चप्रतीतेरपि दोषमात्रमेव कारणमपेक्षितं, न-

## कुञ्चिका

सद्रूपस्यैव वस्तुनोऽन्यत्रारोपो दृश्यते नत्वसतः नहि स्वरूपेणासतः शशशृङ्गा-देरारोपोऽदृष्टश्रुतत्वादित्याशयेन परिहरति। नेति। आरोपे पूर्वप्रतीतिमात्रमुपयुज्यते न तु प्रतीयमानस्य परमार्थसत्ता इत्याशङ्क्य परिहरति नचेति। प्रतीतिरेव त्वत्यन्तासतो-गगनकमलिनीकल्पस्य देहेन्द्रियादिरूपस्य नोपपद्यते इत्याह—असत इति यथा रज्जौ सर्पप्र-तीतिर्दोषमूला प्रपञ्चप्रतीतिरपि तथा, न तु विषयस्य तत्वमितिशङ्कते। नन्विति। ब्रह्मव्य-तिरिक्तस्य सर्वस्य तव मतेऽसत्वेन दोषात्मककारणस्यापि तथात्वात् न प्रतीतिलक्षणकार्यो-त्पादो भवितुमर्हति भवति च कारणसत्ताधीनं कार्यस्य सत्त्वं कारणत्वस्य भावत्वव्याप्य-त्वादित्याशयेन परिहरति। नेति।

## भाषानुवाद

प्रश्न–सदेव सोम्येदमग्रआसीत्। इस श्रुति में अवधारणार्थक एवकारविवर्त्त वाद में प्रमाण हैं। क्योंकि केवल परब्रह्म ही सत्य है और सब जगत् मिथ्या है। जगत् ब्रह्म में आरोपित हैं अतएव असत् हैं। उत्तर –असत् का आरोप कदापि नहीं हो सकता है क्योंकि जो वस्तु एक स्थान में सत्य है उस वस्तु का दूसरी वस्तु में आरोप (भ्रम) होता है यह नियम अवश्य माननीय है यदि उक्त नियम स्वीकार नहीं किया जाय तो स्वरूप से असत् शशशृङ्ग काभी कोई स्थान पर आरोप होना चाहिए असत् का आरोप किसी भी व्यक्ति ने न देखा और न सुना है इस तर्क से साबित हो चुका कि स्वरूप से असत् वस्तु का आरोप नहीं हो सकता है। प्रश्न –आरोप में विषय का ज्ञान मात्र ही कारण हैं। विषय की सत्यता की अपेक्षा नहीं है। अतएव जगत् का आरोप ब्रह्म में हो सकता है। क्योंकि जगत् की प्रतीति विद्यमान है। उत्तर—सत् वस्तु का ही ज्ञान होता है असत् का ज्ञान नहीं हो सकता है। असत् जगत् का ज्ञान कदापि नहीं होसकता हैं। प्रश्न –जैसे रज्जु में सर्प की प्रतीति होती है वैसे ही विश्व की प्रतीति भी होती है इसमें दोष मात्र ही कारण है विषय की सत्यता अपेक्षा नहीं है।

## वेदान्तरत्नमञ्जूषा

विषयसद्भाव इतिचेन्न। दोषात्मककारणस्यापि असत्यत्वाविशेषेण तत्र पक्षे प्रतीतिलक्षणकार्य्योत्पत्तेरसंभवात्। कार्यस्य कारणसत्तापेक्षितत्वनियमात्। कुत्राप्यसतः कारणत्वादर्शनाच्च। नचाऽसतोऽप्यारोपितसर्पस्य भयादिकार्यजनकत्वदर्शनात् कार्य्यस्य कारणसत्ताऽपेक्षितत्वनियमभङ्ग इति वाच्यम्। स्वरूपेणासतः कार्योत्पत्त्यनुकूलशक्त्याश्रयत्वभूतकारणत्वाऽसंभवात्। भ्रमस्थलेऽपि सर्पविषयकज्ञानस्यैव भयादिहेतुत्वं, न विषयस्येति। अन्यथा, कारणमात्रस्याप्यसत्यत्वाभ्युपगमे कार्योत्पत्तिकथाया एवानुपपन्नत्वात्। नचाऽसतोऽपि रज्जुसर्पादेर्ज्ञानकारणत्वोपपत्तिवद्। कुञ्चिका

यदि कारणं सत्तदा कार्यमपि सदिति नियमे व्यभिचारमाशङ्क्य परिहरति नचेति। कार्योत्पत्त्यनुकूलशक्तिमत्वं कारणत्वं तच्चासद्रूपे कारणे नास्ति रज्जौ सर्पविषयकं ज्ञानमेव भ्रमोत्पादकं नतु विषयस्य तथात्वमित्याह स्वरूपेणासत इति। सर्पज्ञानाभावतो बालस्य तत्सर्पदर्शनेऽपि भयाद्यदर्शनात् प्रत्युतः सर्पग्रहणे प्रवृत्ति दर्शनादिति भावः॥ विपक्षे बाधकतर्कमाह – अन्यथेति। असतः रज्जुसर्पस्य यथा तद्विषयकज्ञानं प्रति कारणत्वं तथा भयं प्रत्यपि तथात्वं वक्तुं शक्यत इत्याशङ्क्य निरस्यति। नचेति।

## भाषानुवाद

उत्तर—अद्वैतसिद्धान्त में दोष रूप कारण भी असत् हैं। असत् कारण से प्रतीति रूप कार्य की उत्पत्ति नहीं हो सकती है। क्योंकि कार्य की उत्पत्ति कारण सत्ता के अधीन हैं। प्रश्न—आरोपित असत्सर्प से भी पुरुष को भय और कम्प उत्पन्न होते हैं इससे कारण सत्ता के अधीन कार्य की सत्ता है इस नियम का उक्तस्थल में व्यभिचार है उत्तर—असत् विषयक ज्ञान का कारण सद्रूप दोष ही हैं विषय उसका कारण नहीं है। जो स्वरूप से असत् वस्तु है उसमें कार्य की उत्पादक शक्ति का संचार ही नहीं है और भ्रान्ति में भी भय का कारण असत् सर्प नहीं है। किन्तु भय का जनक सर्प का ज्ञान है यदि सर्प के ज्ञान को भयादि का कारण नहीं माना जाय तो सर्प को नहीं जानने वाले बालक को भी भय और कम्प होना चाहिए। प्रत्युत बालक सर्प को हस्त में ग्रहण करने के लिये चेष्टा करता है। यदि कारण मात्र को असत् माना जाय तो कार्य की उत्पत्ति कदापि नहीं हो सकती है। क्योंकि कार्य की उत्पादक शक्ति असत् वस्तु में विद्यमान नहीं हैं। इससे साबित हो चुका है कि सत्य दोष ही असत्सर्प के ज्ञान का कारण है सर्प नहीं है। अन्यथा तमोरूप दोष के अभाव में भी रज्जु में सर्प का ज्ञान होना चाहिए क्योंकि वादी के मत में अभिमत असत्कारण विद्यमान हैं। अतएव असत् कारण वाद सर्वथा निर्मूल हैं।

## वेदान्तरत्नमञ्जूषा

भयकारणत्वोपपत्तिरपि किं नाङ्गीक्रियते इति वाच्यम्। दोषस्यैवासद्विषयकज्ञानकारणत्वेन भ्रमस्थलेऽपि विषयस्य ज्ञानकारणत्वाभावात्। नन्वतीतानागतवृष्टिविषयकज्ञानोत्पत्तिस्थलेऽसत एव वृष्टिरूपविषयस्य स्वज्ञानजनकत्व दर्शनात् तथाऽत्रापि संभाव्यमितिचेन्न। अतीतवृष्टिविषयकज्ञानोत्पत्तौ तत्कार्यस्येदानींन्तनस्य सत एवान्नादेरनागतवृष्टिविषयकज्ञानोत्पत्तौ च तज्ज्ञापकरूपकारणत्वस्य सत एव ज्योतिःशास्त्रस्य विद्यमानत्वान्नाऽसतो विषयस्य कुत्रापि ज्ञानादिकारणत्वमिति। तत् सिद्धम्—असत आरोपासंभवादप्रमाणकत्वं विवर्तस्येति।

## कुञ्चिका

भ्रमस्थलेऽसद्विषयस्य न कारणत्वं कल्पयामः किन्तु दोषस्यैव लाघवात् अतो नोक्तदोषावकाश इत्याह। दोषस्यैवेति। अतीतानागतवृष्टिविषयकज्ञानं प्रति यथाऽसत एव वृष्टिरूपविषयस्य कारणत्वं तथा भ्रमेऽप्यसद्विषयस्य कारणत्वं स्यादिति वादीपुनरुत्तिष्ठते। नन्विति॥ इदानीमुत्पन्नस्य सद्रूपस्यान्नादेरतीतवृष्टिविषयकज्ञानं प्रति कारणत्वम्, अना-

गतवृष्टिविषयकज्ञानोत्पादे सतः ज्योतिःशास्त्रस्य तज्ज्ञापकत्वमित्याशयेनोक्तां शङ्कां परिहरति । नेति । निगमयति । तत्सिद्धमिति । ननु वाचारम्भणनामधेयपदाभ्यां विचारासहत्वं विविच्चितं तथाहि भूविकारस्य घटादेः स्वरूपविचारे विकारो मिथ्याभूमिः तस्यतत्स्वरूपविचारे च साऽपि मिथ्या—

## भाषानुवाद

प्रश्न—भूत भविष्यत् वृष्टि के ज्ञान का कारण जैसे असत् वृष्टि हैं। तैसे असत् जगत् भी ज्ञान का कारण हो सकता है। उत्तर—अतीत वृष्टि के ज्ञान का कारण सद्रूप वर्तमान अन्नादि विद्यमान हैं। और भविष्यत् वृष्टि में भी उसका ज्ञापकरूप कारण सद्रूप ज्योतिष शास्त्र विद्यमान है। इससे यह सिद्धान्त हुआ कि असत् वस्तु कोई भी तरह से कारण नहीं हो सकता है अतएव असत् जगत के आरोप की सम्भावना करना सर्वथा दुर्घट हैं। इस से यह सिद्ध हुआ कि विवर्त्तवाद अप्रमाण मूलक हैं।

## वेदान्तरत्नमञ्जूषा

नच वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्यमिति श्रुतेरेवात्र प्रमाणत्वात् कथमप्रमाणत्वमिति चेन्न। विकारो नामधेयमित्यत्र विकारशब्दपाठात् विकारत्वं परिणमिते एव द्रव्ये दृष्टचरम्। अन्यथा भ्रान्तिर्नामधेयमित्युक्तं स्यात्।

किंच, विवर्तदृष्टान्तानां रज्जुसर्पशुक्तिरजतादीनां भवदभिमतानां कार्यदर्शनादपि प्रतिज्ञाबाधाच्च। तथाहि। छान्दोग्य आम्नायते—उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति, कथं नु भगवः स आदेशो भवतीति।

## कुञ्चिका

तद्धेतुभूतापञ्चीकृतानि भूतानि तत्स्वरूपविचारे तेषामपि मिथ्यात्वं किन्तु तत्परमकारणं ब्रह्मैव सत्यमिति। मृत्तिकेत्येव सत्यमिति सत्यमित्यत्र हेतुर्वाचारम्भणं विकारो नामधेयं वाङ्मात्रं विचारासहं तस्मान्निर्विकारं ब्रह्मैव सत्यं तद्व्यतिरिक्तं तत्रारोपितं मिथ्याभूतमितिश्रुतेरेव बोधनात् कथमप्रमाणत्वमित्याशंकामपाकरोति। नचेति। विकारोनामधेयमित्यत्र साक्षात्कण्ठरवेण विकारशब्दपाठादपि विवर्त्तो न सिद्ध्यति यदि श्रुतेर्विवर्तोऽभिप्रेतः स्यात्तर्हि विकार इति मृत्पिण्डादिदृष्टान्तांश्च न श्रावयेत् किन्तुभ्रान्तिर्नामधेयमितिब्रूयात् शुक्तिकादिदृष्टान्तांश्चोपन्यसेत्। नहि विवर्त्तकार्यं विकारोऽपितु भ्रममात्रमन्यथा विवर्त्त एव न स्यात् तथाच विकारस्य कारणात्पृथक्सत्वासिद्धया स्वतन्त्रसत्वा-

भावं बोधयति श्रुतिःनतु स्वरूपेण मिथ्यात्वमित्याशयेन परिहरन्नाहविकार इति। विवर्त्तवादे च प्रतिज्ञादृष्टान्तयोरसम्भवएव सर्वस्य कार्यस्य भ्रान्तिमात्राङ्गीकारात् कस्य ज्ञानं स्यात किञ्च भ्रान्तिविषयकं ज्ञानं भ्रान्तिरूपमेव स्यात् तथाच भ्रान्तजल्पितमेव श्रुतिवाक्यं स्यात् । बौद्धमतापत्तेश्च । अपिच परिणामदृष्टान्तानां मृद्विज्ञानेन घटशरावादिकार्याणां सुवर्ण-ज्ञानेन कटककुण्डलादीनां श्रुत्युपात्तानां ज्ञानसम्भव: न तथा विवर्तदृष्टान्तानां शुक्तिरजत-रज्जुसर्पादीनां न श्रुत्युपातत्वं शुक्तिज्ञानेन रजतस्य रज्जुज्ञानेन सर्पजातस्य वा ज्ञानं न दृष्टं श्रुतमुपपन्नं कार्यस्य सत्यत्वाङ्गीकारे चाद्वैतसिद्धान्तोदत्ततिलाञ्जलि: स्यात । तस्माद्विव-र्त्तवादो हि श्रुतिप्रतिज्ञादृष्टान्तविरुद्धत्वादुपेक्षणीय इत्याह—किञ्चेति । तदेव स्पष्टयति । तथाहीत्यादिना स पित्रोक्त: श्वेतकेतुर्द्वादशवर्ष: सन्नुपेत्याचार्य्यकुलं द्वादशाब्दत: सर्ववेदा-नधीत्य महामना: प्रायोनास्तिमानुष: देवोवेतिस्वस्मिन्निति महत्त्वबुद्धि: चतुर्विंशतिवर्ष: सन्नियाय पितु: सकाशं तं स्वात्मानुरूपं पुत्रं दृष्ट्वापितोवाच । स्वातन्त्र्याभिमानिनस्तस्याह-ङ्कारशान्त्यर्थं हेसोम्य यज्ञादिसमस्तकर्मविषयोदेवताविषयश्च सर्वोपि वेदसाङ्गोपाङ्गोमया-धीत इति चेत् किंकर्मादिविषयवेदाभ्यासेन वृथाश्रान्तोऽसि तं सर्ववेदप्रसिद्धं आदिश्यत इत्यादेशं भगवन्तमप्राक्ष्म: किं प्रायो नारायणं देवं नो पृष्टवानसि । कथं तस्मिन् ज्ञाते एवमहंकार: स्यादिति । तमादेशं विशिनष्टि । येनेति । येनाश्रुतेनाश्रुतमपि देवताकर्मादिकं श्रुतं भवति। येन मतेनामतमपि मतं भवति येन विज्ञातेनाविज्ञातमपि विज्ञातं भवति तमितिपूर्वेणान्वय: एवं पित्रोक्तेन श्वेतकेतुना हेभगवो हेभगवन् । स आदेशो भगवज्ज्ञानेन देवतादिकर्मादिज्ञानं भवतीत्युपदेश: कथमेवोपपन्नो भवति । अन्यज्ञानेनान्यज्ञानस्य क्वाप्य-दर्शनादित्याक्षिप्ते सादृश्यात् प्राधान्यात कारणत्वाच्चैकविज्ञानेन सर्वविज्ञानोपपत्तेर्नानु-पपत्तिरित्याशयवानुद्दालक: सादृश्यादेकविज्ञानेन सर्वविज्ञानमित्यत्र दृष्टान्तमाह। यथेति । हेसौम्य यथेकेन मृत्पिण्डेन विज्ञातेन मृत्त्वादिना तत्सादृश्यात्सर्वं मृण्मयं विज्ञातं स्यात् एवं स आदेशो भवति ।

## भाषानुवाद

विवर्त वाद को श्रुति प्रमाण द्वारा सिद्ध करने वाले वादी की शङ्का। वाचा-रम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति। इस श्रुति से विवर्तवाद सिद्ध होता है कि विकार नाम मात्र है अतएव कथन मात्र प्रपञ्च हैं सत्य नहीं है । (समाधान) उक्त श्रुति में विकार शब्द साक्षात् विद्यमान हैं । वह विकार परिणामी द्रव्य का हो सकता है विवर्त में विकार शब्द का प्रयोग कदापि नहीं हो सकता है । अन्यथा वाचारम्भण श्रुति में विकार शब्दका उल्लेख न करते हुये भ्रान्ति नाम धेय है और विवर्त नामधेय है। इस प्रकार पाठ

होना चाहिए इससे साबित हो चुका कि विवर्त वाद में उक्तश्रुति प्रमाण कदापि नहीं हो सकती है। और भी विमर्श करना चाहिए कि विवर्तवाद में अपने मुखारविंद से आप स्वयं बतलाते हो कि शुक्ति रजत और रज्जु सर्प दृष्टान्त है इन सब दृष्टान्तों की श्रुति में उपलब्धि कहीं भी नहीं होती है। और आपके सिद्धान्त में प्रतिज्ञा का भी वाध होता है। उसका वाध इस प्रकार है कि उततमादेशमप्राक्ष्योयेनाश्रुतमिति। शिष्य ने यह प्रश्न श्रीगुरुदेव से पूछा कि जो वस्तु श्रवण के गोचर नहीं हुआ वह वस्तु भी श्रवण गोचर होजाय जो वस्तु अविज्ञात है वह वस्तु विज्ञात होजाय इस प्रकार का उपदेश कीजियेगा। इसका उत्तर यह है कि कारण के ज्ञान से सर्व कार्य का ज्ञान होता है।

### वेदान्तरत्नमञ्जूषा

यथा—सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् यथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यादित्यादिना कारणविज्ञानेन कार्यविज्ञानं प्रतिपादितम्। तत्र यथा मृत्पिण्डस्य घटादिविकारोपादानस्य विज्ञानेन सर्वं मृद्विकारजातं विज्ञायते, न तथा रज्जुविज्ञानेन सर्पमात्रं विज्ञायते। नापि शुक्तिविज्ञानेन रजतजातं चेति सर्वानुभवविरोधात् प्रतिज्ञाहानिरित्यर्थः।

तस्माद् कार्यत्वात् सदेव जगदितिवैदिकानां सिद्धान्तः। तथाच—

### कुञ्चिका

एवंसदृशमात्रज्ञानात्सदृशान्तरज्ञानं भवतीत्यत्र दृष्टान्तमभिधाय प्रधानभूत-सदृशज्ञानादप्रधानभूतसदृशज्ञानं भवतीत्यत्रदृष्टान्तमाह यथैकेनेति। यथैकेन लोहमणिना लोहप्रधानेन स्वर्णेन विज्ञातेन स्वर्णत्वेन लोहत्वेन वा तत्सादृश्यात्सर्वं लोहमयं कटक-मुकुटादिकं विज्ञातं स्यात्। एवं सोम्य स आदेशो भवति। एवमेकेन ब्रह्मणा विज्ञातेन ज्ञानानन्दादिना तत्सादृश्याज्जीवरूपमपि विज्ञातं स्यादिति श्रुत्यर्थः। प्रकृते योजयति। न तथेति। विश्वं सद्रूपमिति निगमयति। तस्मादिति। प्रपञ्चस्य सद्रूपत्वं श्रुतिमानेन दृढयति। सदेवेति।

### भाषानुवाद

एक मृत्पिण्ड के ज्ञान से सर्वमृन्मय का ज्ञान होता है वैसे शुक्ति के ज्ञान से रजत मात्र का ज्ञान और रज्जु के ज्ञान से सर्प मात्र का ज्ञान और वालुका के ज्ञान से जलमात्र का ज्ञान होना चाहिए सो नहीं होता है इससे विवर्तवाद श्रुति प्रमाण शून्य है।

### वेदान्तरत्नमञ्जूषा

श्रुतिः- सदेव सोम्येदमग्र आसीत्। गौरनाद्यन्तवती जनित्री भूतभा-

त्रिनी । सिताऽसिता च रक्ता च सर्वकामदुघा विभोः । ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातनः । तद् सदासीद्, प्राणा वै सत्यं तेषामेव सत्यम्, असत्यमाहुर्ज्जगदेतदज्ञाः शक्तिर्हरेर्न विदुर्येपरां हि । यः सत्यरूपं जगदेतदीदृग् सृष्ट्वात्वभूत् सत्यकर्मा महात्मा । अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते । अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते । अष्टरूपामजां ध्रुवामित्यादिः । सत्त्वाच्चावरस्य । असद्व्यपदेशादितिचेन्न । धर्मान्तरेण वाक्यशेषात् । युक्तेः शब्दान्तराच्चेत्यादिन्यायः ।

## कुञ्चिका

सृष्टेः प्राक् इदं दृश्यमानं विश्वं सदेव सद्रूपमेव आसीदित्यर्थः । गौः माया आद्यन्तरहितेत्यर्थः । उर्द्धं भगवद्धामगन्तुर्भगवद्भक्तस्य सर्वलोकातिक्रमणे सावरणब्रह्माण्डोपरि वर्त्तमानं त्रिगुणात्मकप्रकृत्यावरणमेव मूलमादिर्यस्य संसारवृक्षस्ये त्यूर्द्धमूलम् । अधःशाखत्वं ततोऽर्वाचीनाः सत्यलोकप्रभृतयः चतुर्दशलोकाः शाखा इव फलाश्रया शाखा यस्य एवम्भूतः एषऽश्वत्थः संसाराख्यो वृक्षः सनातनः नित्य इत्यर्थः । एतेन संसारवृक्षस्य सनातनत्वोक्त्या सत्यत्वं सम्पादितं भवति ।

कारणसद्भावे च सति कार्यस्योपलब्धेः कार्यस्य कारणानन्यत्वम् । सन्मूलाः सोम्येमा प्रजा इति श्रुतेः । भावे चोपलब्धेः । इतिसूत्रेणैतत् सर्वं निरूप्य सम्प्रति तथैव कार्यमपि सदेवोत्पद्यत इत्याह—सत्वाच्चावरस्य ॥ २ । १ । १६ । इति ॥ अवरस्य कार्यस्य कारणे सत्वात् यत्र यस्याभावो न तत उत्पद्यते, यथाग्नेर्व्रीह्यङ्कुरादिः सिकताभ्यस्तैलमित्यर्थः यथाच कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति तथाकार्यरूपं विश्वमपि त्रिषु कालेषु सत्त्वं न व्यभिचरतीति । अन्यथा "सदैव सोम्येदमग्र आसीदात्मा वा इदमग्र आसो"दित्यादाविदं शब्दगृहीतस्य कार्यस्य भूतकालीनसत्तायोगश्रवणस्य बाधः प्रसज्येत । असतोऽवस्तुत्वेन कालसम्बन्धाऽसम्भवादिति सूत्रार्थः " ननु मास्तु कार्यस्याध्यस्तत्वासिद्धया मिथ्यात्वं निर्वचनीयत्वे प्रमाणाभावात किन्त्वसत्वमेवास्तु प्रपञ्चस्य तत्र श्रुतिप्रमाणस्य सत्वादित्याक्षिप्योत्तिष्ठन्त्यसत्कार्यवादिनः । असदेवेदमग्र आसीत्" असद्वा इदमग्र आसीदित्यादिश्रुतिभिः कार्यस्योत्पत्तेः प्राक्कालेऽसत्वव्यपदेशात्कथं सत्त्वं व्यपदिश्यत इत्याह—असद्व्यपदेशादितिचेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च ब्र० सू० । २ । १ । १७ ॥ इति । तत्रोत्तरमाह—भगवान्सूत्रकार इति । प्रागपि कार्यस्यासत्वं व्यपदिश्यत इति नाशासनीयम् तत्र हेतुमाह । धर्मान्तरेणेति । अभिव्यक्तनामरूपात्सत्वधर्माद्धर्मान्तरमनभिव्यक्तनामरूपमसत्वं तेन योगादियंश्रुति-

रसत्व व्यपदिशति नतु स्वरूपासत्वम्। सत्वासत्वे हि द्रव्यधर्मौ अनभिव्यक्तनामरूपक-मतिसूक्ष्ममासीद् तत्र हेतुः वाक्यशेषादिति। उपक्रमे "असदेवेदमग्रे आसीदित्यादिना असदितिनिर्दिष्टे तस्यैव पुनः" तत्सदासीदितिवाक्यशेषेण तच्छब्देन परामृश्य सत्वाभि-धानादसत्वसंशयं वारयति। असतः कालत्रयसम्बन्धायोगात्तथात्वे चासीदितिप्रयोगानु-पपत्तेः सच्छब्देन परामर्शानुपपत्तेश्च अपिच "असद्वा इदमित्यत्रापि" तदात्मानं स्वयमकु-रुतेति वाक्यशेषश्रवणान्न स्वरूपासत्वं किन्त्वव्यक्तनामरूपकत्वादतिसूक्ष्मं वस्त्वसच्छ-ब्देनोच्यते तस्मात्कार्यं सदेवोपलभ्यमानत्वात् नत्वत्यन्तासतः खपुष्पादेः काप्युपलब्धि-र्दृष्टा चोपपन्ना वा।

## भाषानुवाद

सदेव सोम्येदमिति। सृष्टि के पहिले यह कार्य रूप जगत् सत्य था। प्रकृति आदि और अन्त से रहित हैं। अर्थात् नित्य हैं। जिस संसार वृक्ष का मूल ऊपर है शाखा नीचे है यह अश्वत्थ सनातन हैं। प्राण सत्य हैं। जो अज्ञ जन जगत् को असत्य बतलाते हैं। वे जन भगवान् की पराशक्ति को नहीं जानते हैं। इस सत्य रूप जगत् की सृष्टि करने से भगवान का सत्यकर्मा नाम हुआ। जो परमात्मा नित्य विश्व को रचता है इस से परमात्मा को नित्यकर्मा कहते है। अष्ट रूपा प्रकृति नित्य हैं। सत्वाच्चावरस्य। ब्र० सू० २। १। १६। कार्य कारण में सत्य हैं। उपदर्शित श्रुति सूत्र और स्मृति के द्वारा यह सिद्ध हो चुका कि कार्य सत्य है।

## वेदान्तरत्नमञ्जूषा

ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्। असत्यमप्रतिष्ठंच जगदाहुर-नीश्वरमित्यादि भगवद्गीतश्च।

ननु, असद्वा इदमग्रआसीदित्यादिनाऽसत्त्वस्यापि श्रुतिसिद्धत्वात्। कथमपह्नव इति चेन्न। तस्यविकारित्वलक्षणासत्त्वविषयत्वात्। तथाचाह भगवान् पराशरः—तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्। आविर्भावतिरोभावजन्मना-शविकल्पवदिति वैष्णवे। किञ्च कार्यं सदेव स्वकारणादुद्भवति। अन्यथा

## कुञ्चिका

युक्तेः शब्दान्तराच्चेति हेतुद्वयेन कार्यस्य सत्वं निश्चीयत इत्यर्थः तत्र युक्तिर्ना-मानुपपत्तिनिरासेनोपपत्तिसमर्थनेन वस्तुनिर्णायकवाग्विसर्गः, तथाहि यद्यसदेव कार्यं तर्हि दध्यर्थिभिः क्षीरस्यैव घटार्थिभिर्मृद एव च ग्रहो न स्यात् प्रत्युतविपर्य्ययश्च स्यात् दध्य-र्थिभिर्मृदादिग्रहः घटार्थिभिश्च क्षीरादिग्रहः स्यादसत्वाविशेषात्सर्वत्र नतु तदस्ति तस्मान्न

तथा अतःकारणे व्यक्ताव्यक्तोभयव्यवस्थायां कार्यस्य सद्भावः स्थूलसूक्ष्मावस्था सदसत्पदाभ्यां श्रुत्या व्यपदिश्यते, अन्यथा सर्वत्र सर्वभावाविशेषेणाग्न्यादेरप्यङ्कुराद्युत्पत्तिः कथं न जायते "ऐतदात्म्यमिदं सर्वमिति"श्रुतेः वासुदेवात्मकान्याहुरितिस्मृतेश्चेत्याद्युक्तेः कार्यस्य प्रागुत्पत्तेः सत्यत्वनिश्चयात् । किञ्च शब्दान्तराच्चेति सत्वनिश्चय इति योऽयं पूर्वोदाहृतादसत्प्रतिपादकादसच्छब्दादन्यस्तद्विपर्ययप्रतिपादनपरः शब्दः शब्दान्तरः" सदेव-सोम्येदमित्यादिस्तस्मादपीति यावदिति सूत्रार्थः । "न्यायं ह्युदाहृत्य स्मृतिं प्रमाणयति । ऊर्द्धमूलमिति असत्यमप्रतिष्ठञ्चेति । यस्मात्तेषु दृष्टादृष्टसर्ववस्तुज्ञापकं श्रेयो बोधकं शास्त्रं न विद्यतेऽत एव तेऽसत्यमप्रतिष्ठमनीश्वरञ्च जगदाहुरित्यर्थः ॥ सूत्रस्य पूर्वपक्षभागं व्याचष्टे नन्विति । सूत्रस्योत्तरभागं व्याकुर्वन्समाधत्ते नेति । "तस्य" असद्वेतिवाक्यस्य उक्तार्थं पराशरवचसा द्रढयति । तथाचाहेति ।

### भाषानुवाद

प्रश्न -- असद्वाइदमग्रआसीत् । यह प्रपञ्च सृष्टि के पहिले असत् था यह श्रुति विश्व को असत् बतलाती है इस से सिद्ध हुआ कि जगत् असत्य है । उत्तर -- जगत् को सत्ता विकारशील है अतएव उक्त श्रुति में असत् शब्द का प्रयोग किया स्वरूप से जगत् असत नहीं है । यह वार्ता विष्णु पुराण में स्पष्ट है कि हे मुनिवर मैत्रय ! यह जगत् अक्षय है परन्तु आविर्भाव तिरो भाव और जन्म नाश विकल्पवान् हैं । कारण के द्वारा कार्य सद्रूप ही व्यक्त होता है । अन्यथा सिकता से तैल की और अग्नि से यवादि अंकुर की उत्पत्ति होनी चाहिए ।

### वेदान्तरत्नमञ्जूषा

तिलेभ्य इव सिक्ताभ्योऽपि तैलमुद्भवेदिति पूर्वमेवोक्तम् । तस्माद्विकारित्वावच्छिन्नसत्ताकमिदं जगत् कारणावस्थापन्नम् अनुद्भूतम् अनभिव्यक्त-नामरूपकम् असदादिशब्दैरभिधीयते । तदेवाभिव्यक्तनामरूपकम् आविर्भूतं सदादिशब्दवाच्यमेतिसर्वश्रुत्यविरोधः । वैष्णवे ध्रुवः---न्यग्रोधः सुमहानल्पे यथाबीजे व्यवस्थितः । संयमे विश्वमखिलं बीजभूते तथा त्वयि । बीजादङ्कुर-संभूतो न्यग्रोधः सुसमुत्थितः । विस्तारं च यथा याति त्वत्तः सृष्टौ जगदिति श्रीसूत्रकारेण निर्णीतः---

### कुञ्चिका

युक्तेरितिपदं व्याचष्टे । किञ्चेत्यादिना । विपक्षे बाधकतर्कमुपन्यस्यति । अन्यथेति । कार्यस्यासत्वे शब्दान्तराच्चेतिभागं विवृण्वन् श्रुतिद्वयस्य विरोधं परिहरति ।

तस्मादिति ! पटवच्चेति सूत्रार्थं प्रदर्शयन् प्रमाणवाक्यं पठति । न्यग्रोध इति सूत्रार्थं व्याचष्टे यथासङ्कुचित इति ।

### भाषानुवाद

इससे अव्यक्त नाम रूप सूक्ष्म कार्य को असत् शब्द से श्रुति में कहा है। सदेवसोम्येदमग्रआसीत्। इस श्रुति में व्यक्त नाम रूप जगत् सत् शब्द वाच्य हैं। अतएव उभय श्रुति का विरोध नहीं हैं। यह विष्णु पुराण में ध्रुवजी ने कहा है कि अल्प बीज में जिस प्रकार इतना बड़ा भारी वट वृक्ष रहता है वैसे प्रलय में सूक्ष्म रूप जगत् भगवान में विद्यमान है। बीज से जैसे अङ्कुर उत्पन्न होता है। उससे बड़ा वट क्रम २ से होता है। वैसे भगवान् से यह विश्व सृष्टि के समय विस्तार को प्राप्त होता है। इस विष्णु पुराण के वचनों के द्वारा साबित होचुका कि जगत् सत्य है। उक्तार्थ को व्यास सूत्र द्वारा भी प्रमाणित करते हैं।

### वेदान्तरत्नमञ्जूषा

**पटवच्चेतिसूत्रेण। यथा संकुचितः पटः पटत्वेनागृह्यमाणोऽपि पट एव, प्रसारणे तु स्पष्टतया गृह्यत एव, तथा तिरोभावावस्थायामनभिव्यक्तमपि कार्यं नामरूपाभ्यामगृह्यमाणमपि सदेव। आविर्भावावस्थायां तु प्रत्यक्षागमाभ्यां सत्त्वेन स्पष्टं गृह्यते। इतिसूत्रार्थः।**

**ननु जगन्मिथ्या। दृश्यत्वात्। शुक्तिरजतवदित्यनुमानं जगदसत्त्वे प्रमाणमिति चेन्न। दृश्यत्वस्य हेतोः साध्याभाववति ब्रह्मणि अतिव्याप्त्यासाधारणानैकान्तिकत्वेन हेत्वाभासकत्वात्।**

### कुञ्चिका

विश्वस्यासद्रूपत्वेऽनुमानमाशङ्कते ! नन्विति। अत्रेदं बोध्यम् ब्रह्मज्ञानेतराबाध्यत्वेसति सत्त्वेन प्रतीत्यर्हत्वेसति चिदन्यत्वेन पक्षत्वम् नातः पक्षासम्भवः शुक्तिरूप्ये सिद्धसाधनवारणायाद्यं विशेषणम् इतरविशेषणद्वयन्तु तुच्छे ब्रह्मणि च बाधवारणायेति। अत्र यदि मिथ्यात्वं सत्वानधिकरणत्वं तदा निर्विशेषस्य शुद्धस्य ब्रह्मणोऽपि सत्त्वानधिकरणत्वाभ्युपगमात्तत्र व्यभिचार इत्याशयेनोक्तानुमानं परिहरति नेति।

साध्योऽपिदुर्निरूप्य स्तथाहि साध्यमत्र मिथ्यात्वं तच्च सत्यं वा तुच्छं वा। आद्येऽद्वैतभङ्गः द्वितीये मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्य सत्त्वापत्तिरित्यन्यत्रविस्तरः॥

### भाषानुवाद

पटवच्च० २। १। १६॥ जैसे वस्तु को सङ्कुचित कर देने पर उसका स्पष्ट रूपसे

ग्रहण नहीं होता है परन्तु पट वस्तु सत् है। पट को फला देने से नाम और रूप सहित पट का प्रत्यक्ष प्रमाण से ग्रहण होता है। वैसे ही प्रलय काल में अव्यक्त नाम रूप वाले विश्व का ब्रह्म से पृथक् ग्रहण नहीं होता है। परन्तु विश्व सत् है। सृष्टि के समय व्यक्त नाम और रूप सहित विश्व का प्रत्यक्ष और आगम प्रमाण के द्वारा स्पष्ट ग्रहण होता है। यह सूत्रकार श्री वेदव्यासजी का सिद्धान्त है। प्रश्न—विश्व मिथ्या है दृश्य होने से जो दृश्य वस्तु है वह मिथ्या होता है जैसे शुक्ति में रूप्य मिथ्या है यह अनुमान प्रपञ्च के मिथ्यात्व में प्रमाण है। उत्तर - दृश्यत्व हेतु मिथ्यत्व के अभाव वाले ब्रह्म में अति व्याप्त हैं।

## वेदान्तरत्नमञ्जूषा

एवं दृश्यत्वाधिकरणसाम्यात् तेनव हेतुना ब्रह्मणोऽपि मिथ्यात्वं किमिति नाभ्युपगम्यते भवद्भिर्मनीषिभिः। ब्रह्म मिथ्या, दृश्यत्वात्, प्रपञ्चवदिति वक्तुं शक्यत्वात्। श्रूयते हि ब्रह्मणो दृश्यत्वम्—आत्मा वा अरे द्रष्टव्यः, यदा पश्यत्यन्यमीशम्, आत्मन्यरेदृष्टे दृश्यते त्वग्रया बुद्धया, सदा पश्यन्ति सूरयः, यत् तद्पश्यसि तद्वद, तमसः पारं दर्शयति, तस्मिन् दृष्टे परावरे इत्यादिभिः।

ननु न चक्षुषा गृह्यते नापि वाचा, नंसदृशे तिष्ठति रूपमस्य न चक्षुषा।

## कुञ्चिका

यथा दृश्यत्वहेतुना प्रपञ्चे मिथ्यात्वमनुमीयते तथा तद्धेतुना ब्रह्मण्यपि मिथ्यात्वमनुमातुं शक्यत इत्याह—एवमिति। ब्रह्मणदृश्यत्वसाधिकां श्रुतिमुदाहरति। आत्मावेति। न संदृश इति अस्यरूपं विग्रहं वा व्यापकत्वादेव सन्दर्शनविषयेऽभिमुखतया न तिष्ठतीत्यर्थः। अथवा दृश्यं नीलरूपादिकं नास्तीत्यर्थः। अत एव न चक्षुषा पश्यति कश्चन नैनमिति एतेन ब्रह्मणि दृश्यत्वं परिच्छिन्नं भवति तेनोक्तहेतोः स्वरूपासिद्धत्वमभिहितम्।

## भाषानुवाद

इससे उपदर्शित हेतु साधारण अनैकान्तिक हैं (व्यभिचार दोषयुक्त है) अतएव दृश्यत्व हेतु दुष्ट हैं। जो-जो वस्तु दृश्य है वे सब मिथ्या हैं इस प्रकार व्याप्ति स्वीकार करने पर ब्रह्म में भी मिथ्यात्व की प्रसक्ती प्राप्त हुई क्योंकि ब्रह्म में भी (आत्मा द्रष्टव्यः) इस श्रुति से दृश्यता सिद्ध है। यदा पशत्यन्यमीशमिति। जिस समय जीवात्मा अपने से भिन्न ईश्वर को देखता है। सूक्ष्म बुद्धि के द्वारा श्रीभगवान् को देखता है। नित्य पार्षद श्रीभगवान् को सर्वदा देखते हैं। यह सब श्रुतियों के द्वारा साबित होता है

कि परब्रह्म पुरुषोत्तम दृश्य है। ( वादी का प्रश्न ) परब्रह्म चक्षु और वाणी का विषय नहीं है। परमात्मा को चक्षु से कोई भी नहीं देख सकता है।

## वेदान्तरत्नमञ्जूषा

**पश्यति कश्चनैनं, तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः, यं नदेवा न मुनयो न चाहं नच शंकरः, जानन्ति परमेशस्य तद्विष्णोः परमं पदमित्यादि श्रुतिस्मृतिभ्यो निर्गुणस्य ब्रह्मणः सर्वप्रमाणाविषयतया स्वप्रकाशत्वाभिधानाच्च तवोदाहृतवाक्यविषयस्य ब्रह्मणो मायावच्छिन्नत्वावगमादवरत्वमभ्युपगम्यते। तथाभूतस्य मिथ्यात्वमिष्टापन्नमेवेतिचेन्न। दर्शनविषयस्यैव परत्वाभिधानात्। स एवास्माज्जीवाघनात् परात् परं पुरुषमीक्षते, ततस्तु तं पश्यति निष्कलं ध्यायमानः, प्रधानपुरुषाव्यक्तकालानां परमं हि यत्।**

## कुञ्चिका

ब्रह्मणि निर्गुणत्वबोधिकां श्रुतिं प्रमाणयति तत्र य परमात्मेति। निर्विशेष चिन्मात्रे ब्रह्मणि न कस्यापि प्रमाणस्य प्रवृत्तिः प्रमाणानां सविशेषवस्तुविषयकत्वात्। "यतो वाचो निवर्त्तन्ते" इत्यादिश्रुत्या शब्दाविषयत्वस्यापि डिण्डिमायमानत्वात्। ब्रह्मणः स्वप्रकाशतया नित्यसिद्धत्वान्न तत्र प्रमाणानां प्रवृत्तिरित्यर्थः॥ यद्येवं तदोक्तवाक्यानां किं विषयत्वमित्यत आह। तवोदाहृतवाक्यविषयस्येति। "तथा भूतस्य" माया शबलस्य, तथाचमायाशबलस्य बुद्धिवृत्तिविषयत्वाभ्युपगमान्ननिर्गुणस्य निर्विशेषस्य, मायाशबलस्य तु दृश्यत्वमिथ्यात्वयोरिष्टापन्नत्वादस्माकमित्यर्थः। परस्यैव ब्रह्मणो दर्शनयोग्यत्व विधानान्नोक्त सिद्धान्तस्य साधीयस्त्वं प्रमाणवत्वञ्चेत्याशयेन परिहरति नेति॥

## भाषानुवाद

परमात्मा नित्य और निर्गुण है। जिस परमात्मा को देवता और मुनि चतुर्मुख महादेव भी नहीं जानते हैं वह विष्णु भगवान् का परम पद ( वैकुण्ठ स्थान ) है। उपदर्शित श्रुति और स्मृति के द्वारा यह निर्धारण होचुका कि निर्गुण परब्रह्म ज्ञान का विषय है। प्रश्न—उपदर्शित दृश्यत्व बोधक श्रुतियों का विषय माया वच्छिन्न ब्रह्म है उसको मिथ्यात्व मानना हमें इष्ट है। उत्तर—परात् परब्रह्म ही दर्शन का विषय है। "स एवास्माज्जीघनात् परात् परं पुरुष मीक्षत इति" इन श्रुतियों से यह निर्धारण होता है कि जीव और प्रकृति से पर पुरुषोत्तम भगवान् ही दर्शन का विषय है। जो पुरुष भगवान् का अनुक्षण ध्यान करता है वह भक्त उसको देखता है। नित्यपार्षद गण प्रकृति और पुरुष अव्यक्त काल से पर पुरुषोत्तम भगवान् को देखते हैं।

## वेदान्तरत्नमञ्जूषा

पश्यन्तिसूरयो नित्यं तद्विष्णोः परमं पदमित्यादिश्रुतिस्मृतिभ्य, उक्त-श्रुतीनां दर्शनानर्हचक्षुरादिनिषेधविषयकत्वान्नैराकाङ्क्ष्यं व्याख्येयम्। तथाच-गीतं स्वयमेव भगवता—नतु मां शक्यसे द्रष्टुमनेनैवस्वचक्षुषा। दिव्यं ददामि तेचक्षुःपश्य मे योगमैश्वरमिति। तस्मादसद्धेतुकमिदमनुमानं न प्रमाणपदवीमा-रोढुमर्हतीत्युक्तसिद्धान्तस्यैव वरीयस्त्वं मुमुक्षुभिर्ध्येयम् अलंविस्तरेण ॥४॥

एवमखिलाविद्यादिदोषगन्धस्पर्शानर्हस्यानन्ताचिन्त्यस्वाभा–

## कुञ्चिका

जीवघनादिति। अविद्या कर्मसंज्ञान्या तृतीयाशक्तिरिष्यते यथा क्षेत्रज्ञशक्तिः सावेष्टितेत्युक्तकर्मवेष्टनावृतो जीवो घन इत्युच्यते एतस्माज्जीवघनात्परात्परमिति च परमात्मन एव व्यपदेशो न चतुर्मुखस्य तस्यापि जीवघनशब्दगृहीतत्वात। यस्य हि कर्मनिमित्तं देहित्वं स जीवघन इत्युच्यते चतुर्मुखस्यापि तच्छ्रूयते यो ब्रह्माणमिति। कवयः सूरयः सूरिभिर्दृश्यं च वैष्णवं पदमेव तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इत्यर्थः। ईक्षतिकर्मपरमात्मा कुतोऽव्यपदिश्यते। व्यपदिश्यते हीक्षतिकर्मपरमात्मत्वेन तथा-हीक्षतिकर्मविषयतयोदाहृते श्लोके तमोङ्कारेणैवायतनत्वेनान्वेति विद्वानयत्तच्छान्तमजर-ममृतमभयं परं शान्तं मजरमभयममृतमिपरात्मन एवैतद्रूपम् नतु मायावच्छिन्नस्येति भावः। निषेधश्रुतीनां दर्शनयोग्यचर्मदृष्टिविषयकदर्शननिषेधपरत्वेन नैराकाङ्क्ष्यमित्याह—उक्तश्रुतीनामिति।

## भाषानुवाद

जो श्रुति भगवान् को दर्शनानर्ह बतलाती हैं उन्हों का तात्पर्य यह है कि भगवान को प्राकृत नेत्र के द्वारा जीव ग्रहण कदापि नहीं कर सकता है किन्तु दिव्य चक्षु से ही भगवान का प्रत्यक्ष होता है यह वार्ता श्रीमद्भगवद्गीता में स्पष्ट है "नतुमांशक्यसे द्रष्टुमनेनैवचक्षुषा। दिव्यं ददामि ते चक्षुः पश्यमेयोगमैश्वरमिति। हे अर्जुन! इस चम चक्षु के द्वारा तू मेरे को नहीं देख सकता है इससे दिव्य चक्षु का प्रदान तुमको मैं करता हूँ इस दिव्य चक्षु से मेरे ऐश्वर्य को तू देख उक्त श्रुतियों के द्वारा यह साबित हो चुका कि परात्परब्रह्म ही दिव्य नेत्र का विषय है अतएव जगत मिथ्या दृश्यत्वात्। इस अनुमान में व्यभिचार दोष है क्योंकि दृश्यत्व हेतु परब्रह्म में विद्यमान है उसमें मिथ्यात्व नहहै। अतएव सत्कार्य वाद सिद्धान्त श्रेष्ठ है।

वेदान्तरत्नमञ्जूषा

विकककल्याणगुणसागरस्य परब्रह्मभूतस्य श्रीपुरुषोत्तमस्य भगवतः सर्वजगज्जन्मादिकारणत्वं सर्वशास्त्रवेद्यत्वं सर्वोपास्यत्वं मोक्षप्रदातृत्वं मुक्तोपसृप्यत्वं प्रतिपाद्य, इदानीं श्रीश्चते लक्ष्मीश्चते पत्न्यावहोरात्रे पार्श्वे,इत्यादि-श्रुत्युक्तलक्ष्म्यादिवैशिष्ट्यं विधत्ते —

अङ्गे तु वामे वृषभानुजां मुदा।
विराजमानामनुरूपसौभगाम् ॥
सखी सहस्रैः परिषेवितां सदा।
स्मरेम देवीं सकलेष्टकामदाम् ॥५॥

अङ्ग इत्यादिना। वयमुक्तलक्षणस्याघटघटनापटुतराचिन्त्यानन्तविचित्रशक्तिमतो भगवतः श्रीकृष्णस्य वामाऽङ्गेनुरूपसौभगां लक्ष्मीं रुक्मिण्याख्यां सदा स्मरेम इत्यन्वयः। अनुरूपत्वं नाम भगवद्विग्रह गुणाद्युपमेयविग्रह गुणादिमत्त्वम्। अनुरूपासामौ सौभगा च ताम् इति विग्रहः। तथाच स्मर्यते श्रीपराशरेण—देवत्वे देवदेहेयं मानुषत्वे च मानुषी। विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुमिति।

कुञ्चिका

उक्तार्थं श्रीमुखवचसा द्रढयति। तथाचेति। निगमयति तस्मादिति। असद्धेतुकमिति। जगन्मिथ्या दृश्यत्वादिति प्रयोगे दृश्यत्वंहेतुरनैकान्तिकमित्यर्थः।

उक्तसिद्धान्तस्येति दर्शनविषयस्यैवपरत्वं विधीयते, इति सिद्धान्तस्य साधीयस्त्वं प्रमाणवत्त्वञ्चेत्यर्थः॥ इति तुर्य्य श्लोकस्य व्याख्या ४।

अग्रिमश्लोकमवतारयितुमाह। एवमखिलेति। अस्यश्लोकस्यातिरोहितार्थ कत्वान्नव्याख्यायते।

भाषानुवाद

सब दोष सम्बन्ध शून्य, अचिन्त्य अनन्त स्वाभाविक कल्याण गुण सागर, जगत् की सृष्टि स्थिति और प्रलय का कारण, सब शास्त्र के द्वारा वेद्य, सबों का उपास्य मोक्ष का दाता, मुक्त जन प्राप्य, परब्रह्म, श्रीपुरुषोत्तम भगवान् हैं उपदर्शित ग्रन्थ द्वारा यह विषय प्रतिपादन किया।

अब लक्ष्मी और श्री गोपादिकों का नित्य सम्बन्ध पञ्चम श्लोक द्वारा प्रतिपादन करते हैं।

अङ्गे तु वामे वृषभानुजां मुदेति । अचिन्त्य अनन्त शक्ति भगवान् श्रीपुरुषोत्तम श्रीकृष्णचन्द्र के वाम भाग में समान गुण रूप युक्त रुक्मिणी नाम लक्ष्मी विराजमान हैं उसका स्मरण कर्त्तव्य है । अनुरूपत्व नाम जिसके गुणों की तुलना श्रीकृष्ण के गुण के द्वारा ही हो सकती हैं । यह वार्ता विष्णु पुराण में स्पष्ट है । देवता में देवता विग्रह-मयी लक्ष्मी है । दिव्यमङ्गल नराकृति भगवान् जिस समय आविर्भाव होते हैं उस समय आनन्द रूप नराकार लक्ष्मी का भी आविर्भाव होता है । भगवान के विग्रह के अनु-रूप यह लक्ष्मी रूप को धारण करती हैं । रघुवंशी रामावतार में श्रीसीताजी श्रीकृष्णा-वतार में श्रीरुक्मिणीजी हुई । और अन्य अवतारों में भी विष्णु भगवान् की अनपा-यिनी लक्ष्मी हैं ।

### वेदान्तरत्नमञ्जूषा

राघवत्वेभवेत्सीता रुक्मणी कृष्ण जन्मनि । अन्येषुचावतारेषु विष्णो-रेषाऽनपायिनीति । कीदृशीमित्यपेक्षायां विशिनष्टि–देवीमिति । देवस्य गायत्री-मन्त्रप्रतिपाद्यस्य सर्व शास्त्रार्थभूतस्य श्रीवासुदेवस्य पत्नी देवी तां, श्रियं देवी-मुपाह्वये इत्यादि श्रुतेः। अनेन योग वृत्त्या तद्गुणा उच्यन्ते । तथाहि । दीव्यति क्रीडति अनेकावतारैरिति देवी । विष्णोर्देहानुरूपां वै विधत्ते ह्यात्मनस्तनुम् इति । १ । दीव्यति विजिगीषते देवादीन शीलादिगुणद्वारेणेति वा । "सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः । पराङ्मुखीजगद्धात्री यस्य त्वं विष्णु-वल्लभे" इति । २ । दीव्यति व्यवहरति तत्तत्प्रकारेण चेति वादेवी ।

### भाषानुवाद

वासुदेव भगवान् की पत्नी है । इस अर्थ में "श्रियंदेवीमुपाह्वये" यह श्रति प्रमाण हैं लक्ष्मी देवी का हम आवाहन करते हैं यह उक्त श्रुति का अर्थ हैं । योग वृत्ति से देवी शब्द के अर्थ इस प्रकार होते हैं कि जो अनेक अवतार द्वारा क्रीडा करती है और अपने शील सौन्दर्य गुणों के द्वारा देवताओं की पराजय करने वाली है उस को देवी कहते हैं । सद्यो वैगुण्यमायान्ति शीलाद्याः सकलाःगुणा इति यह श्रुति उक्त अर्थ में प्रमाण हैं । अनेक रूप और अनेक तरह से जो व्यवहार करती है उसे देवी कहते हैं ।

### वेदान्तरत्नमञ्जूषा

"अर्थो विष्णुरियं वाणी नीतिरेषा नयोहरिः । बोधाविष्णुरियं बुद्धिर्ध-र्मोऽसौसत्क्रियात्वियम्" इति । ३ । द्योततेस्वरूपेण गुणैश्चेति वा देवी । ईश्वरीं सर्वभूतानां, यशसाज्वलन्तीं श्रियं लोके देवजुष्टामुदारामिति श्रुतेः । ४ ।

स्तूयते देवैरितिवा । "नमस्ये सर्वभूतानां जननीमब्जसंभवाम् । श्रियमुन्निद्र-पद्माक्षीं विष्णोर्वक्षस्थलाश्रिताम्" इत्यारभ्य, नेत वर्णयितुं शक्ता गुणान् जिह्वापिवेधसः । प्रसीद देवि पद्माक्षिमास्माँस्त्याक्षीः कदाचनेत्यन्तेन स्तोत्रेण अन्यैश्चेति । ५ । सर्वत्र गच्छतीतिवा । "नित्यैव सा जगन्माता विष्णोः श्रीरनपायिनी ।

## कुञ्चिका

तयोः सर्वात्मकत्वमनपायित्वञ्चोपपादयति । अर्थ इति । अर्थ शब्दवाच्यः विष्णुः । वाणी अर्थाभिधायिकावाक् इयं श्रीः नीतिर्न्यायशास्त्रम् । नयो न्यायः । बुद्धि-रध्यवसायात्मकमन्तःकरणं तत्कार्यो निश्चयो बोधः सत्क्रिया यागादिः । धर्मस्तदुत्पाद्य-मदृष्टमित्यर्थः । नित्येति । जगत्पितुर्विष्णोरनपायिन्येषा जगन्मातृत्वेन तद्वन्नित्या तस्याश्चविष्णोरिवाविर्भावतिरोभावौ स्तः । सापूर्वं भृगोः सुतात्वेनाविर्भूता पश्चादिन्द्रस्य दुर्वाससश्शापात्तिरोभूत्वाऽमृतमथने प्रादुर्भूता अतो न विरोधः । यथेति सर्वगतो विष्णु-र्यथा यत्स्वभाव इयमपि तथा तत्स्वभावेति विष्णोः सर्वगतत्वसत्यज्ञानादिस्वरूप कल्याणगुणादीनामतिदेशइत्यर्थः ॥

## भाषानुवाद

विष्णु अर्थ है यह वाणी है । श्रीविष्णु न्याय हैं लक्ष्मी नीती हैं भगवान बोध रूप हैं यह बुद्धि रूपा है । श्री विष्णु धर्म है यह सत्क्रिया है । जो गुणों के द्वारा प्रकाश करती हैं उसे देवी कहते हैं । सर्व भूतों की ईश्वरी हैं । अपने यश द्वारा लोक में विख्यात हैं । सब देवता आपकी स्तुति करते हैं । इससे देवी कहलाती है । "नमस्ये सर्वभूतानामिति ।" यह श्रुति प्रमाण हैं । सवत्र जो व्याप्त हैं सो देवी हैं लक्ष्मी जग-न्माता नित्य हैं । जैसे सर्वगत विष्णु हैं वैसे लक्ष्मी सर्वगत हैं ।

## वेदान्तरत्नमञ्जूषा

यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तमाः । त्वयैव विष्णुनाचाऽम्ब जगद्व्याप्तं चराचरम्" इति । ६ । मोदते वेति । आनन्दमूर्तित्वादानन्दमूर्त्त्याश्रितत्वाच्च । सूर्य्यां हिरण्मयीं, ईश्वरीं सर्वभूतानामिति श्रुतेः" । ७ । पुनः कीदृशीं—सखीसहस्रैः परिषेवितां सदेति । सखीनां स्वपरिचारिकाणां सहस्रै-रपरिमितैः सदा नित्यं सेविताम् । किञ्च । सेवनप्रयोजनं दर्शयन् विशिनष्टि—सकलेष्टकानदामिति सर्वेभ्यश्चतुर्विधेभ्यो भक्तेभ्यः पुरुषार्थ चतुष्टयं तत्तदिच्छा-

नुसारेण ददातीति तथा ताम्। "यज्ञविद्या महाविद्या गुह्यविद्याचशोभने। आत्मविद्या च देवी त्वं विमुक्तिफलदायिनी" इति स्मरणात्।

एवं लक्ष्म्या वैशिष्ट्यं विधाय व्रजस्त्रीशब्दवाच्यायाः, गोपीप्रधान भूतायाः श्रीवृषभानुजाया नित्ययोगं विधत्ते—वृषभानुजामिति। चकारोऽत्राध्याहर्तव्यः समुच्चयार्थम्। तथाच वृषभानुजां च स्मरेम इत्यन्वयः। ततः स्वरूपगुणादिद्योतनाय तां विशिनष्टि–वामांगे मुदा विराजमानामिति।

## भाषानुवाद

सहस्र परिचारिका सखी जिसकी सेवा में विराजमान हैं। सेवा का प्रयोजन यह है कि चतुर्विध भक्तों को इच्छा के अनुसार चतुर्विध पुरुषार्थ को प्रदान करने वाली है। उक्तार्थ को प्रमाण से पुष्ट करते हैं। यज्ञ विद्येति। श्री लक्ष्मीजी यज्ञ विद्या और महाविद्या गुह्यविद्या है आत्मविद्या है देवी भी है और मुक्ति फल की दाता आप ही हैं। इस प्रकार श्रीभगवान् श्रीकृष्णचन्द्रजी के सङ्ग श्रीलक्ष्मी श्रीरुक्मणी जी का सम्बन्ध विधान किया। अब श्रीव्रज गोपिकाओं में प्रधान भूत श्रीस्वामिनी उज्वल शृङ्गार रस की मूर्ति श्रीवृषभानुजा का आनन्दकन्द श्रीनन्दनन्दन के साथ नित्य सम्बन्ध है इस वार्ता को बतलाते हैं।

महा भावात्मक प्रेमाधिष्ठात्री श्रीवृषभानुजा को नित्य स्मरण हम करते हैं श्रीराधिकाजी के स्वरूप और गुणों का परिचय बतलाते हैं। स्वयं भगवान् श्रीकृष्णचन्द्र के वाम अङ्ग में सर्वदा आनन्द से विराजमान है।

## वेदान्तरत्नमञ्जूषा

वमाङ्ग इत्यस्य पूर्वं, श्रीभगवत इति शब्दोऽध्याहर्तव्यः। अङ्गस्याङ्गि सापेक्षत्वात्, श्रीभगवतो वामाऽङ्गे विराजमानाम्। वामाङ्ग शब्दप्रयोगादस्या लक्ष्मीवत् पत्नीत्वम् अनपायित्वं च दर्शितम्। मुदा निरतिशयप्रेमानन्दमूर्त्या। एतेनास्याः प्रेमाधिष्ठातृत्वं सूच्यते। विराजमानाम् विशेषेण स्वरूपेण विग्रहेण प्रेमकारुण्यादि गुणैश्च राजते दीप्यते इति तथा ताम्। तथा चाम्नायते ऋक्परिशिष्टश्रुतौ–राधया माधवो देवो माधवेन च राधिका विराजत इत्यादि।

## भाषानुवाद

यहाँ पर वामाङ्ग शब्द से यह सूचित किया कि श्रीलक्ष्मीजी के समान प्रेमा-

धिष्ठात्री निरतिशय प्रेमानन्द मूर्ति श्रीराधिकाजी आपकी अनपायिनी पत्नी हैं। विराजमानाम् इस पद का यह भाव है कि माधुर्य सौन्दर्य मार्दव लावण्यमय श्रीराधिकाजी का स्वरूप अर्थात दिव्यमङ्गल विग्रह उससे और प्रेम कारुण्यादिगुणों से सर्वदा देदीप्यमान हैं। इस अर्थ में राधया माधवा देवो। यह ऋक् परिशिष्ट श्रुति प्रमाण है। प्रेम की पराकाष्ठापन्न श्रीराधा सहित श्रीमाधवदेव और माधव श्रीकृष्णचन्द्र सहित श्रीराधिका विराजते हैं। इस श्रुति के द्वारा यह निर्धारित किया।

## वेदान्तरत्नमञ्जूषा

अनयैवश्रुत्या अन्योऽन्यमाहित्यविधानपरया नित्यसम्बन्धः प्रेमोत्कर्षश्चोक्त इति भावः। यद्यप्यनयोर्मध्ये ऐश्वर्याधिष्ठातृत्वेन लक्ष्म्याः प्राधान्यात् तस्या एव पूर्वं प्रयोग उचितस्तथापि ब्रजस्त्रियः प्रेमाधिष्ठातृतया तच्चरणस्मरणस्य प्रेमदातृत्वात् पूर्वप्रयोगः। "कृष्णात्मिका जगत्कर्त्री मूलप्रकृति रुक्मिणी। व्रजस्त्रीजनसंभूतश्रुतिभ्यो ब्रह्म संगत" इति मन्त्रात्। जनेषु संभृताः प्रसिद्धा याः श्रुतयस्ताभ्यः प्रमाणभूताभ्य आभ्यां रुक्मणी व्रजस्त्रीभ्यां श्रीगोपालाख्यस्य ब्रह्मणः संगतः नित्यसंबन्ध इति मन्त्रार्थः उपलक्षणाऽर्थोऽयं सत्यभामायाः। तथाच रुक्मिणीसत्यभामाब्रजस्त्रीविशिष्टः श्रीभगवान् पुरुषोत्तमो वासुदेवः साम्प्रदायिभिर्वैष्णवैः सदोपासनीयः। द्विभुजश्चतुर्भुजश्च स्वप्रीत्यनुरूपेणोभयविधत्वात् तस्य नात्र तारतम्य इतिभावः। ध्यातृभावनायाः एवात्र नियामकत्वात्। तथाच, मथुरायां विशेषेण मां ध्यायन् मोक्षमश्नुते इत्यारभ्य, श्रीवत्सलांछनं हृत्स्थकौस्तुभप्रभयायुतम्। चतुर्भुजं शंखचक्रशार्ङ्गपद्मगदान्वितम्। हिरण्मयं सौम्यतनुं स्वभक्तायाभयप्रद ध्यायेन्मनसि मां नित्यं वेणुशृङ्गधरं तु वेति। सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरं। द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम्। गोपीगोपगवावीतं सुरद्रुमलताश्रयम्। दिव्यालङ्करणोपेतं रत्नपङ्कजमध्यगम्। कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम्। चिन्तयँश्चेतसा कृष्णं मुक्तोभवति संसृतेरित्युभयविधस्यापि ध्यानस्य मोक्षहेतुत्वश्रवणादुभयस्य तुल्यफलत्वाद् ध्येयत्वाऽविशेष इति सांप्रदायसिद्धान्तः॥५॥

इति श्रीभगवत् पुरुषोत्तमाचार्य विरचितायां वेदान्तरत्नमञ्जूषायां

सिद्धान्तरत्नविवृतौ पदार्थ संग्रहाधारो नाम

प्रथमा कोष्ठिका॥१॥

## भाषानुवाद

दोनों का परस्पर में साहित्य और नित्य सम्बन्ध। और निरतिशय प्रेम का उत्कर्ष सर्वदा है। निरतिशय प्रेमाधिष्ठात्री श्रीराधिका के अनवरत चरणारविन्द स्मरण करने से दुर्लभ प्रेम की प्राप्ति होती है। अतएव आपके श्रीचरणों का स्मरण अनवरत साधक को करना उचित है।

कृष्णात्मिकेति। जो श्रीरुक्मिणी श्रीकृष्णचन्द्र की पत्नी है वह श्रीकृष्ण स्वरूप है क्योंकि शक्ति शक्तिमान का अभेद है वह श्रीकृष्ण के अन्तर्गत होने से प्रणव पद का वाच्य है अतएव जगकर्त्री है मूलभूत प्रकृति परा शक्ति है यद्वा प्रकृति जो त्रिगुणात्मक हैं उसका भी मूल कारण है। जो महाभाव लीलामयी परमप्रेमाधिष्ठात्री ब्रजस्त्री शब्द वाच्य प्राणप्रिया श्रीराधाजी का नित्य सम्बन्ध आनन्दकन्द श्रीनन्दनन्दन वेणुधारी श्रीगोपाल वेषधारी श्रीकृष्णजी के साथ है। यह बात श्रुति स्मृति पुराणों में प्रसिद्ध है।

"राधया माधवो देवो माधवेन च राधिका विराजते। यह ऋक् परिशिष्ट की श्रुति उपदर्शित अर्थ में प्रमाण है। "यथा राधा प्रिया विष्णोस्तस्याः कुण्डं तथा प्रियम्। सर्व गोपीषु सैवेका विष्णोरत्यन्तवल्लभा" इस पद्म पुराण के वचन भी उक्तार्थ को प्रमाणित करता है।

अथर्ववेदीय श्रीगोपाल तापनी के उक्त वचन से ऐश्वर्याधिष्ठात्री श्रीरुक्मिणी जी तथा परम प्रेमाधिष्ठात्री श्रीभानुनन्दनीजी का नित्यसम्बन्ध श्रीकृष्णचन्द्र के साथ श्रीग्रन्थकार ने बतलाया। श्रीकृष्ण चरित्र तीन भागों में विभक्त हैं एक ब्रजलीला दूसरी मथुरा लीला तीसरी द्वारका लीला है श्रीद्वारिका लीला में परमैश्वर्याधिष्ठात्री श्रीलक्ष्मी रूपा श्रीरुक्मिणीजी का नित्य सम्बन्ध श्रीद्वारकाधीश श्रीकृष्णचन्द्रजी के संग है। परम प्रेमाधिष्ठात्री परम प्रिया श्रीभानुजा श्रीराधिकाजी का नित्यसम्बन्ध श्रीगोपाल वेशधारी परम प्रीत्यास्पद नटवर वपु श्रीकृष्ण के संग है। हिरण्मयं सौम्यतनुं स्वभक्ताया-भयप्रदम्। ध्यायेन्मनसि मां नित्यं वेणुश्रृङ्गधरन्तुवेति। गोपी गोपगवावीतं सुरद्रुमलता-श्रयम्। दिव्यालङ्करणोपेतं रत्नपङ्कजमध्यगम्॥ कालिन्दीजलकल्लोलसङ्गिमारुतसेवि-तम्। चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः। इन वचनों से यह निश्चित होता है कि वेणु श्रृंगधारी का ध्यान करें। सुन्दर पुण्डरीक कमल के समान नेत्र जिसके श्याम घन के समान कान्ति वाले विद्युत् (अर्थात् विजली) के समान अम्बर धारी द्विभुज स्वरूप ज्ञान मुद्रा से सम्पन्न वनमाला धारी स्वप्रिय गोपी तथा गोप गो द्वारा वेष्टित

श्रीकल्पद्रुम तल में स्थित दिव्यालंकारसम्पन्नरत्नपङ्कजमयवेदि में स्थित कालिन्दी जल की तरङ्गसङ्गि वायु सेवित श्रीनन्दनन्दन ब्रजराज कुमार का ध्यान करें।

श्रीमथुरा में चतुर्भुज स्वरूप शङ्खचक्र धारी का ध्यान करें उत्तर तापनी में यह वार्ता कही हैं साधक भक्तों को अपनी भावना के अनुसार जिस रूप में मन लगे उस स्वरूप का ध्यान करना उचित है। और इस विषय में रहस्यार्थ बातों का ज्ञान आचार्यों के प्राचीन ग्रन्थों के द्वारा होता है ॥ ५ ॥

इति श्रीभगवत्पुरुषोत्तमाचार्य्य विरचित वेदान्तरत्न मञ्जूषा भाषायां

सिद्धान्तरत्न विवृत्तौ पदार्थ संग्रहाधारोनाम

प्रथमा कोष्ठिका ॥१॥

॥ श्रीराधासर्वेश्वरो विजयते ॥

॥ भगवन् श्री निम्बार्काचार्याय नमः ॥

# श्री निम्बार्क ज्ञान कोश

(श्रीनिम्बार्क सम्प्रदाय के सिद्धान्त , उपासना , साहित्य, इतिहास,समाज को देन एवं साधकों की जिज्ञासा समाधान कोश )

संस्थापना–श्री निम्बार्क जयन्ति वि.स. 2073 तदनुसार 14 नवम्बर 2016

संचालक मण्डल - श्री जयकिशोर शरण जी

श्री हरिदास जी (9997374430)

डा.राधाकान्त वत्स(9268889017)